

॥ श्रीलक्ष्मीवेंकटेश्वराय नमः ॥

# स्मृतिरत्नाकरः

नाम

## धर्मशास्त्रम् ।

श्रीमद्धारीतकुलतिलकैर्वैदिकसार्वभौमैः श्रीमद्वेंकटनाथार्यैः अखिलवैदिककर्मानुष्ठानसौकर्याय विरचितम् ।



तच्च

श्रीकृष्णदासात्मज-गंगाविष्णुना

पण्डितैः संशोध्य

स्वकीये "लक्ष्मीवेंकटेश्वर" मुद्रणालये

मुद्रयित्वा प्रकाशितम् ।

शकाब्दाः १८२०, संवत् १९५५

कल्याण-मुंबई.

## भूषण आदि संस्कृत टीकात्रयसमेत वाल्मीकीयरामायण.

महाशयो ! देखो इस अपूर्व भूषणटीकाकी पांडित्यशैली, सुगमता, विचारचातुर्य आदि सब अद्भुत गुण कैसे चमकते हैं. देखो 'भूषण' यह नामभी कैसा अन्वर्थ रखा गया है जिसके श्रवणमात्रसेही कल्पना होती है कि रामायण रूपी भगवान् रामचंद्रजीकी मूर्तिको टीकारूपी अलंकारोंसे अलंकृत किया है. और ऐसीही टीकाकारने कल्पना कर रचना की है. देखो—कि उक्त भगवान्‌के बालकांडरूपी पादको टीकारूपी मणिमंजरि (पायजेब), अयोध्याकांडरूपी जघनको पीतांबर, अरण्यकांडरूपी कटिको रत्नमेखला (कोंदनी), किष्किंधाकांडरूपी हृदय और कंठको मुक्ताहार (मोतियोंका कंठा), सुंदरकांडरूपी ललाटको शृंगारतिलक, युद्धकांडरूपी शिरको रत्नकिरीट और उत्तरकांडरूपी ऊपरके भागको मणिमुकुट इस तरह ये गहने अर्पणकर रामायणरूपी भगवानको सजाया है. तो इस व्याख्यामें क्या कम है कुछ नहीं फिर लेनेमें क्या हरज है झट लीजिये और उसका पाठ कर अपना जन्म कृतार्थ कीजिये. यह २५ रुपये कीमतका पुस्तक लेनेवालोंको भगवद्गुणदर्पण भाष्य आदि व्याख्यात्रय समेत विष्णुसहस्रनाम (१२००० ग्रंथ) भेंट (किफायत) में मिल जाता है।

## श्रीविष्णुसहस्रनाम.

पाठको ! यह ग्रंथ कितना अमूल्य है कि जिसमें एक २ नामपर श्रुति, स्मृति, पुराण, व्याकरण आदि प्रमाण वचनोंसे बढाकर दो दो सफेतक भगवानके गुण गाये हैं. ऐसे पुस्तकको विद्वान् न देखे तो अन्य कौन देख सक्ता है यह ग्रंथ बहुतही बडा होनेपरभी ५ रुपयेमें देता हूं लीजिये और सुप्रसन्न हूजिये।

| | | | |
|---|---|---|---|
| नृसिंहपचाशिका भाषा ... | ०—२ | मासाचिंतामणि भा० टी० | ०—३ |
| मयूर चित्रक भाषाटीका... | ०—६ | संवत्सरफलदीपिका ... | ०—३ |
| ग्रहगोचर ज्योतिष भाषाटीका | ०—२ | दत्तकारुण्यलहरी भा०टी० | ०—३ |
| बृहत्संहिता भाषाटीका ग्लेज | ४—० | मैत्रीधर्मप्रकाश भाषाटीका | ०—४ |
| „ रफ् ... | ३—८ | ज्योतिःशास्त्र निघंटु ... | ०—४ |

॥ श्रीः ॥

# निवेदनम्.

विद्रांकुर्वन्तु तत्रभवन्तः सहृदया धर्मशास्त्रकोविदाः । अस्मिन् किल भारते वर्षे पूर्वं नानाविधसंस्कृतविद्यापारावारपारीणा बहवो विद्वांसः समभवन् । येच श्रुतिस्मृति-पुराणेतिहासादिभ्यः परमदुरूहेभ्यस्तत्तद्विषयप्रतिपादकानि वचनान्युद्धृत्य स्वर्गापवर्ग-दधर्माचारज्ञानसौकर्याय विविधान्निबन्धान् न्यबध्नन् । येषां निबन्धाना दिवाकराकिर-णानामिव सकलतमस्ततिविलोपकानामद्यावध्यव्याहतः प्रचारो जगतीतले संदृश्यते । येषां च परिशीलनेन धर्माचारान् विज्ञायान्वतिष्ठन्तोपादिशंश्चाधुनिकविद्वांसोऽतद्विदो लोकान् । संप्रति तु लोकानामालस्यपिशाचग्रस्ततया तादृशां ग्रंथाना लुप्तप्रायता-विभूता । अत एवेतस्ततो मुद्रणयंत्राणि विलसन्ति । अस्तु, शिरोनिर्दिष्टविषयनिबन्धेषु शिरोभूतोयं यथार्थनामा स्मृतिरत्नाकरो नाम धर्मशास्त्रग्रन्थोऽस्मिन्नुत्तरदेशे सर्वथाऽप्र-सिद्ध इत्यालोच्यैतद्देशीयानां लाभाय स आंध्रदेशात् बहुश्रमेण बहुद्रव्यव्ययेन चानीय संशोध्य च मत्प्रतिष्ठापिते लक्ष्मीवेंकटेश्वराख्ये यन्त्रालये मुद्रितः । अयं च प्रायः सर्वे-मतस्थजनादरणपात्रं भवेदिति निश्चिनोमि, केवलमस्य श्रुतिस्मृत्याद्युक्तधर्मविषयत्वा-त् । अत्र च संज्ञाऽऽह्निकाऽभ्युक्षणनामधेयानि त्रीणि प्रकरणान्युपनिबद्धानि । तत्र प्रथमे संज्ञाप्रकरणे त्वेकनवतिसंख्याका विषयाः, द्वितीये चाह्निकप्रकरणे प्रबोधका-लमारभ्य सप्तसप्ततिसंख्याका विषयाः, तृतीयेऽभ्युक्षणप्रकरणे शयनविध्यन्ता षट्-षष्टिविषयाः श्रुतिस्मृत्यादिप्रमाणवचनोपन्यासरूपेण तद्घटकदुर्बोधशब्दव्याख्यास-हितेन सांगोपांगा निरूपिताः संति । तमिमं संगृह्य सफलयन्तु मत्परिश्रमं तत्त्वज्ञा इत्यलमधिकेनेति शम् ।

कृपाभिलाषी—

श्रीकृष्णदासात्मजो गङ्गाविष्णुः.

॥ श्रीः ॥

# स्मृतिरत्नाकरस्थविषयानुक्रमणिका.






# अनुक्रमणिका.






॥ श्रीः ॥

॥ श्रीरस्तु ॥

श्रीमल्लक्ष्मीवेङ्कटेशाय नमः ।

# अथ स्मृतिरत्नाकरप्रारम्भः ।

वर्णाश्रमाणां धर्माणां व्यवस्थात्रे युगे युगे ।
लीलयैव गृहीतेच्छावपुषे विष्णवे नमः ॥
यत्प्रेष्या ब्रह्मरुद्राद्या यदीयाज्ञाश्रुतिस्मृती ।
यः प्रभुर्जगतां तस्मै परस्मै हरये नमः ॥
सर्वान्तर्यामिने सर्वकर्माराध्याय विष्णवे ।
सर्वोत्तराय सर्वात्मशरण्याय नमो नमः ॥

यतो वचनरत्नानामाकरोऽयं तदुज्ज्वलः । स्मृतिरत्नाकरो नाम वक्ष्यते स्मृतिसंग्रहः ॥ न किंचिल्लिख्यते युक्त्या किंतु स्मृतिवचांसि हि । अतोऽयं निखिलैर्ग्राह्यः कृत्याकृत्यबुभुत्सुभिः ॥ सन्तो विदुरसारममत्सरास्ते सार्थोऽत्र यत्नो मम सन्मुदे सः । वेद्यांशपूर्णं सकलस्मृतीनां सारं बुधाः संग्रहमाद्रियध्वम् ॥ अयं भावः—मनुयाज्ञवल्क्यपराशरव्यासदक्षसंवर्तगौतमापस्तम्बकात्यायनबोधायनशातातपशाण्डिल्यहारीताश्वमेधिकादिस्मृतिभ्यः, विज्ञानेश्वरस्मृत्यर्थसारस्मृतिचन्द्रिकास्मृतिरत्नस्मृतिमाधवीयाखण्डादर्शस्मृतिसारसमुच्चयेतिहाससमुच्चयादिस्मृतिसंग्रहेभ्य', वचनरत्नानि संगृह्य अस्य कृतत्वेन, अत्रोक्तस्य सर्वस्य स्मृतिमूलत्वात्सारांशत्वाच्च, निर्विशङ्कमयं रत्नाकरो नाम स्मृतिसंग्रहो मात्सर्यमुत्सृज्य सदादरणीय इति ।

## ❀ अथ धर्मलक्षणम् ❀

अत्र " चोदनालक्षणोऽर्थो धर्मः " इत्यादिना चोदनैकप्रमाणको धर्म इत्युक्तम् । तस्य सामान्यलक्षणमाह मनुः—विद्वद्भिः सेवितः सद्भिः नित्यमद्वेषरागिभिः । हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥ अनेन ग्रन्थेन " ये तत्र ब्राह्मणाः संमर्शिनः" इत्युक्तश्रुत्यर्थ एवोक्तः । विश्वामित्रः—यमार्याः

क्रियमाणन्तु शंसन्त्यागमवेदिनः। स धर्मोयं विगर्हन्ते तमधर्मं प्रचक्षते॥ इति. आपस्तम्बः—"यत्त्वार्याः क्रियमाणं प्रशंसन्ति,स धर्मः।यद्गर्हन्ते,सोऽधर्मः" इति.-तथा विशेषमाह मनुः—धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः। ह्रीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥ इति. धृतिः-चित्तस्य स्थापनम्,क्षमा-अपकारेपि चित्तस्याविकारः, दमः-अन्तःकरणसंयमः, अस्तेयं-अदत्तानुपादानम्, शौचम्-बाह्याभ्यन्तरञ्च, इन्द्रियनिग्रहः-विषयेभ्यो निषिद्धेभ्य इन्द्रियाणां निवारणम्, ह्रीः-अकार्यनिवृत्तिः, विद्या-आत्मज्ञानम्, सत्यम्-यथार्थकथनम्, तत्तु प्रियमेव वक्तव्यम् ॥ तथाच मनुः— सत्यं ब्रूयात्प्रियं ब्रूयान्नब्रूयात्सत्यमप्रियम्। प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः॥ इति. अक्रोधः-कोपराहित्यम्, एतद्दशकं धर्मलक्षणम्, धर्मस्वरूपमित्यर्थः। अत्र पराशरः— न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम्। नासौ धर्मो यत्र न सत्यमस्ति न तत्सत्यं यच्छलेनानुविद्धम्॥ इति. व्यासः—सत्यं दमः तपः शौचं सन्तोषो ह्रीः क्षमार्जवम्। ज्ञानं शमो दया ध्यानमेष धर्मः सनातनः॥ इति. सत्यादीनां लक्षणं स एव आह-सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः। तपः स्वधर्मवर्तित्वं शौचं संकरवर्जनम्॥ सन्तोषो विषयत्यागो ह्रीरकार्यनिवर्तनम्। क्षमा द्वन्द्वसहिष्णुत्वमार्जवं समचित्तता॥ ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्रशान्तता। दया भूतहितैषित्वं ध्यानं निर्विषयं मनः॥ इति. तथा धर्मान्तराण्यपि स एवाह-दानं यज्ञः सतां पूजा वेदधारणमार्जवम्। एष धर्मः परो ज्ञेयो फलवान्प्रेत्य चेह च॥ इति. साधारणधर्मानाह याज्ञवल्क्यः—अहिंसा सत्यमस्तेयंशौचमिन्द्रियनिग्रहः। दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम्॥ इति. आत्मधर्मानाह गौतमः—"अथाष्टावात्मगुणाः। दया-सर्वभूतेषु, क्षान्तिः, अनसूया, शौचम्, अनायासः, मङ्गलम्, अकार्पण्यम्, अस्पृहा, इति यस्यैते खलु संस्काराणामेकदेशोऽप्यष्टावात्मगुणाः, अथ स ब्रह्मणः सायुज्यं सलोकतां गच्छतीति" क्षान्तिः-दुःखोत्पादेपि क्रोधाभावः, अनसूया-गुणेषु दोषानाविष्करणम्, शौचम्-अत्र बृहस्पतिः—अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः। स्वधर्मे च व्यवस्थानं शौचमेतत्प्रचक्षते॥ इति. अनायासः—शुभे कार्ये यथाशक्ति करणम्, मङ्गलम्-प्रशस्ताचरणम्, नित्यमप्रशस्तस्य वर्जनमित्युक्तम्। अकार्पण्यम्-बृहस्पतिः-स्तोकादपि हि दातव्यमदीनेनान्तरात्मना। अहन्यहनि यत्किंचिदकार्पण्यं तदुच्यते॥ इति. अस्पृहा—यथोत्पन्नैस्तु सन्तोषः कर्तव्यः स्वागतैर्धनैः। परार्थाभिलाषत्व साऽस्पृहा परिकीर्तिता॥ असाधारणधर्ममाह सुमन्तुः—वर्णत्वमेकमाश्रित्य यो धर्मः संप्रवर्तते। वर्णधर्मः स उक्तस्तु यथोपनयनात्किल॥ यस्त्वाश्रमत्वमाश्रित्य ह्यधिकारः प्रवर्तते। स एवाश्रमधर्मः स्याद्भिक्षात्तश्रोदितो यथा॥ वर्णत्वमाश्रमत्वं च योऽधिकृत्य प्रवर्तते। स वर्णाश्रमधर्मस्तु यथा मौञ्जी तु मेखला॥ यो गुणेन प्रवर्तेत गुणधर्मः स उच्यते। यथा मूर्धाभिषिक्तस्य प्रजानां परिपालनम्॥ निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्तते। नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा॥ इति.

## ❀ अथ श्रुत्यादीनां बलाबलचिन्ता ❀

तत्र मनुः—श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ। उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः॥ इति. स्मृत्योर्द्वैविध्ये तु विकल्प एव। तथा गौतमः—"तुल्यबलविरोधे विकल्पः" इति। श्रुतिस्मृत्योर्विरोधे स्मृतेर्बाधमाह लोकाक्षिः—श्रुतिस्मृत्योर्विरोधे तु श्रुतिरेव बलीयसी। अविरोधे तदा कार्यं स्मार्तं वैदिकवत्सदा॥ एवमाचारस्यापि स्मृतिविरोधे बाध एव। "श्रुतिस्मृतिविहितो धर्मः, तदलाभे शिष्टाचारः प्रमाणम्" इति वसिष्टस्मरणात्। एवं परिपद्वचनेपि द्रष्टव्यम्। तथाच चतुर्विंशतिमते—स्मृतेर्वेदविरोधेन परित्यागो यथा भवेत्। तथैव लौकिकं वाक्यं स्मृतिबाधात्परित्यजेत्॥ यत्र पुनर्मानवस्य स्मृत्यन्तरेण विरोधः तत्र मनुवचनमेव श्रेयः;यत्पूर्वं मनुना प्रोक्तं धर्मशास्त्रमनुत्तमम्। न हि तत्समतिक्रम्य वचनं हितमात्मनः॥ इति स्मृतेः।मनूक्तमतिक्रम्यान्यदीयं वचनमात्मनो हिताय न भवतीत्यर्थः। बृहस्पतिरपि—वेदार्थोपनिबन्धत्वात्प्राधान्यं तु मनोः स्मृतम्। मन्वर्थविपरीता तु या स्मृतिस्सा न शस्यते॥ श्रुतिश्च—"यद्वै किंच न मनुरवदत्तद्भेपजम्" इति। यत्र पुनर्धर्मद्वयविरोधस्तत्र लघुधर्मस्यैव बाध इत्याह व्यासः—धर्मं यो बाधते धर्मो न स धर्मः कदाचन। अविरोधी तु यो धर्मस्स धर्मस्सद्भिरुच्यते॥ तस्माद्विरोधे धर्मस्य विचार्य गुरुलाघवम्। यतो भूयस्ततो विद्वान् कुर्याद्धर्मविनिर्णयम्॥ इति.

## ❀ अथ धर्मप्रमाणानि ❀

तत्र याज्ञवल्क्यः—पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ पुराणानि–ब्राह्मादीनि, न्यायः–तर्कः, मीमांसा–वेदवाक्यार्थविचारः, धर्मशास्त्रम्–मन्वादिस्मृतिः, श्रुतिस्तु वेदो विख्यातो धर्मशास्त्रं तु वै स्मृतिः। "अङ्गैर्व्याकरणादिभिर्युक्ताश्चत्वारो वेदाः। एतानि चतुर्दशविद्यानां धर्मज्ञानानां स्थानानि प्रमाणानि धर्मस्य च विद्याद्वारा" मनुरपि—वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव-चेति॥ अयमर्थः; वेदो धर्ममूलम्–धर्मे प्रमाणम्, तथा वेदविदां स्मृतिशीले च, शीलम्–रागद्वेषादिविना शौचिचरित्रम्, आचारः–कङ्कणबन्धनादिः,आत्मतुष्टिः–वैकल्पिकेषु पदार्थेषु यस्मिन् गृह्यमाणे आत्मनः प्रीतिः। सापि प्रमाणमिति। व्यासोपि—धर्ममूलं श्रुतिं प्राहुर्धर्मराशिमकृत्रिमम्। तद्विदां स्मृतिशीले च साध्वाचारो मन प्रियमिति॥ याज्ञवल्क्यश्च—श्रुतिःस्मृतिस्सदाचारः स्वस्य च प्रियमात्मनः। सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्॥ शिष्टाचारः स्मृतिर्वेदस्त्रिविधं धर्मलक्षणमिति। शिष्टानामपि स्वरूपमाह स एव—धर्मेणाधिगतो यैस्तु वेदस्सपरिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहे-

तव: ॥ इति. इतिहासपुराणान्यङ्गानि वेदस्य परिवृंहणानि । तथा बृहस्पतिः—इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥ इति. ननु, यदि वेदविदां शीलं प्रमाणम् । तर्हि, इन्द्रचन्द्रादेरहल्यातारादिगमनमपि प्रमाणं स्यादिति, कथमाचारः प्रमाणम्? तदाह गौतमः—"दृष्टो धर्मव्यतिक्रमस्साहसं च महताम्" इति । साहसम्-परशुरामादेर्मातुश्शिरच्छेद्दादि । उच्यते; सत्यम्, अहल्यादिगमनमिन्द्रादीनामस्ति, तथापि तेषां तपःसंजनिततेजोविशेषयोगिनां प्रत्यवायो न भवति, अस्मदादीनां तदभावेन तत्करणे भवति प्रत्यवायः । तदाह आपस्तम्बः—दृष्टो धर्मव्यतिक्रमस्साहसश्च पूर्वेषाम् । तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ॥ इति. मनुरपि—धर्मव्यतिक्रमो दृष्टो महतां साहसन्तथा । तदन्वीक्ष्य प्रयुञ्जानस्सीदत्यवरजोऽवलः ॥ इति । यत्र श्रुत्यादयो न सन्ति तत्र परिषद्वचनं प्रमाणमित्याह मनुः—अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् । यं शिष्टा ब्राह्मणा ब्रूयुस्स धर्मस्स्यादशङ्कितः ॥ इति. धर्मेषु-धर्मप्रमाणेष्वित्यर्थः । ते च शिष्टा दशावराः । तथाह गौतमः—"अनाम्नाते दशावरैः शिष्टैरूहवद्भिः प्रशस्तं कार्यम्" इति । यत्तैः प्रशस्तमित्युक्तं तत्कार्यमित्यर्थः । पुराणे—यस्तु विष्णुपरो धर्मो यो वा नारायणेरितः । येन विष्णुरमेयात्मा प्रसादमधिगच्छति ॥ सएव परमो धर्मस्सर्वलोकपरायणः । बोधायनोपि—"तदभावे दशावरा परिषत्" इति । याज्ञवल्क्योपि—चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा । सा ब्रूते यं स धर्मस्स्यादेको वाध्यात्मवित्तमः ॥ इति. धर्मज्ञाः—धर्मशास्त्रज्ञाः, तिस्रो विद्या येषां ते त्रिविद्याः, तेषां समूहस्त्रैविद्यम्, ऋगादिवेदत्रयज्ञाः धर्मज्ञाश्च त्रयो वा परिषदित्यभिप्रायः । तथाच मनुः—ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च । त्र्यवराः परिषज्ज्ञेया धर्मसंशयनिर्णये॥ इति. वसिष्ठोपि—त्रैविद्यवृद्धा यं ब्रूयुर्धर्मं धर्मविदो जनाः । पतने पावने चैव स धर्मो नात्र संशयः ॥ इति. तच्च श्रुत्यादिवत्प्रमाणमित्याह यमः—वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मार्थयुक्तं वचनं प्रमाणम् । यस्य प्रमाणम् न भवेत्प्रमाणं कस्तस्य कुर्याद्वचनं प्रमाणम् ॥इति. यस्य श्रुत्यादिकं प्रमाणं न भवति, न तस्य 'वाक्यं प्रमाणम्; अतस्तत्परित्याज्यमित्यभिप्रायः । अतएव प्रचेताः—अमीमांसाबहिश्शाखा ये चान्ये वेदवर्जिताः। यत्ते ब्रूयुर्न तत्कुर्याद्वेदाद्धर्मो विधीयते ॥ इति. पराशरश्च—त्रैविद्यो हैतुकस्तर्की ह्यङ्गविद्धर्मपारगः । त्रयश्चाश्रमिणः पूर्वे पर्षदेषा दशावरा ॥ अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशस्समेतानां परिषत्त्वं न विद्यते ॥ यां यां वेदविदो ब्रूयुस्त्रयोप्येनस्सुनिष्कृतिम् । सा तेषां पावनाय स्यात्पवित्रं विदुषां हि वाक् ॥ इति. एतद्वचनमत्यल्पपापविषयम् । अन्यत्र—पातके तु शतं पर्षत्सहस्रं महदादिषु । उपपातके तु पञ्चाशत्स्वल्पे स्वल्पं तथा भवेत् ॥ इत्युक्तं द्रष्टव्यम् । बोधायनः—बहुद्वारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः । तस्मादवाच्यो ह्येकेन बहुज्ञेनापि संशये ॥ इति. अत्र हैतुकादीनां लक्षणं संज्ञाप्रकरणे द्रष्टव्यम् । याज्ञवल्क्यः—

अज्ञेभ्यो ग्रन्थिन श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः। धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ॥ एकोपि वेदविद्धर्मं यं विपश्येद्विचक्षणः । स एव परमो धर्मो नाज्ञानामुदितोदितैः ॥ बोधायनोपि—धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः। क्रीडार्थमपि यं ब्रूयुस्स धर्मः परमो मतः॥ इति. तथा संप्रदायोपि प्रमाणमित्याह मनुः—येनास्य पितरो याता येन याताः पितामहाः । तेन यायात्सतां मार्गस्तेन गच्छन्न रिष्यति ॥ यः स्वकुलपरम्परायात आचारस्स संप्रदायः । स्वकुलपरम्परायातस्तस्यापि प्रमाणत्वं धर्मशास्त्रविरुद्धत्वे सन्मार्गप्रवृत्तित्वे च वेदितव्यम्; अन्यथाऽतिप्रसङ्गात् । सोपि धर्मविप्रतिपत्तौ द्रष्टव्यः । तथाच सुमन्तुः—यत्र शास्त्रगतिर्भिन्ना सर्वकर्मसु भारत । उदितेऽनुदिते चैव होमे भेदो यथा भवेत् ॥ तस्मात्कुलक्रमायातमाचारं त्वाचरेद्बुधः । स गरीयान्महाबाहो धर्मशास्त्रोदितादपि ॥ इति. धर्मज्ञसमयोपि प्रमाणमित्याह आपस्तम्बः—"धर्मज्ञसमयः प्रमाणं वेदाश्च" इति । एवं च धर्मशास्त्रस्यापि धर्मोपयोगित्वादध्ययने फलश्रवणाच्च, तदध्येतव्यमित्याह मनुः—यथैव वेदाध्ययनं धर्मशास्त्रमिदं तथा । अध्येतव्यं प्रयत्नेन नियतं स्वर्गमिच्छता ॥ इति. यमोपि—धन्यं यशस्यमायुष्यं पुण्यं स्वर्ग्यं तथैव च। धारणाद्धर्मशास्त्रस्य ब्रह्मलोकमवाप्नुयात् ॥ इति. बृहस्पतिपराशरौ—श्रुतिस्मृती तु विप्राणां चक्षुषी द्वे विनिर्मिते। काणस्त्वेकया हीनो द्वाभ्यामन्धः प्रकीर्तितः ॥ अधीत्य चतुरो वेदान् सषडङ्गपदक्रमान्। स्मृतिहीना न शोभन्ते चन्द्रहीनेव शर्वरी॥ इति. स्मृतिरत्नावल्याम्—स्मृतिं विना न विज्ञानं धर्मस्य भवति क्वचित्। न ज्ञातुर्ज्ञायते रूपमादर्शेन विना यथा ॥ इति. मनुरपि—इदं शास्त्रमधीयानो ब्राह्मणश्शंसितव्रतः। मनोवाक्कायजैर्नित्यं कर्मदोषैर्न लिप्यते ॥ इति. अत्र ब्राह्मणग्रहणं द्विजोपलक्षणम्। तथा यमः—इदं शास्त्रमधीयानो ब्राह्मणः क्षत्रियोपि वा । पुनाति हि पितॄन् सर्वान् सप्त सप्त परावरान्॥ इति यत्पुनर्मनुनोक्तम्—विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः । शिष्येभ्यश्च प्रवक्तव्यं सम्यङ् नान्येन केनचित्॥ इति तच्छूद्राधिकारनिरासपरम्। अत एव शूद्रं प्रति यमः—तस्मादस्याधिकारोऽस्ति न वेदेषु न तु स्मृतौ । इति. अतः सिद्धं द्विजातीनामेवाध्ययनेऽधिकार इति । एवं तदर्थानुष्ठानेऽपि द्रष्टव्यम्। अत एव मनुः—निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः । तस्य शास्त्रेऽधिकारोऽस्ति ज्ञेयो नान्यस्य कस्यचित्॥इति. निषेकः—गर्भाधानम्, श्मशानम्—प्रेतकर्म, सएव—अधीयीरंस्त्रयो वर्णाः स्वधर्मस्था द्विजातयः ।प्रब्रूयाद्ब्राह्मणस्तेषां नेतराविति निश्चयः ॥इति व्यासोऽपि—ततः स्मार्तमनुष्ठानमन्तरेण न वैदिकम् । प्रवर्त्यते द्विजातीनां धर्मशुद्धिर्महर्षिभिः ॥ इति अत्र धर्मशास्त्रापरिज्ञाने यथा विध्यनुष्ठानासंभवात् कृतमपि कर्म निरर्थकं स्यात् । तथा जाबालिः—स्वाभिप्रायकृतं कर्म यत्किंचिद्विधिवर्जितम् ॥ क्रीडाकर्मेव बालानां तत्सर्वं स्यान्निरर्थकम् ॥ इति । अमार्गनिवर्तकत्वाच्चावश्यं ज्ञेयमित्याह शङ्खः—अमार्गेण प्रवृत्तानां व्याकुलेन्द्रियचेतसाम् । निवर्तकं धर्मशास्त्रं व्याधीनामिव भेषजम् ॥ इति. यत्पुनः शाक्यादिप्रणीतं

तन्नानुष्ठेयं, तस्यावेदमूलत्वात् । तदुक्तं चतुर्विंशतिमते—अर्हच्चार्वाकवाक्यानि बौद्धादिपठितानि च । विप्रलम्भकवाक्यानि तानि सर्वाणि वर्जयेत् ॥ पुराणं मानवो धर्मस्साङ्गो वेदश्चिकित्सकम् । आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥ इति. मनुः—अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ इति. चन्द्रिकायाम्—एतेभ्योपि यदन्यत्स्यात्किंचिद्धर्माभिधायकम् । तद्दूरतरतो विद्धि मोहस्तत्राश्रयो मतः ॥ इति. तमोगुणस्य मोहजनकत्वात्तामसपुराणादेर्मोहाश्रयत्वेन तदुक्तं दूरतो वर्जयेदित्यर्थः । यद्वा स्मृत्युक्तविपरीतार्थबोधिसर्वं वर्जयेदिति । तदाह व्यासः—वेदार्थवित्तमैः कर्म यत्स्मृतं मुनिभिः पुरा । तद्यत्नेनानुतिष्ठेत तन्निषिद्धन्तु वर्जयेत् ॥ ये हि वेदार्थतत्वज्ञा लोकानां हितकाम्यया । आदिष्टवन्तो यं धर्मं तं धर्मं न विचालयेत् ॥ इति. मनुश्च—या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ इति. अनेन तामसपुराणादीनां तमोनिष्ठत्वेन तदुक्तानुष्ठानेऽपि परलोके निष्फलत्वात्, तानि वर्जयेदिति सिद्धम्.

## ❋ सात्विकादिपुराणविभागः ❋

कानि तानि तामसपुराणानीत्याकाङ्क्षायाम् पाद्मे पुराणे भगवान् रुद्रश्चाह—ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा । तथान्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ॥ आग्नेयमष्टमं प्रोक्तं भविष्यन्नवमं तथा । दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं तथा ॥ वाराहं द्वादशं प्रोक्तं स्कान्दं चात्र त्रयोदशम् । चतुर्दशं वामनं तु कौर्मं पंचदशं तथा ॥ मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ॥ अष्टादशपुराणानां कर्ता सत्यवतीसुतः ॥ पुराणं वैष्णवं हित्वा तद्धि चक्रे पराशरः । वैष्णवं नारदीयं च तथा भागवतं परम् ॥ गारुडं च तथा पाद्मं वाराहं शोभनं स्मृतम् । सात्विकानि पुराणानि शोभनानि वरानने ॥ ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च । भविष्यद्वामनं ब्राह्मं राजसानि निबोध मे ॥ शैवमाग्नेयकं चैव लैङ्गं स्कान्दं तथैव च । कौर्मं चैव तथा मात्स्यं तामसानि प्रचक्षते ॥ वेदेषु पौरुषं सूक्तं पुराणेषु च वैष्णवम् । भारते भगवद्गीता धर्मशास्त्रेषु मानवम् ॥ इति. भरद्वाजः—सात्विकैरेव वर्तेत सात्विकोक्तं समाचरेत् । राजसं तामसं चैव दूरतः परिवर्जयेत् ॥ इति. श्रीविष्णुधर्मोत्तरे—मध्यमो राजसो धर्मो तामसस्त्वधमः स्मृतः । सात्विकः स्तूत्तमो ज्ञेयः तस्मात्सात्विकमाचरेत् ॥ इति.

ननु, किमत्र सकलस्मार्तोपसंहारेणानुष्ठानमुत न वा; यदि नोपसंहारः तदा, सर्वश्रुत्युपसंहारादुक्तः श्रौतो यथा विधिः । सर्वस्मृत्युपसंहारात् स्मार्तोऽप्युक्तस्तथा विधिः ॥ इत्यादिभिर्विरोधःस्यात् । अथोपसंहारः, तथाऽनुष्ठातुं न शक्यम्; विरुद्धोपसंहारासम्भवात् । सत्यं; यदि सर्वोपसंहारस्स्यात्, किंतु यन्नाम्नातं स्वसूत्रे तन्मात्रपरिपूरणमेवान्यतः क्रियते इत्यविरोधः । अत एव कात्यायनः—यन्नाम्नातं स्वशाखायां पारक्यं न विरोधि च । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ इति. अनेनैवाभिप्रायेणो-

वतम्, सर्वस्मृत्युपसंहारादिति। यत्तु कात्यायनेनोक्तम्—बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम्, तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥ तन्निराकाङ्क्षाभिप्रायम्, यतः स एवाह—आत्मतन्त्रे तु यन्नोक्तं तत्कुर्यात्पारतन्त्रिकम्। इति.

## ॐ अथ स्वसूत्रत्यागे दोषः ॐ

यः स्वसूत्रोक्तं परित्यज्य गृह्यान्तरोक्तं करोति; तस्य दोषमाह दक्षः—स्वकं कर्म परित्यज्य यदन्यत्कुरुते द्विजः। अज्ञानादथवा लोभात्स्वतेन पतितो भवेत् ॥ इति. अत्र कथंचित् स्वसूत्रालाभे विशेषमाह वृद्धमनुः—स्वसूत्रे विद्यमानेपि परसूत्रेण वर्तते। बोधायनमतं कृत्वा स्वसूत्रफलभाग्भवेत् ॥ इति.

## ॐ अथ जपादिकर्मकरणे कालादिनियमः ॐ

परिभाषामाह कात्यायनः—यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥ यत्र दिङ्नियमो न स्यात् जपहोमादिकर्मसु। तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्यापराजिता ॥ अपराजिता–ऐशानी दिक। आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः। तदासीनेन कर्तव्यं न प्रह्वेन न तिष्ठता ॥ यदुचमन्यथा कुर्याद्यदि मोहात्कथंचन। यतस्तदन्यथाभूतं तत एव समापयेत् ॥ समाप्तं यदि जानीयान्मयैतदयथाकृतम्। तावदेव पुनः कुर्यान्नावृत्तिः सर्वकर्मणाम् ॥ प्रधानस्याक्रियायान्तु साङ्गं तत्क्रियते पुनः तदङ्गस्याक्रियायां तु नावृत्तिर्नैव तत्क्रिया ॥ यस्मिन् कर्मण्यपि कृते मनसः स्यादलाघवम्। तावदेव पुनः कुर्योद्यावत्तुष्टिकरं भवेत् ॥ इति. स्मृत्यन्तरे च—अकाले चेत् कृतं कर्म कालं प्राप्य पुनः क्रियाः। कालातीतं तु तत्कुर्यादकृतं तद्विनिर्दिशेत् ॥ इति. कात्यायनः—मुख्यकाले यदावश्यं कर्म कर्तुं न शक्यते। गौणकालेपि कर्तव्यं गौणोप्यत्रेदृशो भवेत् ॥ रात्रौ प्रहरपर्यन्तं दिवा कृत्यानि कारयेत्। ब्रह्मयज्ञं च सौरं च वर्जयित्वा विशेषतः ॥ इति. भरद्वाजः—आसनं स्वस्तिकं प्रोक्तं जपादीनि प्रकुर्वतः कुशेशयासनं वापि वीरासनमथापि वा ॥ इति. स्मृत्यर्थसारे—उपात्ते तु प्रतिनिधौ मुख्यार्थो यदि लभ्यते। तत्र मुख्यमनादृत्य गौणेनैव समापयेत् ॥ मुख्याभावे यदा गौणमुपात्तं सन्निनश्यति। तत्र मुख्योपमं गौणं ग्राह्यं गौणोपमं न तु ॥ मुख्यद्रव्यापहारे तु प्रतिनिध्यभिसन्धिना। प्रयुञ्जानस्य मुख्यार्थलाभे ग्राह्यः स एव हि ॥ यस्मिन्कस्मिन्नुपात्ते तु मुख्येपचरिते सति। अन्यद्रव्यं सजातीयं विजातीयमथापि वा ॥ उपादाय प्रयुञ्जानः पूर्वं कृत्स्नमवाप्नुयात्। संस्काराणामयोग्योपि मुख्य एव हि गृह्यते ॥ न तु संस्कारयोग्योपि

गृह्यते प्रतिरूपकः ॥ कार्यैं रूपैस्तथा वर्णैः क्षीरैः पुष्पैः फलैरपि । गन्धै रसैः सदृग्ग्राह्यं पूर्वाभावे परं परम् ॥ हव्यार्थे गोघृतं ग्राह्यं तदलाभे तु माहिषम् । आजं वा तदलाभे तु साक्षात्तैलं तु गृह्यते ॥ एषां केषांचिदन्येषां हविषा मप्यसंभवे । सर्वत्राज्यमुपादेयं भरद्वाजमुनेर्मतात् ॥ निमित्तानामिहैकेषां निर्दिश्यैवयं यदुच्यते तत्सर्वेषु निमित्तेषु जानीयात्प्रतिपादितम् ॥ इक्षूनपः फलं मूलं ताम्बूलं पय औषधम् । भक्षयित्वापि कर्तव्याः स्नानदानादिकाः क्रियाः ॥ गोदासीकन्यकाश्चैव तिष्ठन्नेव प्रयोजयेत् । वालं केशं तथा हस्तं न्यस्य हस्ते जलं क्षिपेत् ॥ इति. हेमाद्रौ—कण्ठेजं पशवः सर्वे ग्राह्याः पुच्छे विचक्षणैः । गृह्णीयान्महिषीं शृङ्गे खरं वै पृष्ठभागतः ॥ लाजहोमे च सीमन्ते देवतावाहने वरे । अर्घ्ये तिष्ठेदुपस्थाने पडेते भृगुचोदिताः । इति. भरद्वाजः—अज्ञाता यदि वा मन्त्राः स्वस्वगृह्येषु चोदिताः । उपवीतप्रमुख्यानां तेषां वै धारणे द्विजाः॥ केवलं प्रणवो वापि व्याहृतित्रितयं तु वा । स्यातां विप्रादि वर्णेषु द्वावेतौ सर्वशाखिनाम् ॥ इति. स्मृतिरत्नावल्याम्–मुख्यकालं समाश्रित्य गौणमप्यस्तु साधनम् । न मुख्यद्रव्यलोभेन गौणकालप्रतीक्षणम् ॥ कालातीतानि कर्माणि प्राप्नुवन्त्युत्तराणि तु । कालातीतानि कृत्वैव विदध्यादुत्तराणि च ॥ अकृत्वातीतकर्माणि य. कुर्यादुत्तराणि तु । नच देवान्न च पितॄंश्च रुद्रच्छति मानुषान् ॥ इति. स्मृतिमाधवीये—आज्यं हव्यमनादेशे जुहोतिषु विधीयते । मन्त्रस्य देवतायास्तु प्रजापतिरिति स्थितिः॥ इति. कालनिर्णये–यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । विद्यमानो भवेदङ्गं नोज्झितोपक्रमेण तु ॥ यां तिथिं समनुप्राप्य उदयं याति भास्करः । तया कर्माणि कुर्वीत.ह्रासवृद्धी न कारणम् ॥ एतच्च प्रत्याब्दिकदर्शादिव्यतिरेकेण तत्र विशेषस्य वक्ष्यमाणत्वात्,हारीतश्च–उत्पत्तौ च विपत्तौ च मैथुने दन्तधावने। अभ्यङ्गेष्युदधिस्नाने तिथिस्तात्कालिकी स्मृता ॥ इति. बोधायनश्च–घृताभावे यथा तैलं घृतप्रतिनिधिर्भवेत् । पुत्राभावे तथा दाये पुत्री पुत्रत्वमश्नुते ॥ इति.

## ❋ अथ सूत्राणि ❋

आग्निवैश्यसूत्रे—" तथा तत्सूत्रगणान्व्याख्यास्यामो बोधायनमापस्तम्बं सत्यापाढं द्राह्यायणमागस्त्यं शाण्डिल्यमाश्वलायनं शाम्भवीयं कात्यायनमिति नवानि पूर्वसूत्राणि वैखानसं शौनकीयं भारद्वाजमाग्निवैश्यं जैमिनीयं वाधूलं माध्यन्दिनं कौण्डिन्यं कौषीतकमिति नवान्यपरसूत्राणि अष्टादशसंख्याताः शरीरसंस्कारा इति.

## ❋ अथ कलिधर्माः ❋

तत्र व्यासः—ध्यायन्कृते यजन्यज्ञैः त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥ धर्मोत्कर्षमतीवात्र प्राप्नोति पुरुषः कलौ ।

अल्पायासेन धर्मज्ञास्तेन तुष्टोऽस्म्यहं कलौ ॥ इति. आदिपुराणे—यस्तु कार्तयुगो धर्मो न कर्तव्यः कलौ युगे। पापप्रसक्तास्तु यतः कलौ नार्यो नरास्तथा॥ न विद्वत्ता न शुद्धोऽर्थो न शुद्धिर्मनसः कलौ। यतोऽतः सत्यमेवैकं नराणामुपकारकम् ॥ इति. श्रीविष्णुपुराणे—कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम्। नार्चयिष्यन्ति मैत्रेय पापण्डोपहता जनाः ॥ सर्वं ब्रह्म वदिष्यन्ति संप्राप्ते तु कलौ युगे। नानुतिष्ठन्ति मैत्रेय शिश्नोदरपरायणाः॥ यदा यदा सतां हानिर्वेदमार्गानुवर्तिनाम् । तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः॥ इति. स्मृत्यन्तरे च—सर्वाणि धर्मजालानि सापायानि कलौ युगे। अन्नदानं हरौ भक्तिरनपायमिदं द्वयम् ॥इति. नारदश्च—हरेर्नामैव नामैव नामैव भवभेषजम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा॥इति. स एवान्यत्र—कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे। यस्य चेतसि गोविन्दो हृदये यस्य नाच्युतः॥ इति. हारीतश्च—मुखं दग्धं परान्नेन हस्तौ दग्धौ प्रतिग्रहात् । मनो दग्धं परस्त्रीभिर्ब्रह्मशापः कुतः कलौ ॥ इति.

## ❀ कलौ निषिद्धधर्माः ❀

निषिद्धधर्मा अप्यादित्यपुराणे दर्शिताः—दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः। गोत्रान्मातृसपिण्डात्तु विवाहो गोवधस्तथा ॥ नराश्वमेधौ मद्यं च कलौ वर्ज्या द्विजातिभिः ॥इति. क्रतुरपि—देवरात्र सुतोत्पत्ति र्दत्ता कन्या न दीयते। न यज्ञे गोवधः कार्यः कलौ च न कमण्डलुः ॥ इति. आदिपुराणे—ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा। कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्॥ इति. तथान्येऽपि धर्मज्ञसमयप्रमाणकाः सन्ति, ते यथा—विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम्। बालिकाक्षतयोन्योश्च वरेणान्येन संस्कृतिः॥ कन्यानामसवर्णानां विवाहश्च द्विजन्मनाम् । आततायिद्विजाग्र्याणां धर्मयुद्धे न हिंसनम् ॥ द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः। सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम् ॥ महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे। सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः॥ अग्निहोत्रहवन्याश्च लेहो लीढापरिग्रहः। वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः॥ वित्तं स्वाध्यायसापेक्षमघसंकोचनं तथा। प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् ॥ संसर्गदोषस्तेनाद्यैर्महापातकनिष्कृतिः। वरातिथिपितृभ्यश्च पशूपहरणक्रिया ॥ दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः। सवर्णानां तथा दुष्टैः संसर्गः शोधितैरपि ॥ अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियाः। अस्थिसंचयनादूर्ध्वमङ्गस्पर्शनमेव च ॥ शमितृत्वं च विप्राणां सोमस्याग्रहणं तथा। षड्भक्तानशनेनान्नहरणं हीनकर्मणः॥ शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम्। भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः॥ शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिरीरिता। आपद्वृत्तिर्द्विजा-

श्र्याणामभ्रस्तनिकता तथा ॥ प्रजार्थन्तु द्विजाग्र्याणां प्रजारणिपरिग्रहः । ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया ॥ बलात्कारोतिदुष्टस्त्रीसंग्रहो विधिचोदितः । यतेश्च सर्ववर्णेषु भिक्षाचर्या विधानतः ॥ नवोदके दशाहं च दाक्षिणा गुरुचोदिता । ब्राह्मणादिषु शूद्रस्य वचनादिक्रियापि च ॥ भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा । गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया ॥ पिता पुत्रविरोधेषु साक्षिणं दण्डकल्पनम् । यत्र सायंगृहस्थत्वं सूरिभिस्तत्त्वतत्परैः॥ एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः ॥ समयश्चापि साधूनां प्रमाणं वेदवद्भवेत् ॥ इति. स्मृत्यर्थसारेपि— दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च । समुद्रयानस्वीकारः कमण्डलुविधारणम् ॥ महाप्रस्थानगमनं गोवधश्च सुराग्रहः । अग्निहोत्रहवन्याश्च लेहो लीढापरिग्रहः ॥ असवर्णासु कन्यासु विवाहश्च द्विजातिषु । वित्तं स्वाध्यायसापेक्षमघसंकोचनं तथा ॥ अस्थिसंचयनादूर्ध्वमङ्गस्पर्शनमेव च । प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् ॥ संसर्गदोषः पापेषु मधुपर्के पशोर्वधः । दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः ॥ मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा । दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ ॥ कलौ युगे त्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः ॥ इति. बृहन्नारदीये—समुद्रयात्रास्वीकारः कमण्डलुविधारणम् । द्विजानामसवर्णासु कन्यासूपयमक्रिया ॥ देवरेण सुतोत्पत्तिर्मधुपर्के पशोर्वधः । मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥ दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च । दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ ॥ महाप्रस्थानगमनं गोवधश्च तथा मखे । इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ॥ न विद्यया न शुद्धोऽर्थो न शुद्धिर्मनसः कलौ । यतोऽतः सत्यमेवैकं नराणामुपकारकम् ॥ इति.

## ❀ अथ चतुर्युगधर्माः ❀

पराशरश्च— अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे तथा । अन्ये कलियुगे नृणां युगानामनुरूपतः ॥ तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥ तपः—कृच्छ्रचान्द्रायणादि । परम्प्रधानमित्यर्थः । कृते तु मानवो धर्मस्त्रेतायां गौतमस्य तु । द्वापरे शङ्खलिखितः कलौ पाराशरस्मृतिः ॥ त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् । द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे ॥इति. स्मृतिरत्नावल्याम्—कृते त्वस्थिगताः प्राणास्त्रेतायां मांसमाश्रिताः । द्वापरे रुधिरं चैव कलौ त्वन्नादिषु स्थिताः ॥ कृते संभाष्य पतति त्रेतायां स्पर्शनेन तु । द्वापरे त्वन्नमादाय कलौ पतति कर्मणा ॥ कृते तात्क्षणिकः शापस्त्रेतायां दशभिर्दिनैः । द्वापरे चैकमासेन कलौ संवत्सरेण तु ॥ अभिगम्य कृते दानं त्रेतास्वाहूय दीयते । द्वापरे याचमानाय सेवया दीयते कलौ ॥ जितो धर्मो ह्यधर्मेण सत्यं चैवानृतेन च ।

जिताश्चोरैश्च राजानः स्त्रीभिश्च पुरुषाः कलौ ॥ सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति। कुमार्यश्च प्रसूयन्ते तस्मिन् कलियुगे सदा ॥ युगे युगे तु ये धर्मास्तत्र तत्र च ये द्विजाः। तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः ॥ युगे युगे च सामर्थ्यमशेषं मुनिपुङ्गवाः। पराशरमतं पुण्यं पवित्रं पापनाशनम् ॥ लवणं मधु तैलं वा दधि तक्रं घृतं पयः। न दुष्येच्छूद्रजातीनां कुर्वन् सर्वेषु विक्रयम् ॥ इति.

## ❀ अथ कलियुगविशेषधर्माः ❀

अतः परं गृहस्थस्य कर्माचारं कलौ युगे। धर्मं साधारणं शक्त्या चातुर्वर्ण्यक्रमागतम् ॥ षट्कर्मसहितो विप्रः कृषिकर्म समाचरेत्। स्वयं कृष्टेस्तु सुक्षेत्रैर्धनैश्च स्वयमार्जितैः ॥ निर्वपेत्पञ्च यज्ञांश्च क्रतुदीक्षां च कारयेत्। ब्राह्मणस्तु कृषिं कुर्वन्नन्वहं दोषमाप्नुयात् ॥ संवत्सरेण यः कुर्यान्निवृत्तः प्राणिनां वधम्। अयोमुखेन काष्ठेन तमेकाहेन लाङ्गली ॥ वृक्षांश्छित्त्वा महीं भित्त्वा हत्वा च कृमिकीटकान्। कर्षकः खलयज्ञेन सर्वपापैः प्रमुच्यते ॥ यो न दद्याद्द्विजातिभ्यो राशिमूलमुपागते। स चोरः स च पापिष्ठो ब्रह्मघ्नसम उच्यते ॥ राज्ञे दद्यात्तु षड्भागं देवानां चैकविंशकम्। विप्राणां त्रिंशकं भागं ततः पापैः प्रमुच्यते ॥ क्षत्रियोऽपि कृषिं कृत्वा देवान्विप्रांश्च पूजयेत्। वैश्यः शूद्रस्तथा कुर्यात्कृषिं वाणिज्यमेव च ॥ चतुर्णामपि वर्णानामेष धर्मः सनातनः ॥ इति. षट्कर्मसंज्ञामकरणे द्रष्टव्यम्। बृहस्पतिरपि—तपो धर्मः कृतयुगे ज्ञानं त्रेतायुगे स्थितम्। द्वापरे चाध्वरः प्रोक्तस्तिष्ये दानं दयादमः ॥ इति. तिष्यः—कलिः। मनुः—अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे युगे। अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥ तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते। द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥इति. बृहस्पतिः—कृते यद्द्वादशाब्दैर्धर्मः स्युस्त्रेतायां तदृतुत्रयात्। द्वापरे तत्रिपक्षेण कलावह्ना च तद्भवेत् ॥ इति. विष्णुपुराणे—यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तु। द्वापरे तच्च मासेन अहोरात्रेण तत्कलौ ॥इति स्मृत्यन्तरे च—ध्यायन्कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्। यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥इति. ब्रह्माण्डे च—त्रेतायामाह्निको धर्मो द्वापरे मासिकः स्मृतः। यथाशक्ति चरेत्प्राज्ञस्तदह्ना प्राप्नुयात्कलौ ॥इति. श्रीविष्णुधर्मोत्तरे—पुष्करं तु कृते सेव्यं त्रेतायां नैमिशं स्मृतम्। द्वापरे तु कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत् ॥ कलेर्दोषनिधेराजन्नास्ति ह्येको गुणो महान्। कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥ कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे। यस्य चेतसि गोविन्दो हृदये यस्य नाच्युतः ॥ इत्येवं विहितमपि धर्मं लोकविद्विष्टं वर्जयेदित्याह, याज्ञवल्क्यः—अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु। इति. यमश्च—धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च। त्यजेद्विशिष्टाभिमतं यत्नादेव समाचरेत् ॥ इति. स्मृत्यन्तरे च—यद्यपि स्यात्त्रिलोकज्ञस्त्रैलोक्याकर्षण-

क्षमः । तथापि लौकिकाचारं मनसापि न लङ्घयेत ॥इति. आपस्तम्बश्च—"आहृताश्च स्त्रीभ्यः प्रतीयेरन्निति । ग्राम्यधर्मविषये, यत् स्त्रिय आहुस्तत्कुर्वन्ति ॥ दशाह्नादिकृत्यविषये, स्त्रीभ्यः सर्ववर्णेभ्यश्च धर्मशेषान्प्रतीयादिति" ॥ कर्तव्यधर्मविषये, एतेन तत्तद्देशाचाराश्च प्रमाणमित्युक्तं भवति तदपि स एवाह—"एतेन देश॰ कुलधर्मा व्याख्याता" इति. देवलश्च—आदौ तावद्देशधर्मो विचिन्त्यो देशे देशे या स्थितिः सैव कार्या । लोकद्विष्टं पण्डिता वर्जयन्ति देवज्ञोऽतो लोकमार्गेण यायात् ॥ येषु देशेषु ये देवा येषु देशेषु ये द्विजाः । येषु देशेषु यच्छौचं याश्च तत्रैव मृत्तिकाः ॥ येषु देशेषु यत्तोयं धर्माचारश्च यादृशः । तत्र तान्नावमन्येत धर्मस्तत्रैव तादृशः ॥ इति. अत्र विशेषमाह गौतमः—"देशकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाण" इति. याज्ञवल्क्यः—यस्मिन् देशे य आचारो व्यवहारः कुलस्थितिः । तथैव परिपाल्योऽसौ यथावंशमुपागतः ॥ स्मृत्यन्तरेच-इतरस्मिन् स्वकं धर्मं देशे कुर्याद्विदेशिकः । कुर्वन्धर्मं तु तत्रत्यं तद्वत्तत्र दुष्यति ॥ इति. बोधायनश्च—"पञ्चधा विप्रतिपत्तिः, दक्षिणतस्तथोत्तरतः । यानि दक्षिणतस्तान्यनुव्याख्यास्यामः, यथैतदनुपनीतेन सह भोजनम्, स्त्रिया सह भोजनम्, पर्युषितभोजनम्, मातुलसुतागमनम्, पितृष्वसृदुहितृगमनमिति । अथोत्तरत ऊर्णाविक्रयः, शीधुपानम्, उभयतो दद्भिर्व्यवहारः, आयुधीयकम्, समुद्रयानमिति । इतर इतरस्मिन् कुर्वन् दुष्यति, इतर इतरस्मिन्। तत्र तत्र देशप्रामाण्यमेव स्यादिति"॥ गौतमः—"उभयं चैव नाद्रियेत, शिष्टस्मृतिविरोधदर्शनात् । प्राक् विनशनात्, प्रत्यक्कालयवनात्, दक्षिणेन हिमवन्तम्, उदक्पारियात्रम्, एतदार्यावर्तम् । तस्मिन् य आचारः स प्रमाणम् । गङ्गायमुनयोरित्येके" इति. माघमाहात्म्ये दूतवाक्यम्–गोविन्देति जपन्यत्र कुत्र चिद्रमते भुवि । स नरो न यमं पश्येत्तञ्च नेक्षामहे वयम् ॥ इति.

## ❀ अथ दुष्टलक्षणम् ❀

अथ धर्मशास्त्रोपयोगिसंज्ञानिर्वचनं किंचिदुच्यते । तत्र मनुः—अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च बकवृत्तिरुदाहृतः ॥ धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदाम्भिकः । बैडालवृत्तिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ॥ यस्य धर्मध्वजो नित्यं सुराध्वज इवोच्छ्रितः । चरितानि च पापानि बैडालं नाम तद्व्रतम् ॥ इति. भरद्वाजः—कानीनः कन्यकाजातो गोलको विधवोद्भवः । कुण्डः सुमङ्गलीजातो ब्राह्मणाद्ब्राह्मणान्वये ॥ तथैवैतासु विज्ञेयाः स्त्रीषु क्षत्रियवैश्ययोः । स्वजातिपुरुषाज्जाताः सगोत्रादि यथाक्रमात् ॥ आसु संन्यासिनो जाताः सगोत्रपुरुषादपि । ते चण्डाला इति ज्ञेया न तु पूर्वोदिता इह ॥ इति. बृहन्नारदीये—कुण्डाशी गोलकाशी च तथैव ग्रामयाजकः । अयाज्ययाजकश्चैव महापातकिनः स्मृताः ॥ व्रात्यः

संस्कारहीनः स्यादवकीर्णी क्षतव्रतः। इति. याज्ञवल्क्यः—सावित्रीपतिता व्रात्या व्रात्याः सोमादृते क्रतोः। इति. मनुः—परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ । पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलकः ॥ इति. वसिष्ठः—विभवे सति नैवार्थं ददाति न जुहोति च । तमाहुराखुं तस्यान्नं भुक्त्वा कृच्छ्रेण शुध्यति ॥ न जुहोत्युदिते काले न स्नाति न ददाति च। यथा दारुमयो हस्ती यथा चर्ममयो मृगः ॥ तथा विप्रोऽनधीयानस्त्रयस्ते नामधारकाः॥ इति. विज्ञानेश्वरे—गृहस्थो धर्मवृत्तो यो ददाति परिवर्जितः । मुनिभिर्धर्मतत्त्वज्ञैरपचः परिकीर्तितः ॥ इति. चतुर्विंशतितमे—गर्भाधानादिसंस्कारवेदोपनयनैर्युतः । नाध्यापयति नोऽधीते स भवेद्ब्राह्मणब्रुवः ॥इति. स्मृतिमाधवीये—शूद्रप्रेष्यो भृतो राज्ञः वृषलग्रामयाजकौ । वधबन्धोपजीवी च षडेते ब्रह्मबन्धवः ॥ माहिषीत्युच्यते भार्या सा चैव व्यभिचारिणी । तद्दोषं क्षमते यस्तु स वै माहिषिकः स्मृतः ॥ इति. संवर्तः—गायत्रीमात्रसारा ये सन्ध्यामात्रमुपासकाः । अज्ञानात्कृषिकर्माणो ब्राह्मणा नामधारकाः ॥ इति.

## ❀ नग्नादिस्वरूपनिर्णयः ❀

उशनाः—"उपनीतमात्रो ब्रह्मब्राह्मणः ब्राह्मणोऽधीतवेदोऽनुष्ठितवेदव्रतः"॥ इति बोधायनः—"ब्राह्मण्यां ब्राह्मणादुत्पन्नः प्रागुपनयनाज्जात इत्यभिधीयते, उपनीतमात्रो ब्रह्मब्राह्मणः, व्रतानुचारी वेदानां किंचिदधीत्य ब्राह्मणः, एकां शाखामधीत्य श्रोत्रियः, अङ्गाध्याय्यनूचानः, कल्पाध्यायी ऋषिकल्पः, प्रवचनाध्यायी भ्रूणः, चतुर्वेदाधिकारी ऋषिः, अतऊर्ध्वं देव" इति. संग्रहे—शीलवृत्तगुणोपेतो ज्ञानी स्वाध्यायवाञ्छुचिः।भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः॥इति.मनुश्च—धर्मेणाधिगतो यैस्तु वेदः स परिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः॥ इति. श्रीविष्णुपुराणे—साधवः क्षीणपापास्तु सच्छब्दाः साधुवाचकाः। तेषामाचरणं यत्तु सदाचारः स उच्यते इति. याज्ञवल्क्योऽपि—अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः।इति. पराशरश्च—अभ्यागतो ज्ञातपूर्वस्त्वज्ञातोऽतिथिरुच्यते। इति. चतुर्विंशतितमे—विप्रवीर्यसमुत्पन्नो मन्त्रसंस्कार वर्जितः। जातिमात्रोपजीवी च ह्यसावब्राह्मणः स्मृतः॥इति. याज्ञवल्क्यः—न विद्यया केवलया तपसा वापि पात्रता। यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते ॥ इति. दक्षः—यो हि हित्वा विवाहाग्निं गृहस्थ इति मन्यते। अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः॥ इति. वर्णाश्रमधर्मत्यागे—"वीरहा वा एष देवानां' योऽग्निमुद्वासयते "। इति. संग्रहे च—अधीतमपि यो वेदं विमुञ्चति यदा नरः। भ्रूणहा स तु विज्ञेयो वियोनिमधिगच्छति ॥ यस्तु ध्वंसयते गर्भं भ्रूणहा स च संमतः। ब्रह्महा ब्राह्मणघ्नः स्याद्गोघ्नो गोवधकः स्मृतः॥ इति. विष्णुपुराणे च—ऋग्यजुःसामसंज्ञेयं त्रयीवर्णावृतिर्द्विज । एतामुज्झति यो मोहात्स नग्नः पातकी द्विजः ॥ यस्तु सन्त्यज्य गार्हस्थ्यं वानप्रस्थो न जायते । परिव्राट्

थापि मैत्रेय स नग्नः परिकीर्तितः ॥ ब्राह्मणाद्यास्तु ये वर्णाः स्ववर्णादन्यतो मुखाः। यान्ति ते नग्नसंज्ञां तु हीनकर्मस्त्ववस्थिताः ॥ इति.

## ❀ पाषण्डिलक्षणम् ❀

एते पाषण्डिनः पापाः नह्येतानालपेद्बुधः। इति. श्रीभागवते—विष्णोरन्यं परत्वेन मेतसा वेत्त्यचेतनः। स पाषण्डीति विज्ञेयः सर्वकर्मबहिष्कृतः॥ इति. प्राजापत्यस्मृतौ, बृहन्नारदीये च—यः स्वधर्मपरित्यागी पाषण्डीत्युच्यते बुधैः। तत्सङ्गकृत्तत्समः स्यात्तावुभावपि पापिनौ ॥ ये तु सामान्यभावेन मन्यन्ते पुरुषोत्तमम्। ते वै पाषण्डिनो ज्ञेया नरकार्हा नराधमाः॥ येऽन्यं देवं परत्वेन वदन्त्यज्ञानमोहिताः। नारायणाज्जगन्नाथात्ते वै पाषण्डिनः स्मृताः॥ इति. विश्वामित्रः—जटाभस्मास्थिरुद्राक्षलिङ्गपाषाणधारिणः। ये भवन्ति कलौ विप्रास्ते वै पाषण्डिनः स्मृताः॥ इति.

## ❀ आततायिलक्षणम् ❀

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारहरश्चैव षडेतेऽप्याततायिनः॥ इति.

## ❀ अवकीर्णिलक्षणम् ❀

जातुकर्णिः—खण्डितं व्रतिनो रेतो यदि स्याद्ब्रह्मचारिणः। कामतोऽकामतो वोचुरवकीर्णीति तं बुधाः॥ इति. याज्ञवल्क्यः—अवकीर्णी भवेद्गत्वा ब्रह्मचारीति योषितम्। इति.

## ❀ अन्तावसायिलक्षणम् ❀

पराशरः—अग्निकार्यपरिभ्रष्टाः सन्ध्योपासनवर्जिताः। वेदं च येऽनधीयानास्ते सर्वे वृषलाः स्मृताः॥ वैश्वदेवेन ये हीना ह्यातिथ्येन बहिष्कृताः सर्वे ते वृषला ज्ञेयाः प्राप्तवेदा अपि द्विजाः॥ इति. हारीतः—चण्डालः श्वपचः क्षत्ता सूतवैदेहकौ तथा। मागधा योगवांश्चैव सप्तैतेऽन्तावसायिनः॥ इति. ज्योतिःशास्त्रे—रौद्रश्चैत्रश्च मैत्रश्च तथा साल्वाटकः स्मृतः। सावित्रश्च जयन्तश्च गान्धर्वः कुतपस्तथा॥ रौहिणश्च विरिञ्चिश्च विजयो नैर्ऋतस्तथा। माहेन्द्रो वरुणश्चैव भट पञ्च दशः स्मृतः॥ इति.

## ❀ महापातकिलक्षणम् ❀

संवर्तः—ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः। महापातकिनस्त्वेते तत्संयोगी च पञ्चमः॥ आक्रुष्टस्ताडितो वापि धनैर्वा विनियोजितः। यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम्॥ ज्योतिषं व्यवहारं च प्रायश्चित्तं चिकित्सकम्।

विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥ इति. मनुः—रजकश्चर्मकारश्च नटो बुरुड एव च । कैवर्तमेदभिल्लाश्च सप्तैते त्वन्त्यजातयः ॥ इति. ग्रामान्त्यजानाह शौनकः—अयस्कारः स्वर्णकारस्तक्षा पाषाणवर्धकः । कांस्यताम्रकरौ तन्तुवायश्च ध्वजिनोऽन्त्यजाः ॥ इति. बोधायनश्च—पितुर्गुरोर्नरेन्द्रस्य भार्यां गत्वा प्रमादतः। गुरुतल्पी भवत्येष पूर्वोक्ता तस्य निष्कृतिः ॥ सख्युर्भार्यां कुमारीं च स्वयोनिं चान्त्यजामपि । सगोत्रां स्वां स्नुषां पुत्रीं श्वश्रूं स्वसृसुतामपि ॥ पितुःस्वसारं मातुश्च मातुलानीं सखीमपि । मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥ आचार्यपत्नीं गत्वैव गुरुतल्पी भवेन्नरः । अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम् ॥ कन्यां प्रव्रजितां गत्वा निक्षिप्तां शरणागताम् । उदक्यां ब्राह्मणीं शूद्रामनुपातकिनः स्मृताः ॥इति. त्रयः स्नातका भवन्ति, विद्यास्नातको व्रतस्नातको वेदविद्याव्रतस्नातक इति । यः समाप्य वेदम् असमाप्य व्रतानि समावर्तते, स विद्यास्नातकः । यः समाप्य व्रतानि असमाप्य वेदं, स व्रतस्नातकः । यः पुनरुभयं, स वेदविद्याव्रतस्नातक इति. मनुः—निषेकादीनि कर्माणि यः करोति यथाविधि । संभावयति चान्नेन स विप्रो गुरुरुच्यते ॥ अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः । तमपीह गुरुं विन्द्याच्छ्रुतोपक्रियया तया ॥ उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ इति. याज्ञवल्क्यः— उपनीय ददद्वेदमाचार्यः स उदाहृतः । एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते ॥ वेदस्यैकदेशमध्यापयितोपाध्यायः, उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः । मातुलः श्वशुरस्त्राता मातामहपितामहौ ॥ वर्णज्येष्ठः पितृव्यश्च पुंसस्ते गुरवः स्मृताः । माता मातामही गुर्वी पितुर्मातुश्च सोदराः ॥ श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रियः॥ इति. विज्ञानेश्वरे—पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः॥ पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः॥ मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः॥ मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥ आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः । आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥ इति. भरद्वाजः—एकान्तौ शक्तितः कुर्याद्विहितानि समुत्सुकः । अकुर्वन् विहितं कर्म सद्यस्तु पतितो भवेत् ॥ इति. मरीचिः—पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया । क्रियापरा अपि हि ते पतिताः शूद्रतां गताः ॥ इति. संवर्तः—विधिना बुद्धिपूर्वेण यः संन्यासी गृही भवेत् । स एवारूढपतितः सर्वकर्मबहिष्कृतः ॥ भ्रष्टो यः स्वाश्रमाचारात्पतितः सोऽभिधीयते । इति. हारीतः—मातुस्तु पञ्चमादर्वाग्यः कन्यामुद्वहेद्द्विजः । गुरुतल्पी स विज्ञेयः सगोत्रां चैवमुद्वहन् ॥इति.

## ❀ शाखारण्डस्वरूपम् ❀

वसिष्ठः—एकदेशेपि शाखानां मध्ये योऽन्यतमं व्रजेत् । स्वशाखां संपरित्यज्य शाखारण्डः स उच्यते ॥ इति. लोकाक्षिः—यः स्वशाखां परित्यज्य पारक्यमनुग-

च्छति । शाखारण्डः स विज्ञेयः सर्वकर्मबहिष्कृतः ॥ इति. वसिष्ठः—यच्छाखी यैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् । तच्छाखाध्ययनं कुर्यात्त्यागेन पतितो भवेत् ॥ न जातु परशाखोक्तं बुधः कर्म समाचरेत् । आचरन् परशाखोक्तं कर्मारण्डः प्रकीर्तितः ॥ इति.

## ❀ वृषलीपतिस्वरूपम् ❀

संग्रहे—यावच्चैलं न गृह्णाति यावत्क्रीडातिपांसुभिः । यावद्दोषं न जानाति तावद्भवति नग्निका ॥ यावन्न लज्जयाङ्गानि कन्या पुरुषसन्निधौ । जान्वादीन्यवरूहेत तावद्भवति नग्निका ॥ इति. यमदक्षौ—अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी । दशवर्षा भवेद्गौरी अतऊर्ध्वं रजस्वला ॥ इति. स्मृत्यन्तरे—एकादशाब्दादारभ्य सर्तुनामावला भवेत् । ततस्या वृषली ज्ञेया तद्भर्ता वृषलीपतिः॥इति. देवलः—वन्ध्या च वृषली ज्ञेया वृषली च मृतप्रजा । अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥ यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः । असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥ इति.

## ❀ दुष्टवृत्तिः ❀

ऋतमुञ्छसिलं ज्ञेयममृतं स्यादयाचितम् । मृतं तु याचितं प्रोक्तं प्रमृतं कर्षणं स्मृतम् ॥ सत्यानृतं तु वाणिज्यं तेन वापीह जीव्यते । सेवाश्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ॥ इति. यमः—समार्घं धनमुद्धृत्य महार्घं यः प्रयच्छति । स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥ स्नेहद्रव्यरसानां च सत्वानां जीवतामपि । विक्रेता दानपुण्यानां भोच्यते ब्रह्महा बुधैः ॥ इति.

## ❀ दुष्टधनलक्षणम् ❀

नारदः—तत्पुनस्त्रिविधं ज्ञेयं शुक्लं शबलमेव च । कृष्णं च तस्य विज्ञेयः प्रभेदः सप्तधा पुनः ॥ श्रुतशौर्यतपः कन्याशिष्यदायान्वयागतम् । धनं सप्तविधं शुक्लमुदयोप्यस्य तद्विधः ॥ कुसीदकृषिवाणिज्यशुल्कशिल्पादिवृत्तिभिः । कृतोपकारादाप्तं च शबलं समुदाहृतम् ॥ पाशकद्यूतदैन्यार्तप्रतिरूपकसाहसैः । व्याजेनोपार्जितं द्रव्यं तत्कृष्णं समुदाहृतम् ॥ इति. याज्ञवल्क्यः—पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकाद्यञ्च स्त्रीधनं परिकीर्तितम् ॥ इति.

## ❀ शिल्पिलक्षणम् ❀

पराशरः—हिरण्यरूप्यवस्त्राणां काष्ठपाषाणचर्मणाम् । संस्कर्ता तत्क्रियाभिज्ञः शिल्पी चोक्तो मनीषिभिः ॥ इति.

## ❀ पूर्णपात्रलक्षणम् ❀

शातातपः—ग्रासमात्रा भवेद्भिक्षा ह्यग्रं ग्रासचतुष्टयम् । अग्रं चतुर्गुणीकृत्य हन्तकारं विदुर्बुधाः ॥ अष्टमुष्टिर्भवेत्किंचित्किंचिच्चत्वारि पुष्कलम् । पुष्कलानि च चत्वारि पूर्णपात्रं प्रचक्षते ॥ इति.

## ❀ पोष्यवर्गः ❀

दक्षः—माता पिता गुरुर्भार्या प्रजा दीनः समाश्रितः । अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ॥ इति.

## ❀ सद्गृहलक्षणम् ❀

श्रीभागवते—गृहं श्मशानं तव विम्बवर्जितं कथाविहीनाश्च गिरः शिवारुतम् । श्वसञ्छवो दास्यविनाकृतं वपुर्वदन्ति हि त्वय्यनिवेदितं विषम् ॥ जीवञ्छवो भागवताङ्घ्रिरेणुं न जातु मर्त्योभिलपेत यस्तु । श्रीविष्णुपद्या मनुजस्तुलस्याः श्वसञ्छवो यस्तु न वेदगन्धम् ॥ यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः । यत्तीर्थबुद्धिश्च जले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः ॥ इति. उत्तरगीतायाम्—चतुर्वेदधरो विप्रो वासुदेवं न विन्दति । वेदभारभराक्रान्तः स वै ब्राह्मणगर्दभः ॥ इति.

## ❀ परिवेत्ता ❀

यमः—ज्येष्ठे निर्विष्टे भार्या तु कनिष्ठस्य विधीयते । निर्विष्टश्चानिर्विष्टे तु परिवेत्ता स उच्यते ॥ इति.

## ❀ भागवतलक्षणम् ❀

आश्वमेधिके—अनन्यदेवताभक्ता ये मद्भक्तजनप्रियाः । मामेव शरणं प्राप्तास्ते मद्भक्ताः प्रकीर्तिताः ॥ द्वादशाक्षरतत्त्वज्ञश्चतुर्व्यूहविभागवित् । अच्छिद्रपञ्चकालज्ञः स वै भागवतः स्मृतः ॥ अर्थपञ्चकतत्त्वज्ञाः पञ्चसंस्कारसंयुताः ॥ आकारत्रयसंपन्ना महाभागवताः स्मृताः ॥ इति. श्रीभागवते—अर्चायामेव च हरेः पूजां यः श्रद्धयेहते । न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥ ईश्वरे तदधीने च बालिशेषु द्विषत्सु च । प्रेममैत्री कृपोपेक्षा यः करोति स मध्यमः ॥ सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः।भूतानि भगवत्यात्मन्येष भागवतोत्तमः॥ इति.

## ❀ वैष्णवलक्षणम् ❀

पुराणे—पूर्वभाषी प्रसन्नात्मा सर्वेषां वीतमत्सरः । अनसूयो गुणग्राही धार्मिको वैष्णवः स्मृतः ॥ इति. स्कान्दे—परमापदमापन्नो हर्षे च समुपस्थिते।

नैकादर्शी त्यजेद्यस्तु यस्य दीक्षा तु वैष्णवी ॥ समात्मा सर्वभूतेषु निजाचारादविप्लुतः । विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यते ॥ इति.

## ❀ ब्रह्मचर्यलक्षणम् ❀

भरद्वाजः-विहिताचरणं कर्म वैराग्यं निन्द्यवर्जनम् । ज्ञानं सुदृष्टिर्भक्तिस्तु हरिचिह्नसमाश्रयः ॥ इति. सुमन्तुः—ब्रह्मचर्यं तपो भैक्षं सन्ध्ययोरग्निकर्म च । स्वाध्यायो गुरुवृत्तिश्च चर्येयं ब्रह्मचारिणः ॥ इति. बृहस्पतिः—स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥ इति. योगयाज्ञवल्क्यः—ऋतावृतौ स्वदारेषु संगतिर्या विधानतः । ब्रह्मचर्यं तदेवोक्तं गृहस्थाश्रमवासिनाम् ॥ कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा । सर्वत्र मैथुनत्यागं ब्रह्मचर्यं प्रचक्षते ॥ ब्रह्मचर्यमिदं प्रोक्तं यतीनां ब्रह्मचारिणाम् । इति. बोधायनः—अन्तरा प्रातराशं च सायमाशं तथैव च । नित्योपवासी भवति यो भुङ्क्ते न कदाचन ॥ इति.

## ❀ प्रणामलक्षणम् ❀

शाण्डिल्यः—उरसा मनसा दृष्ट्वा शिरसापि धियापि च । पद्भ्यां कराभ्यां वाचा च प्रणामोऽष्टाङ्ग उच्यते ॥ पादौ शिरस्तथा हस्तौ निकुञ्च्य मुकुलाकृती । मनोबुद्ध्यभिमानैश्च प्रणामोऽष्टाङ्ग ईरितः ॥ इति.

## ❀ अर्धोदयलक्षणम् ❀

पराशरः—चतुर्दश्यष्टमी चैव ह्यमावास्या च पूर्णिमा । पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥ इति. अत्रिः—अमार्कपातश्रवणैर्युक्ता चेत्पुष्यमाघयोः । अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः ॥ इति. आत्रेये—नक्रस्थेऽर्के वैष्णवे भानुवारे पाते दर्शेऽनक्त अर्धोदयः स्यात् ॥ अनक्त इति पदच्छेदः । रात्रियोगे, नार्धोदय इत्यर्थः ॥ शंखः—अमावास्या तु सोमेन सप्तमी भानुना सह । चतुर्थी भानुपुत्रेण सोमपुत्रेण चाष्टमी ॥ चतस्रस्तिथयो ह्येताः सूर्यग्रहणसन्निभाः ॥ इति.

## ❀ आश्रमिलक्षणम् ❀

यमः—यतिलिङ्गप्रमुच्यये, शिखा यज्ञोपवीतं च वस्त्रं जन्तुनिवारणम् । त्रिदण्डं यस्य विद्यन्ते स यतिर्नेतरो यतिः ॥ शिक्यपात्र बृसी चैव कौपीनं कटिवेष्टनम् । ब्रह्मसूत्रं त्रिदण्डं च शिखा चैवैकवस्त्रकम् ॥ यस्यैतद्ध्रियते लिङ्गं स यतिर्नेतरो यतिः ॥ इति. दक्षश्च—मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते । गृहस्थो यष्टिवेदाद्यैर्नखरोमैर्वनाश्रमी ॥ त्रिदण्डेन यतिश्चैव लक्षणानि पृथक् पृथक् । यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती न चाश्रमी ॥ इति.

## ❀ दशविधविप्रलक्षणम् ❀

जातिनिर्णये–देवो मुनिर्द्विजो राजा वैश्यः शूद्रो विडालकः । पशुर्म्लेच्छश्च चण्डालो दश विप्राः प्रकीर्तिताः॥उञ्छवृत्तिर्मिताहारः संतुष्टः संयतेन्द्रियः । वेदशास्त्रार्थतत्त्वज्ञो देवो विप्रः स उच्यते ॥ फलमूलाशनो दान्तस्तपस्वी वेदशास्त्रवित् । कृत्याकृत्यविशेषज्ञः स विप्रो मुनिरुच्यते॥षट्कर्मनिरतो नित्यं देवतातिथिपूजकः । स्वाध्यायनिरतः साधुः स विप्रो द्विज उच्यते ॥ धनुर्वेदविशेषज्ञो राजसेवापरश्च यः॥ त्रिकर्मकृन्महोत्साही विप्रः क्षत्रिय उच्यते ॥ इति. त्रिकर्माणि–इज्याध्ययनदानानि॥हेमरत्नविशेषज्ञो योनिपोषणतत्परः । क्रयविक्रयतत्त्वज्ञः ■ विप्रो वैश्य उच्यते ॥ कृषिसेव्यसमाचारो धान्यसंग्रहणे रतः । कृत्याकृत्यविहीनश्च स विप्रः शूद्र उच्यते॥यत्र कुत्र प्रतिग्राही नित्य भ्रमणतत्परः॥कार्यमुद्दिश्य लुब्धश्च स विडाल इति स्मृतः॥गम्यागम्यं न जानाति स्त्रीषु यो हि निरर्गलः॥कृत्याकृत्यं न जानाति स विप्रः पशुरुच्यते॥ वापीकूपतडागादिदेवायतनभेदकः । विप्रदेवापवादी च स विप्रो म्लेच्छ उच्यते ॥ परहिंसापरः क्रूरः परदारपरायणः॥ परद्रव्याभिलापी च स चण्डालो हि निर्दयः ॥ इति.

## ❀ षट्कर्मविवरणम् ❀

पराशरः—सन्ध्या स्नानं जपो होमो देवतानां च पूजनम् । वैश्वदेवातिथेयं च षट्कर्माणि दिने दिने ॥ इति.

## ❀ अग्रिमब्राह्मणस्वरूपम् ❀

आश्वमेधिके—क्षान्तं दान्तं जितक्रोधं जितेन्द्रियमकल्मषम् । तमग्र्यं ब्राह्मणं मन्ये शेषाः शूद्रा इति स्मृताः ॥ कामक्रोधानृतद्रोहद्वेषलोभमदादयः । न सन्ति यत्र राजेन्द्र तं देवा ब्राह्मणं विदुः ॥ प्राणायामस्तु यत्काले यत्काले मामनुस्मरेत् । तत्काले ब्राह्मणो ज्ञेयः शेषकाले तथेतरः ॥ येन केनचिदाच्छन्नो येन केनचिदाश्रितः । यत्र क्वचन शायी स्यात्तं देवा ब्राह्मणं विदुः॥इति.

## ❀ नग्नलक्षणम् ❀

संवर्तः—कटिसूत्रं विना कर्म श्रौतं स्मार्तं करोति यः । तत्सर्वं निष्फलं विद्यात्सोपि नग्न इति स्मृतः ॥ इति. माधवीये—नग्नो मलिनवस्त्रः स्यान्नग्नो नीलपटस्तथा । विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च ॥ श्रौतं स्मार्तं तथा कर्म न नग्नश्चिन्तयेदपि ॥ इति. पराशरः—अकच्छः पुच्छकच्छो वाऽर्द्धकच्छः कटिवेष्टितः । कौपीनकधरश्चैव नग्नः पञ्चविधः स्मृतः ॥ इति. संवर्तः—अकच्छः पुच्छकच्छश्च तिर्यक्कच्छोर्धकच्छक । कटिसूत्रे बद्धकच्छो नग्नः पञ्चविधः स्मृतः॥ इति.

## ❀ आरूढपतितलक्षणम् ❀

हारीतः—यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम् । गृहेषु स्वरवतिष्ठे- त्तमारूढच्युत विदुः ॥ इति.

## ❀ यमनियमादिविवरणम् ❀

योगयाज्ञवल्क्यः—अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् । क्षमा धृति मिताहारः शौचं चेते यमा दश ॥ तपः सन्तोषमास्तिक्यं दानमीश्वरपूजनम् । वे- दान्तश्रवणं चैव ह्रीर्मतिश्च जपो हुतम् ॥ दशैते नियमाः प्रोक्ता मुनिभिस्तत्त्वद- र्शिभिः ॥ इति. आर्जवं त्रिविधकरणैक्यम्, आस्तिक्यं परलोकोस्तीति व्यवसायः, म- तिर्विहितेषु ॥

## ❀ देवलकस्वरूपम् ❀

आश्वमेधिके—देवार्चनपरो विप्रो वित्तार्थी वत्सरत्रयम् । स वै देवल को नाम सर्वकर्मबहिष्कृतः ॥ इति संकर्षणसंहितायाम्—कर्मदेवलकाः केचि- त्कल्पदेवलकाः परे । शुद्धदेवलकाः केचित्त्रिधा देवलकाः स्मृताः ॥ अर्थार्थी काल- निर्देशी यो देवं पूजयेत्सदा । कर्मदेवलको नाम सर्वकर्मबहिष्कृतः ॥ पञ्चरात्र विधानज्ञो दीक्षाविरहितोऽर्चक । चतुर्वेदाधिकारोऽपि कल्पदेवलकः स्मृतः ॥ आगमोक्तविधानज्ञो रुद्रकाल्युपजीवकः । शुद्धदेवलको नाम सर्वकर्मविगर्हितः ॥ आर्षोक्तेन विधानेन देवलत्वं न विद्यते । तस्मात्सर्वप्रयत्नेन वैदिकेनैव पूजयेत् ॥ इति. अत्रिः—वैदिकेनैव विधिना दम्भलोभविवर्जितः । पूजयेद्भक्तितो विष्णुं स हि देव- लको न वै ॥ इति विष्णुधर्मोत्तरे—चाण्डिकायाश्च दुर्गाया ज्येष्ठाया भैरवस्य च । रुद्रस्य पूजका ये तु ते वै देवलका स्मृताः ॥ येन केन प्रकारेण विष्णोराराधनं परम् । तस्माद्देवलकत्वं तु न विष्णुविषये क्वचित् ॥ इति पुराणे—देवार्चनपरो ह्यासीत्परार्थं वित्तकाङ्क्षया । चतुर्वेदधरो विप्रः स चण्डालसमो भवेद् ॥ इति.

## ❀ संकरजातिस्वरूपम् ❀

याज्ञवल्क्यः—विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् । अम्बष्ठः शूद्र्यां निषादो जातः पारशवोपि वा ॥ वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ । शूद्रायां करणो वैश्याद्विन्नास्वेष विधिः स्मृत ॥ ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकः स्मृतः ॥ शूद्राज्जातस्तु चण्डालः सर्वकर्मबहिष्कृतः ॥ क्षत्रिया मागधं वैश्याच्छूद्रात् क्षत्तारमेव च । शूद्रादायोगवं वैश्या जनयामास वै सु- तम् ॥ माहिष्येण करण्यां तु रथकारः प्रजायते । असत्सन्तस्तु विज्ञेयाः प्रतिलोमानु- लोमजाः ॥ इति. अस्यार्थः—ब्राह्मणेन क्षत्रियायां विन्नायामुत्पन्नो मूर्धावसिक्तः ॥ वैश्य- कन्यायां विन्नायामम्बष्ठः ॥ शूद्रायां विन्नायां निषादः । निषादो नाम मत्स्यघातजीवी ।

पारशवो निषाद इति विकल्पः। वैश्यायां शूद्रायां च विन्नायां राजन्यात् माहिष्योग्रौ सुतौ क्रमाद्भवतः। वैश्येन शूद्रायां विन्नायां जातः करणः। एते च मूर्धावसिक्ताम्बष्ठनिषादमाहिष्योग्रकरणाः षडनुलोमजाः। ब्राह्मण्यां क्षत्रियवैश्यशूद्रैरुत्पादिता यथाक्रमं सूतवैदेहकचण्डाला भवन्ति। क्षत्रिया वैश्यान्मागधं नाम पुत्रं जनयति। सैव शूद्रात् क्षत्तारं नाम पुत्रं, वैश्यस्त्री तु शूद्रादायोगवं पुत्रं जनयति। एते च सूतवैदेहकचण्डालमागधक्षत्रायोगवाः षट् प्रतिलोमजाः। क्षत्रियेण वैश्यायाः मुत्पादितो माहिष्यः। वैश्येन शूद्रायामुत्पादिता करणी। तस्यां माहिष्येणोत्पादितो रथकारो नाम जात्यन्तरं भवति। असन्तः प्रतिलोमजाः, सन्तश्चानुलोमजा ज्ञातव्याः॥ इति.

## ❀ काण्डपृष्ठादिदुराचाराः ❀

हारीतः—शूद्रादक्तोम्भसादक्तो ये चैव सिवकाः सुताः। सर्वे ते मैत्रिणः प्रोक्ताः काण्डपृष्ठा न संशयः॥ इति. यमः—स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत्। तेन दुश्चरितेनासौ काण्डपृष्ठ इति स्मृतः॥ इति. स्मृतिमाधवीये—न जुहोत्युचिते काले न स्नाति न ददाति च। पितृदेवार्चनाद्धीनः स पण्डः परिकीर्तितः॥ इति.

## ❀ अभोज्यान्नविवरणम् ❀

विभवे सति नैवार्थे ददाति न जुहोति च। तमाहुरासुं तस्यान्नं भुक्त्वा कृच्छ्रेण शुध्यति॥ दम्भार्थं जपते यस्तु तप्यते च तपस्तथा। न परत्रार्थमित्युक्तं स मार्जारः प्रकीर्तितः॥ सभागतानां यः सभ्यः पक्षपातं समाचरेत्। तमाहुः कुक्कुटं देवास्तस्याप्यन्नं विवर्जयेत्॥ इति. संग्रहे—शूद्रस्पृष्टं च तत्पक्वं तद्दृष्टं तन्निमन्त्रितम्। तदुच्छिष्टं तदामं च शूद्रान्नं षड्विधं स्मृतम्॥ इति. पराशरः—आमं शूद्रस्य शूद्रान्नं पक्वमुच्छिष्टभोजनम्। तस्मादामं च पक्वं च दूरतः परिवर्जयेत्॥ यो हि हित्वा विवाहाग्निं गृहस्थ इति मन्यते। अन्नं तस्य न भोक्तव्यं वृथा पाको हि स स्मृतः॥ इति.

## ❀ कदर्यहैतुकादिस्वरूपम् ❀

गृहीत्वाग्निं समारोप्य पञ्च यज्ञान्न निर्वपेत्। परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्तितः॥ पञ्चयज्ञान् स्वयं कृत्वा परान्नमुपजीवति। सततं प्रातरुत्थाय परपाकरतस्तु सः॥ न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत्। भोजनार्थं हि ते शंसन्वान्ताशीत्युच्यते बुधैः॥इति. मनुः—आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत्। लोभाद्यः पितरौ मोहात्स कदर्य इति स्मृतः॥इति. पराशरः—युक्तिच्छलेन सर्वत्र यः शास्त्रविहितेष्वपि। संशयं कुरुते सोयं हैतुको नास्तिका-

धमः ॥ धर्मव्यवस्थां यः कुर्याद्विरोधे सति युक्तिभिः । न्यायविद्धर्मशास्त्रज्ञो हैतुकः परिपन्मतः॥ इति. बोधायनः—शङ्कापिहितचारित्रो यः स्वाभिप्रायमाश्रितः । शास्त्रातिगः स्मृतो मूर्खो धर्मतन्त्रोपरोधनात् ॥ इति.

## ❀ अथ षट् समयाः ❀

अन्यत्र—बौद्धमार्हतकं चैव शैवं पाशुपतं तथा । कापालं पञ्चरात्रं च षडेते समयाः स्मृताः ॥ इति.

## ❀ अविद्यस्वरूपम् ❀

पुराणे—अविद्यः प्राकृतः प्रोक्तो वैद्यो वैष्णव उच्यते । अविद्येन न केनापि वैद्यः किंचित्समाचरेत् ॥ इति.

## ❀ दैवासुरसृष्टिविभागः ❀

बृहन्नारदीये—सृष्टिस्तु द्विविधा प्रोक्ता दैवासुरविभेदतः । हरिभक्तियुता देवास्तद्धीना ह्यसुराः स्मृताः ॥ इति. पुराणान्तरे—द्विविधो भूतसर्गः स्याद्दैव आसुर एव च । हरिभक्तियुतो दैवो विपरीतस्तथासुरः ॥ इति. श्रीवैकुण्ठसंहितायाम्—ते देवाः परिकीर्त्यन्ते ये सुरालयवासिनः । वैकुण्ठवासिनः सर्वे साध्या देवाः प्रकीर्तिताः ॥ इति.

## ❀ पिण्डावदानप्रमाणम् ❀

कुक्कुटाण्डकमात्रस्तु पिण्ड इत्यभिधीयते । अङ्गुष्ठपर्वमात्रं स्यादवदानमिति स्मृतम् ॥ इति.

## ❀ अथविष्णुनामनिर्वचनम् ❀

अथ संज्ञाप्रसङ्गाद्विष्णुनामनिर्वचनं किंचिदुच्यते । हरिवंशे—मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् । तस्मान्माधवनामासि धवः स्वामीति शब्दितः॥ इति. स्कान्दे—क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गे सम्भूतो तस्मात्केशवनामवान् ॥ नष्टां वै धरणीं पूर्वमविन्दन्वै गुहागताम् । गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः॥ इति. हरिवंशे—ममोपरि यथेन्द्र त्वं स्थापितो गोभिरीश्वरः। उपेन्द्र इति कृष्ण त्वां वदयन्ति भुवि देवताः ॥ इति. श्रीभगवान्—छादयामि जगत्सर्वं भूत्वा सूर्य इवांशुभिः । वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम ॥ इति. सनत्कुमारः—प्रणमन्ति ह्यमुं देवास्तस्मात्प्रणव उच्यते । अधो न क्षीयते जातु स्मृतस्तस्मादधोक्षजः ॥ इति. महाभारते—नराज्जातानि तत्त्वानि नाराणीति ततो विदुः । तान्येव चायनं तस्य तेन नारायणः स्मृतः॥ इति. श्रीविष्णुपुराणे—आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ इति. व्यासः—कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः

तयोरैक्यं परं ब्रह्म कृष्णो भवति शाश्वतः॥ इति-महाभारते—व्याप्ता मे रोदसि पार्थ कान्तिरभ्यधिका तथा। क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिधीयते॥इति. श्रीविष्णुपुराणे—अशुभानि निराचष्टे पुष्णाति शुभसन्ततिम्। स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं विदुः॥ यदाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सततो भावस्तस्मादात्मेति कथ्यते॥ पुराणपूर्वसद्भावात्पुरुदानात्तथैव च। शयनात्पुरि सर्वेशः पुरुषः परिकीर्तितः॥ पुरमारुह्य सकलं तस्मिञ्छेते महाप्रभुः। तस्मात्पुरुष इत्येव प्रोच्यते तत्त्वचिन्तकैः॥श्रुतौ कूर्मरूपं जले सर्पन्तं ब्रह्माणं प्रति भगवानाह—"पूर्वमेवाहमिहासमिति, तत्पुरुषस्य पुरुषत्वम्" इति. ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे। एकस्तिष्ठति विश्वात्मा स तु नारायणो विभुः॥ इति.महाभारते—"न ब्रह्मा नेशानो नेमे द्यावापृथिवी"इति श्रुतिश्च॥ सृष्टौ वसति भूतेषु संहारे तत्र तत्र च। वसन्ति यस्मिन्सर्वाणि वासुदेवस्ततः स्मृतः॥ व्यापनाद्व्याप्य भूतस्य चेतनाचेतनस्य च। सर्वस्य जगतः श्रीशो विष्णुरित्यभिधीयते॥बृहत्वाद्बृंहणत्वाच्च सर्वलोकैककारणम्। सर्वेश्वरः श्रियो भर्ता परं ब्रह्मेति गीयते॥ब्रह्माणं शितिकण्ठं च यमं वरुणमेव च। प्रसह्य हरते यस्मात्तस्माद्धरिरिहोच्यते॥इति. श्रीविष्णुपुराणे—ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः॥ शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते। मैत्रेयभगवच्छब्दः सर्वकारणकारणे॥तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः। शब्दोयं नोपचारेण ह्यन्यत्र ह्यौपचारिकः॥ इति अत एवोपचारप्रयोगप्रवृत्तिनिमित्तमाह—उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥ अतएव विष्णुव्यतिरिक्तानां तदंशत्वेन पुरुषशब्दवाच्यत्वमौपचारिकमिति द्रष्टव्यम्॥ ब्रह्माद्याः सकला देवा यक्षतुम्बुरुकिंनराः। ते सर्वे पुरुषांशत्वात्प्रोच्यन्ते पुरुषा इति॥ इतिवचनात्। एवं च सति यत्र यत्र भगवत्पुरुषपरमात्मेश्वरादिशब्दाः प्रयुज्यन्ते. तत्र तत्र विष्णुविभूत्येकशब्दत्वात्तच्छब्दवाच्यत्वं द्रष्टव्यम्॥

## ❀ प्रदोषनिर्णयः ❀

प्रदोषमाह बृहन्मनुः—त्रयोदश्यां तु सप्तम्यां चतुर्थ्यामर्धरात्रतः। अर्वाङ्नाध्ययनं कुर्याद्यदिच्छेच्छ्रेयस धारणम्॥ रात्रौ यामत्रयादर्वाग्यदि पश्येत्त्रयोदशीम्। सा रात्रिस्सर्वकर्मघ्नी शङ्करारधनं विना॥ इति वृद्धगार्ग्यः—रात्रौ यामद्वयादर्वाक्सप्तमी स्यात्त्रयोदशी। प्रदोषस्स तु विज्ञेयस्सर्वविद्याविगर्हितः॥ रात्रौ नवसु नाडीषु चतुर्थी यदि दृश्यते। प्रदोषस्स तु विज्ञेयो वेदाध्यायो विगर्हित.॥ इति विश्वामित्रः—मध्ये द्वियामयो रात्रौ नाधीयीत कदाचन। वेदवेदाङ्गकानीच्छन्नायुर्विद्या यशो बलम्॥ आद्यन्तयोः कलामात्रा यदि पश्येत्त्रयोदशीम्। प्रदोषस्स तु विज्ञेयस्सर्वशब्दविवर्जित॥ इति श्रीधरीये—आदौ मध्ये तथाऽन्ते वा यस्या रात्र्यां त्रयोदशी। अस्ति तत्र कलामात्रा प्रदोष इति विश्रुतः॥ त्रयोदशी यदा रात्रौ यामस्तत्र निशामुखे।

प्रदोप इति विज्ञेयो ज्ञानार्थी मौनमाचरेत् ॥ भोजनं मैथुनं यानमभ्यङ्गं हरिदर्शनम् । अन्यानि शुभकार्याणि प्रदोषे नैव कारयेत् ॥ इति. स्कान्दे—त्रिमुहूर्त प्रदोषः स्याद्रवावस्तंगते ततः । मितसंध्यत्रयोदश्यां संस्मरन्नात्मनो हितम् ॥ अह्नोऽष्टमांशसंयुक्तं रात्र्यर्धं मौनमाचरेत् ॥ इति वचनाच्च, त्रिमुहूर्तद्वियामयोः प्रदोषत्वं विकल्प्यते । प्रकारान्तरम् स्मृतिचन्द्रिकायाम्—चतुर्थी सप्तमी चैव त्रयोदश्यस्तमानतः । प्रदोषमपि कुर्वीत त्र्येकार्धघटिकाः क्रमात् ॥ इति. अस्तमयादूर्ध्वं त्र्येकार्धघटिकाः क्रमेण चतुर्थीसप्तमीत्रयोदश्यो यदि स्युस्तदा प्रदोषं कुर्यादित्यर्थः ॥ अस्यापवादः—अर्चकान्परिचारांश्च वैष्णवान् ज्ञानिनो यतीन् । दासीदासादिकांश्चैव प्रदोषस्तु न बाधते ॥. प्रदोषे भानुवारे च चरराश्युदये तथा । स्वल्पदानादपि शिष्टं विनश्यति न संशयः ॥ इति.

## ❀ चूडामणिलक्षणम् ❀

व्यासः—सोमवारे विधोर्ग्रहस्सूर्यवारे रवेर्ग्रहः । चूडामणिरिति ख्यातस्तत्रानन्तं फलं लभेत् ॥ इति.

## ❀ मन्वन्तरादिनियमः ❀

मन्वन्तराण्याह दक्षः—आश्वयुक्छुक्लनवमी कार्तिकी द्वादशी सिता । तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥ फाल्गुनस्याप्यमावास्या पुष्येऽप्येकादशी सिता । आषाढस्यापि दशमी माघमासे तु सप्तमी । श्रावणस्याष्टमी कृष्णा आषाढस्यापि पूर्णिमा ॥ कार्तिकी फाल्गुनी ज्येष्ठा चैत्री पञ्चदशी तिथिः । मन्वन्तराद्यश्चैते दत्तस्याक्षयकारकाः ॥ इति.

## ❀ युगादिनिर्णयः ❀

युगादीनाह पराशरः—वैशाखमासस्य सिता तृतीया नवम्यसौ कार्तिकशुक्लपक्षे । नभस्य मासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ॥ इति.

## ❀ अपवित्रप्राणिनः ❀

आश्वमेधिके—लोके त्रीण्यपवित्राणि पञ्चामेध्यानि भारत । श्वा च शूद्रश्च काकश्चाप्यपवित्राणि पाण्डव ॥ देवलः कुक्कुटो यूप उदक्या वृषलीपतिः । पञ्चैते स्युरमेध्यानि न स्पृष्टव्याः कदाचन ॥ इति.

## ❀ देहदोषविभागः ❀

चतुर्वेदविदश्चापि देहे षड् वृषलाः स्मृताः । क्षत्रियास्सप्त विज्ञेया वैश्यास्त्वष्टौ प्रकीर्तिताः ॥ नियता पाण्डवश्रेष्ठ शूद्राणामेकविंशतिः । कामः क्रोधश्च लोभश्च मानश्च मद एव च ॥ महामोहश्च इत्येते देहे षड् वृषलाः स्मृताः । गर्वस्तम्भो ह्यहंकार ईर्ष्या भिद्रोह एव च ॥ पारुष्यं क्रूरता चेति सप्तैते क्षत्रिया मताः । तीक्ष्णता निकृतिर्माया शाठ्यं दम्भो ह्यनार्जवम् ॥ पैशुन्यमनृतं चेति वैश्यास्त्व-

द्यौ प्रकीर्तिताः । तृष्णा बुभुक्षा निद्रा च ह्यालस्यं चाघृणादया ॥ आधिश्चापि विवादश्च प्रमादो हीनसत्वता । भयं विक्लवता जाड्यं पापिता मन्युरेव च ॥ आशौचाश्रद्धधानत्वे ह्यनवस्थाप्ययन्त्रणम् । आशौचं मलिनत्वं च शूद्रा ह्येते प्रकीर्तिताः ॥

## ❀ सद्ब्राह्मणलक्षणम् ❀

यस्मिन्नेते प्रवर्तते स हि ब्राह्मण उच्यते । येषु येषु च भावेषु यत्कालं वर्तते द्विजः ॥ तत्तत्कालं स विज्ञेयो ब्राह्मणो ज्ञानदुर्बलः । भूर्भुवः स्वरिति ब्रह्म यो वेद परमं द्विजः ॥ स्वदारनिरतः शान्तो विज्ञेयः स हि भूसुरः । समुच्चये—कामक्रोधानृतद्रोहद्वेषलोभमदादिभिः । दोषैरेतैर्विमुक्तो यः स शान्तः सर्वनिस्पृहः ॥ भुक्त्वा स्पृष्ट्वा च दृष्ट्वा च श्रुत्वा घ्रात्वा च यो नरः । न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥ पराशरः—साधवः क्षीणपापास्तु सच्छब्दः साधुवाचकः । तेषामाचरणं यत्तु सदाचारः स उच्यते ॥

## ❀ परिवेत्रादिस्वरूपम् ❀

संग्रहे—दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ तयोः पर्यायतो ज्येष्ठः परिवेत्ता कनीयकः ॥

## ❀ वेदविक्रयिनिरूपणम् ❀

मनुः—योऽर्थार्थी द्विजे दद्यात्पठेद्वैवाविधानतः । अनध्यायी च तं प्राहुर्वेदविप्लावकं बुधाः ॥ प्रत्यापनं प्राध्ययनं प्रश्नपूर्वप्रतिग्रहः । याजनाध्यापने वादः षड्विधो वेदविक्रयः ॥

## ❀ यज्ञोपवीतनामानि ❀

भरद्वाजः—उपवीतं ब्रह्मसूत्रं सूत्रं यज्ञोपवीतकम् । यज्ञसूत्रं देवलक्ष्म इत्याख्याः षट् क्रमेण तु ॥

## ❀ दर्भभेदनिरूपणम् ❀

भरद्वाजः—अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः । समूलाः कुतपाः प्रोक्तारिछन्नाग्रास्तृणसंज्ञकाः ॥ कुशाः काशा यवा दूर्वा गोधूमाश्चापि कुन्दुराः । उशीरा व्रीहयो मौञ्जा दश दर्भाश्च बल्वजाः ॥

## ❀ व्रतस्वरूपम् ❀

विज्ञानेश्वरे—गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः । प्रवर्त्तनं हितानां च तत्सर्वं व्रतमुच्यते ॥

## ❀ हविर्लक्षणम् ❀

मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम् । अक्षारलवणं यच्च प्रकृत्या हविरुच्यते ॥

## ❀ प्रायश्चित्तनिर्वचनम् ❀

प्रचेताः—प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपोनिश्चयसंयोगात्प्रायश्चित्तमिति स्मृतम् ॥

## ❀ दीक्षाशब्दनिर्वचनम् ❀

दीयते ज्ञानसम्बोधः क्षीयते पापसञ्चयः। दीयते क्षीयते यस्मात्सा दीक्षेत्यभिधीयते॥

## ❀ जपशब्दार्थः ❀

हारीतः-जकारो जन्मविच्छेदः पकारः पापनाशनः। जन्मपापहरो यस्माज्जप इत्युच्यते बुधैः॥

## ❀ षडशीत्यादिपुण्यकालः ❀

वृद्धवसिष्ठः-कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः। षडशीतिमुखाः प्रोक्ताः षडशीतिगुणाः फले॥ वृषवृश्चिककुम्भेषु सिंहे चैव रवेर्गतिः। एतद्विष्णुपदं नाम विषुवादधिकं फलैः॥ मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने। विषुवे तु तुला मेषे गोलमध्ये तथापराः॥

## ❀ अहतवस्त्रलक्षणम् ❀

हेमाद्रौ-ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्। अहतं तद्विजानीयात्सर्वकर्मसु पावनम्॥

## ❀ नीलवृषभलक्षणम् ❀

लोहितो यस्तु वर्णेन मुखे पृष्ठे च पाण्डुरः। श्वेतः खुरविषाणाभ्यां स वृषो नील उच्यते॥

## ❀ एकोद्दिष्टपार्वणविवेकः ❀

कार्ष्णाजनिः-एकमुद्दिश्य यद्दत्तमेकोद्दिष्टं प्रकीर्तितम्। त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयो विदुः॥

## ❀ सवितृशब्दनिर्वचनम् ❀

मैत्रायणीयश्रुतिः-" एतत्सवितुर्वरेण्यं ध्रुवमचलममृतं भर्गाख्यं विष्णुसंज्ञं सर्वाधारं धाम " योगयाज्ञवल्क्यः-ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम्। भर्गाख्यं विष्णुसंज्ञं तु ज्ञात्वाऽमृतमुपाश्नुते॥ प्रसौति सकलां चेष्टां प्रसूते सकलं जगत्। अवतेर्गतिकान्त्यर्थोत्तरतेर्दानकर्मणः॥ गतो ह्यवति सर्वत्र षड्भिः कान्तो गुणैः सह। भोगापवर्गयोर्दाता सवितेति निरुच्यते॥

## ❀ धर्मानुष्ठानयोग्यदेशः ❀

योग्यदेशानाह याज्ञवल्क्यः-स्वभावाद्यत्र चरति कृष्णसारः सदा मृगः। धर्मसंरक्षणार्थाय तस्मिन्देशे वसेद्द्विजः॥ विष्णुः-यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत। धर्मदेशः स विज्ञेयो द्विजानां धर्मसाधनः॥ मनुः-स्वभावाद्यत्र विचरेत्कृष्णसारमृगो द्विज। विज्ञेयो धार्मिको देशो म्लेच्छदेशस्ततः परः॥

## ❀ धर्मदेशविभागः ❀

धर्मदेशानाह-ब्रह्मावर्तः परो देशो ऋषिदेशस्त्वनन्तरः। मध्यदेशस्ततो न्यून आर्यावर्तस्त्वनन्तरः॥ शाण्डिल्यः-यत्र भागवता नित्यं पञ्चकालपरायणाः। निव-

सन्ति सदा युक्तास्तत्क्षेत्रं नैमिषं विदुः ॥ निवसन्ति महात्मानो यत्र चैकान्तिनो द्विजाः । देवा देवर्षयो नित्यं तं देशं पर्युपासते ॥ एतानाह मनुः—सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तमेव चोत्तमं देशं ब्रह्मावर्तं प्रचक्षते ॥ कुरुक्षेत्रं च मात्स्यश्च पाञ्चालः शूरसेनकः । एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः ॥ **विष्णुः**—चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे निवर्तते । म्लेच्छदेशः स विज्ञेयो ह्यार्यावर्तादनन्तरः ॥ आर्यावर्तसमुत्पन्नो द्विजो वाप्ययवाद्विजः । नर्मदासिन्धुपारं च करतोयां न लङ्घयेत् ॥ आर्यावर्तमतिक्रम्य विना तीर्थक्रियां द्विजः । आज्ञां चैव तथा पित्रोरैन्दवेन विशुद्ध्यति ॥ न शूद्रराज्ये निवसेन्नाधार्मिकजनावृते । न पाषण्डजनाक्रान्ते नोपसृष्टेऽन्त्यजैर्नृभिः ॥ **आपस्तम्बः**—प्रभृतैधोदके ग्रामे यत्रात्माधीनं मयमणं तत्र पापो धर्म्यो ब्राह्मणस्य ॥ **विष्णुधर्मोत्तरे**—प्रभासे पुष्करे काश्यां नैमिषे मणिकर्णिके । गङ्गायां सरयूतीरे निवसेद्धार्मिको जनः ॥ शूद्रश्च यस्मिन्कस्मिन्वा निवसेद्वृत्तिकाङ्क्षितः । **आश्वमेधिके**—नगरे पत्तने वापि यो द्वादश समा वसेत् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ राजाश्रयेण यो मर्त्यो द्वादशाब्दं वसेद्विजः । जीवमानो भवेच्छूद्रो नात्र कार्या विचारणा ॥

## ❀ श्रुतिस्मृतिप्रवर्तनप्रकारः ❀

**अथ स्मृतिकर्तारः**—तत्र मुनिभिः सह व्यासेन—यस्मिन्मन्वन्तरे धर्माः कृतत्रेतादिके युगे । सर्वे धर्माः कृतायुक्ताः सर्वे नष्टाः कलौ युगे ॥ चातुर्वर्ण्यसमाचारं केचित्साधारणं विदुः । चतुर्णामपि वर्णानां कर्तव्यं धर्मकोविदैः ॥ ब्रूहि धर्मस्वरूपं तु स्थूलं सूक्ष्मं च विस्तरात् । इति पृष्टः सन्, व्यासवाक्यावसाने तु मुनिमुख्यः पराशरः । शृणु पुत्र प्रवक्ष्यामि शृण्वन्तु मुनिपुङ्गवाः ॥ कल्पे कल्पे क्षयोत्पत्त्यां ब्रह्मविष्णुमहेश्वराः । श्रुतिस्मृतिसदाचारनिर्णेतारस्तु सर्वदा ॥ न कश्चिद्वेदकर्ता च वेदस्मर्ता चतुर्मुखः । तथैव धर्मं स्मरति मनुः कल्पान्तरान्तरे ॥ इति प्राह तदेवम् । वेदस्तावदनादिः, ततो धर्मस्मरणस्य ब्रह्माद्युपदेशपरम्परायातस्य कर्तारो मन्वादयः । एतदुक्तं भवति । कल्पादौ चतुर्मुखं सृष्ट्वाण्डमध्ये तस्मै वेदान् विष्णुरुपदिशति । ततो ब्रह्मा वेदशब्देभ्य एव चातुर्वर्ण्यकृत्यजातं सृजति । एवं चतुर्मुखोपदिष्टं मन्वादयः कल्पान्तरेषु तमेव धर्मं स्मृत्वा लोकानुग्रहार्थं धर्मशास्त्रं कुर्वन्तीति ॥ **वसिष्ठः**—वेदो हि भगवानेष सर्गप्रलयवर्जितः । अचिन्त्यः सर्वभूतानां धर्मशास्त्रं ततोभवत् ॥ **श्रीविष्णुपुराणे**—नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥ अन्यत्र च—न जातु विचिकित्सेत धर्मशास्त्रं द्विजोत्तमः । तस्य धर्मप्रमाणत्वाद्वेदाद्धर्मो हि निर्बभौ ॥

## ❀ स्मृतिप्रणेतारः ❀

मन्वादीनाह **याज्ञवल्क्यः**—मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनाङ्गिराः । यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥ पराशरव्यासशङ्खलिखिता दक्षगौतमौ । शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥ प्रचेता नारदो योगी बौधायनपितामहौ । सुमन्तुः

काश्यपो बभ्रुः पैठीनो व्याघ्र एव च ॥ सत्यव्रतो भरद्वाजो गार्ग्यः कार्ष्णाजिनिस्तथा। जाबालिर्जमदग्निश्च लोगाक्षिर्ब्रह्मसंभवः ॥ इति धर्मप्रणेतारः षड्त्रिंशदृषयः स्मृताः । अष्टाशीति सहस्राणि मुनयो गृहमेधिनः ॥ पुनरावर्तिनो बीजभूता धर्मप्रवर्तकाः ॥

## ❀ सदाचारनिरूपणम् ❀

**विष्णुपुराणे**–वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥ **व्यासः**–वेदाध्ययनहीनोपि श्रद्दधानो जितेन्द्रियः । आचारयुक्तो विप्रस्तु पुण्यां गतिमवाप्नुयात् ॥ श्रौतं कर्म न चेच्छक्तः कर्तुं स्मार्तं समाचरेत् । तत्राप्यशक्तः करणे सदाचारं लभेद्बुधः ॥ न जातिर्न कुलं तात न स्वाध्यायो न च श्रुतम् । कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥ **महाभारते**–सर्वागमानामाचारः प्रथमं परिकल्प्यते । आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ **संवर्तः**–गृहस्थधर्ममाश्रित्य यो धर्मं न समाचरेत् । स याति नरकं घोरं तस्माद्धर्मं समाचरेत् ॥ **संग्रहे**–गायत्रीमात्रसारोपि वरो विप्रः सुयन्त्रितः । नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥ **पुराणे**–वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च । अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ सदाचारहीनो हतः, धर्मकृत्येषु बहिष्कृत इत्यर्थः । अत एव तदभावे दोषमाह **पराशरः**–चतुर्णामपि वर्णानामाचारो धर्मपालनम् । आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः ॥ **श्रीविष्णुपुराणे च**–समुल्लंघ्य सदाचारं कश्चिन्नाप्नोति शोभनम् । इत्याह भगवानौर्वो मैत्रेय परिपृच्छते ॥ **नारदः**–धिग्जन्माचाररहितं जन्म धिङ् मानवर्जितम् । शूद्रेपि दृश्यते वृत्तं ब्राह्मणे न तु दृश्यते ॥ शूद्रोपि ब्राह्मणो ज्ञेयो ब्राह्मणः शूद्र एव सः । **संवर्तः**–सदाचारेण देवत्वमृषित्वं च तथैव च । प्राप्नुवन्ति कुयोनित्वं मनुष्यास्तद्विपर्यये ॥ **बृहस्पतिः**–शौर्यवीर्यार्थरहितस्तपोज्ञानविवर्जितः । आचारहीनः पुत्रस्तु मूत्रोच्चारसमः स्मृतः ॥ शौर्यादिरहितः क्षत्रियपुत्रः, अर्थरहितो वैश्यपुत्रः, तपोज्ञानरहितो ब्राह्मणपुत्रः, ब्राह्मणादीनां शुश्रूषारहितः शूद्रपुत्र इति विवेकः । अनेन मुमुक्षूणामपि वर्णाश्रमाचारोनुष्ठेय इति सिद्धम् । अन्यथा प्रत्यवायस्मरणात् । **यदगायि भगवता गीताचार्येण**–यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ **अन्यत्र स एवाह**–वर्णानामाश्रमाणां च मर्यादा या मया कृता । तां ये समनुवर्तन्ते प्रसादस्तेषु मे भवेत् ॥ तस्मात्संसारिणां पुंसां मत्प्रसादं विना क्वचित् । निश्रेयसकरं नान्यद्बुध्यस्व कमलासन ॥ **आश्वमेधिके**–श्रुतिस्मृतिर्ममैवाज्ञा यस्तामुल्लंघ्य वर्तते । आज्ञाच्छेदी मम द्रोही मद्भक्तोपि न वैष्णवः ॥ अनुष्ठानप्रकारं च **स एवाह**–एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ इति, फलसंगकर्तृत्वत्यागपूर्वकं केवलं विहितत्वात्, भगवत्कैङ्कर्यबुद्ध्या अनुष्ठेयमित्यर्थः । अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ इति । तस्मान्मुमुक्षोरपि काम्यनिषिद्धकर्मणी त्याज्ये । नित्यं [illegible] कश्चित्फल-

श्रवणेपि तत्त्यागपूर्वकं स्वतन्त्राज्ञासिद्धत्वेन कार्यमेवेति सिद्धम्। नियतस्य तु संन्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ इति गीतत्वात् ।

## ❀ सदाचारपरित्यागे प्रत्यवायः ❀

**तथा लक्ष्मीतन्त्रे च**–यथा हि वल्लभो राज्ञो नदीं राज्ञा प्रवर्तिताम्। लोकोपयोगिनीं रम्यां बहुसस्यविवर्धिनीम् ॥ लङ्घयञ्छूलमारोहेदनपेक्षोपि तां प्रति । एवं विलंघ्य यन्मर्त्यो मर्यादां वेदनिर्मिताम्॥ प्रियोपि न प्रियोसौ मे मदाज्ञाव्यतिवर्तनात्। प्रियाय मम विष्णोश्च देवदेवस्य शार्ङ्गिणः॥ संरक्षणाय धर्माणां पालनाय कुलस्य च। लोकसंरक्षणार्थाय मर्यादास्थापनाय च ॥ मनीषी वैदिकाचारं मनसापि न लंघयेत् । **श्रीचाराद्वे च**–श्रुतिस्मृतिर्ममैवाज्ञा तामुल्लंघ्य यजञ्छुभे । सर्वस्वेनापि मां देवि नासोस्याज्ञाविघातकृत् ॥

## ❀ कर्मभेदनिरूपणम् ❀

**योगयाज्ञवल्क्यः**–ज्ञानस्य द्विविधौ ज्ञेयौ पन्थानौ श्रुतिचोदितौ । अनुष्ठितौ तौ विद्वद्भिः प्रवर्तकनिवर्तकौ ॥ वर्णाश्रमोक्तं कर्मैव कामसंकल्पपूर्वकम् । प्रवर्तकं भवेदेतत्पुनरावृत्तिहेतुकम् ॥ कर्तव्यमिति विध्युक्तं कामसंकल्पवर्जितम् । येन यत्क्रियते सम्यग् ज्ञानयुक्तं निवर्तकम्॥ प्रवर्तकं हि सर्वत्र पुनरावृत्तिहेतुकम् । निवर्तकं हि पुरुषं निवर्तयति जन्मतः ॥ संसारभीरुभिस्तस्माद्विध्युक्तं कामवर्जितम् । विधिवत्कर्म कर्तव्यं ज्ञानेन सह सर्वदा ॥ न देहिनां यतः शक्यं कर्तुं कर्माण्यशेषतः । तस्मादामरणाद्वैधं कर्तव्यं योगिना सदा ॥ **श्रीगीतायाम्**–नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ॥ इति ।

## ❀ आचारहीनस्य अनर्थप्राप्तिः ❀

आचारहीनस्य वेदशास्त्रादिकं कार्यकरं न भवतीत्याह **वसिष्ठः**– आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः। छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव जातपक्षाः ॥ कपालस्थं यथा तोयं श्वदृतं च तथा पयः । दुष्टं स्यात्स्थानदोषेण वृत्तहीने तथा श्रुतम् ॥ ब्राह्मणस्य तु देहोयं नोपभोगाय कल्पते । इह क्लेशाय महते प्रेत्यानन्तसुखाय वै ॥ **याज्ञवल्क्यः**–विहितस्याननुष्ठानान्निन्दितस्य निषेवणात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ **रत्नावल्यां च**–शुचिं रक्षन्ति देवाश्च रक्षन्ति पितरः शुचिम् । शुचेर्बिभ्यन्ति रक्षांसि ये चान्ये दुष्टचारिणः ॥

## ❀ सदाचारानुक्रमः ❀

**मनुः**–अर्थकामेष्वसक्तानां धर्मे ज्ञानं विधीयते। धर्मं जिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः ॥ द्वितीयं धर्मशास्त्रं तु तृतीयं लोकसंग्रहः । आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पना ॥ श्रुतिस्तु वेदो विख्यातो धर्मशास्त्रं तु वै स्मृतिः । इत्यादि। सदाचारस्यापि मूलं स्मृतिः, स्मृतेर्मूलं श्रुतिः, श्रुतिस्तु स्वयंभूः । तथा सति श्रुतिस्मृत्यविरुद्ध एवाचारः प्रमाणम्, नान्यथेति मन्तव्यम्। एवं निजधर्मानुष्ठानेनान्तरालिकफलान्यपि

सिद्ध्यन्तीत्यापस्तम्बः । स्मृत्यन्तरे च-यथेक्षुहेतोः सलिलं निषेचितं तृणानि वल्लीरपि च प्रसिञ्चति । एवं नरो धर्मपथेन वर्तयन् यशश्च कामांश्च वसूनि सोश्नुते ॥

## ❀ मनुष्यतारतम्यनिरूपणम् ❀

एवमाचारयुक्तानां श्रुतिस्मृतिभिः श्रैष्ठ्यं प्रतिपादितम् अखण्डादर्शे-भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः । बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥ ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः । कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः ॥ ब्रह्मविद्भ्यः परं नास्ति न भूतं न भविष्यति । याज्ञवल्क्यः-सर्वस्य प्रभवो विप्राः श्रुताध्ययनशालिनः । तेभ्यः क्रियापराःश्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः ॥ मनुः-आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ हतं ज्ञानं क्रियाहीनं हतास्त्वज्ञानिनः क्रियाः । अपश्यन्नन्धको दग्धः पश्यन्नपि च पंगुकः ॥ संवर्तः-आचारः परमो धर्म आचारः परमा गतिः । आचारयुक्तो विप्रस्तु पुण्यां गतिमवाप्नुयात् ॥ वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणां च निग्रहः । अहिंसा गुरुसेवा च निश्रेयसकरः परः ॥

## इति संज्ञाप्रकरणम् ।

---

# अथाह्निकमुच्यते ।

---

आह्निकं नाम अह्नि भवं सच्चरित्रम्, तच्च संग्रहेणोक्तम्-कल्योद्बोधोच्युतांघ्रिस्मरणमुपास्ति च स्नानमर्घ्यं जपोग्नौ होमश्च ब्रह्मयज्ञो हितभजनमथ स्नानमध्याह्नकृत्ये । विष्ण्वर्चा वैश्वदेवं मखविधिरशनं सत्प्रबन्धानुसंस्था सन्ध्याहोमार्चनान्नं श्रुतिमननमिति प्रत्यहं सच्चरित्रम् ॥

## ❀ प्रातरुत्थानविधिः ❀

अत्र मनुः-ब्राह्मे मुहूर्ते उत्थाय धर्मार्थावनुचिन्तयेत् । कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च ॥ वेदतत्त्वार्थः परमात्मा । शाण्डिल्यश्च-उच्चैः स्वरेण यो गातुमिच्छेत्स्तोत्रैरनन्यधीः । वासुदेवादिदेवानां नामसंकीर्तनं चरेत् ॥ प्रादुर्भावगणं चापि संस्मरेत्सर्वसिद्धये । कीर्तयेत्तद्गुणान्भक्त्या परमार्थविचेष्टितान् ॥ याज्ञवल्क्यः-ब्राह्मे मुहूर्ते उत्थाय चिन्तयेदात्मनो हितम् । धर्मार्थकामान्स्वे काले यथाशक्ति न हापयेत् ॥ अत्र गौतमः-न पूर्वाह्णमध्याह्नापराह्णानफलान् कुर्याद्यथाशक्ति धर्मार्थकामेभ्यः ॥ रत्नावल्याम्-ब्राह्मे मुहूर्ते निद्रां च कुरुते सर्वदा तु यः । अशुचिं तं विजानीयादनर्हं सर्वकर्मसु ॥ ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी । तां करोति तु यो मोहात्पादकृच्छ्रेण शुद्ध्यति ॥ रात्रेस्तु पश्चिमो यामो मुहूर्तो ब्राह्म उच्यते । ततः पर्व समुत्तिष्ठेद्धरिर्हरिरिति ब्रुवन् ॥ उत्तिष्ठंश्चिन्तय हरिं व्रजंश्चिन्तय केशवम् । भुञ्जंश्चिन्तय गोविन्दं स्वपंश्चिन्तय माधवम् ॥ उत्थाय तस्माच्छयनात्पादौ

प्रक्षाल्य वाग्यतः । आचम्य संस्पृशेद्भूमिं मन्त्रमेतं समुच्चरन् ॥ मनुः—समुद्रमेखले देवि पर्वतस्तनमण्डले । विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥

## ❀ मूत्रपुरीषोत्सर्गविधिः ❀

**अङ्गिराः**—उत्थाय पश्चिमे यामे रात्रेराचम्य चोदकम् । वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः ॥ अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा । कुर्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः ॥ **कात्यायनः**—तत उत्थाय शयनान्नदीतीरमथापि वा । तटाकतीरमभ्येत्य दूरं गत्वा भुवोऽन्तरम् ॥ यज्ञोपवीतं कर्णे तु दक्षिणे तु निधाय च । कृत्वावगुण्ठनं विप्र उत्तरीयेण वाससा ॥ पवित्रं दक्षिणे कर्णे कृत्वा शुचि धरातले । शुष्कपत्रदलच्छन्ने विण्मूत्रे तु विसर्जयेत् ॥ **यमः**— अयज्ञीयैरनार्द्रैश्च तृणैः संछाद्य मेदिनीम् । प्राणास्ये वाससावेष्ट्य मलमूत्रे त्यजेद्बुधः ॥ **मनुः**—तिरस्कृत्योच्चरेत्काष्ठं लोष्टं पर्णतृणानि वा । नियम्य प्रयतो वाचं संवीताङ्गोऽवगुण्ठितः ॥ तिरस्कृत्य संछाद्य, संवीताङ्गः वस्त्रेणाच्छादितदेहः । पुरीषमूत्रोत्सर्गं तु दिवा कुर्यादुदङ्मुखः । दक्षिणाभिमुखो रात्रौ सन्ध्ययोस्तु यथा दिवा ॥ **याज्ञवल्क्यः**—दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः । कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ॥ तदेवम्—उच्चरेद्दक्षिणामुखः, उदङ्मुखो मूत्रं कुर्यादित्यापस्तम्बवचनम् मन्वादिस्मृत्यविरोधाय तत्समानार्थं समर्थनीयम् । **हारीतः**—अप्रावृतशिरा यस्तु विण्मूत्रं विसृजेद्द्विजः । तच्छिरः शतधा भूयादिति देवाः शपन्ति तम् ॥ **आपस्तम्बः**—नोर्ध्वं नाधो न तिर्यक्च किंचिद्वीक्षेत बुद्धिमान् । नभोभूम्यन्तरं पश्येत्कृत्वा मूर्ध्न्युपवीतकम् ॥ **पितामहः**—नक्षत्रज्योतिरारभ्य सूर्यस्योदयनं प्रति । प्रातःसन्ध्येति तां प्राहुः श्रुतयो मुनिसत्तमाः ॥ ततः पूर्वं समुत्थाय प्राचीमेवोपनिष्क्रमेत् । उदीचीं प्रागुदीचीं वा शौचाचारक्रमां दिशम् ॥ **आपस्तम्बः**—आराच्चावसथान्मूत्रपुरीषे कुर्याद्दक्षिणां दिशम्, दक्षिणापरां वा इति । गत्वेति शेषः । **मनुः**—दूरादावसथान्मूत्रं दूरात्पादावनेजनम् । उच्छिष्टान्ननिषेकं च दूरादेव समाचरेत् ॥ नात्यचिरं चिरं तिष्ठेन्न स्पृशेत्पाणिना शिरः । न ब्रूयान्न दिशः पश्येद्विण्मूत्रोत्सर्जने बुधः ॥ **व्यासः**—सजलं भाजनं स्थाप्य मृत्तिकां च परीक्षिताम् । कुर्यान्मूत्रपुरीषे तु नान्यथा शुद्धिमाप्नुयात् ॥ **शाण्डिल्यः**—आदाय दण्डवस्त्रादि गृहीत्वा च कमण्डलुम् । प्रावृतश्छन्नमूर्धा च कर्मारम्भपरो व्रजेत् ॥ ग्रामाद्बहिर्विनिर्गत्य विसृजेत्सहचारिणः । सहचारिणः मूत्रपुरीषाणि । **बौधायनः**—फालकृष्टे जले चित्यां वल्मीके गिरिमस्तके । देवालये नदीतीरे दर्भपृष्ठे तु शाद्वले ॥ छायायां वृक्षमूले वा विण्मूत्रे न त्यजेद्बुधः । **याज्ञवल्क्यः**—न तु मेहेन्नदीच्छायावर्त्मगोष्ठाम्बुभस्मसु । न प्रत्यग्न्यर्कगोसोमसन्ध्याम्बुस्त्रीद्विजन्मनाम् ॥ **भरद्वाजः**—देवालये महास्थाने श्मशानाचलवारिषु । तटाकाब्धिनदीतीरद्रुमच्छायासु भस्मसु ॥ गोष्ठे सस्यचये श्वभ्रे सुराशुच्यूपरेषु च । न त्यजेन्मलमूत्रे तु स्थानेष्वेतेषु बुद्धिमान् ॥ द्रुमग्रहणाच्छत्रादिच्छायासु न दोषः । **मनुः**—प्रत्यग्निं प्रतिसूर्यं च प्रतिसोमोदकद्विजान् । प्रतिगां प्रतिसन्ध्यां च प्रज्ञा नश्यति मेहतः ॥ **गौतमः**—न वाय्वग्निविप्रा-

दित्यापो देवता गाश्च प्रति पश्यन्वा मूत्रपुरीषामेध्यान्युदस्येत् । **यमः**—प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् । दृष्ट्वाऽऽदित्यं निरीक्षेत गामग्निं ब्राह्मणं तु वा ॥ गृहीतोदकपात्रश्चेत्कुर्यान्मूत्रपुरीषके । तत्तोयं मूत्रतुल्यं स्यात्पीत्वा चान्द्रायणं चरेत् ॥ तुषाङ्गारकपालानि देवतायतनानि च । राजमार्गश्मशानादि क्षेत्राणि च जलानि च॥ नोपरुद्धोपि सिंचेत छायां दृश्यं चतुष्पथम् । उदकं चोदकान्तं च पन्थानं च विवर्जयेत् ॥ **आपस्तम्बः**—न सोपानन्मूत्रपुरीषे कुर्यात् । **हारीतः**—न चत्वरोपद्वारयोर्गृही मूत्रपुरीषे कुर्यात्, न गोमये, न गोष्ठे, न सस्यपूर्णे, न यज्ञभूमिषु, न यज्ञीयानां वृक्षाणामधस्तात्, नाकाशे इति । यत्तु **देवलोक्तम्**—सदैवोदङ्मुखः प्रातः सायाह्ने दक्षिणामुखः । विण्मूत्रावाचरेन्नित्यं सन्ध्यासु परिवर्जयेत् ॥ इति तन्निरुद्धेतरविषयम् । न वेगं धारयेन्नोपरुद्धः क्रियां कुर्याद्यावद्वेगं धारयति तावदप्रयतः स्यात् । इति चरकस्मरणात् । यच्च **मनूक्तम्**—छायायामन्धकारे वा रात्रावहनि वा द्विजः । यथासुखमुखः कुर्यात्प्राणबाधाभयेषु च ॥ इति तन्नीहाराद्यन्धकारजनितादिङ्मोहनविषयम् । यदपि **यमोक्तम्**—प्रत्यङ्मुखस्तु पूर्वाह्णेपराह्णे प्राङ्मुखस्तथा । उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः ॥ इति, तज्जलाद्याभिमुख्यविषयम् । **शाण्डिल्यः**—ससत्वेषु च गर्तेषु न गच्छन्नापि च स्थितः । नोषरे न च सस्येषु न कुञ्जेषु मलं त्यजेत् ॥ **विष्णुधर्मोत्तरे**—विष्ण्वालयेषु परितः शतदण्डाद्बहिर्मुने । विण्मूत्रकरणं कुर्यात्क्रोशाद्बहिरथापि वा ॥ **ब्रह्माण्डे**—व्यायामोद्वर्तनं निद्रां स्नानपानानि भोजनम् । क्रीडार्थं मैथुनं द्यूतं यः कुर्यात्तु सुरालये ॥ नरकान्न निवर्तेत यावच्चन्द्रदिवाकरौ । विधिस्थानेषु सर्वेषु विण्मूत्राणि न कारयेत् ॥ दशवर्षादतिक्रान्तो यथाकामं चरेद्यदि । विण्मूत्रकरणे ब्रह्मन् पतितो नात्र संशयः ॥ अज्ञानेन तु विप्रेण विण्मूत्रकरणं यदि । स विनाशं व्रजेत्सद्यः कुप्यते भगवान् हरिः॥ समीपे मन्दिरस्यापि शकृन्मूत्रं करोति यः । स मूत्रगर्ते निपतेद्यावदाभूतसंप्लवम् ॥ **भरद्वाजः**—मलमूत्रं त्यजेद्यस्तु विस्मृत्यैवोपवीतधृक् । तत्सूत्रं तु परित्यज्य दध्यादन्यन्नवं पुनः ॥ **अङ्गिराः**—कृत्वा मूत्रं पुरीषं वा यदा नैवोदकं भवेत् । स्नात्वा लब्धोदकः पश्चात्सचैलं तु विशुध्यति ॥ **पैठीनसिः**—अनुदकमूत्रपुरीषकरणे सचैलस्नानम्, महाव्याहृतिभिर्होमः । **जाबालिः**—स्नानं कृत्वार्द्रवस्त्रस्तु विण्मूत्रं कुरुते यदि । प्राणायामत्रयं कृत्वा पुनः स्नानेन शुध्यति ॥ **गौतमः**—न पर्णलोष्टादिभिर्मूत्रपुरीषापकर्षणं कुर्यात् ॥ **देवलः**—धृतोर्ध्वमेहनो वस्त्रमुत्क्षिप्य द्रुतमुत्थितः । आशौचान्नोत्सृजेच्छिश्नं प्रस्रावोच्चारयोरपि ॥ **यतिधर्मसमुच्चये**—स्नाने चावश्यके चैव भोजने जपकर्मणि । स्वाध्याये चैव निद्रायामुपदण्डेन बन्धयेत् ॥ उपदण्डाभावे निधानस्थले चाशुद्धे विशेषस्तत्रैवोक्तः । त्रिदण्डमुपवीतं च शिरावद्बिभृयाद्यतिः ॥ कुर्यान्मूत्रपुरीषे च त्रिदण्डरहितो यतिः । इति ।

## ❀ अथ शौचविधिः ❀

**भरद्वाजः**—उत्थाय वामहस्तेन गृहीतोर्ध्वगमेहनम् । शौचदेशमथाभ्येत्य कुर्या-

च्छौचं मृदाऽम्बुभिः ॥ **याज्ञवल्क्यः**–तीर्थे शौचन्न कुर्वीत कुर्वीतोद्धृत्य वारिणा । मृत्तिकावारिदौ चान्यौ विज्ञेयौ परिचारकौ ॥ **स्मृतिचन्द्रिकायाम्**–यथाकथंचिदप्युद्धरणं न सम्भवति तदा विशेषमाह **विवस्वान्**–अरत्निमात्रं जलं कृत्वा कुर्याच्छौचमनुद्धृते । पश्चात्तच्छोधयेत्तीर्थमन्यथा न शुचिर्भवेत् ॥ तीर्थम् शौचस्थलम् । यदाह **ऋष्यशृङ्गः**–यस्मिन् देशे कृतं शौचं वारिणा तं तु शोधयेत् । अशुद्धिस्तु भवेत्तावन्मृत्तिकां यो न शोधयेत् ॥ **भरद्वाजः** नदीनदतटाकेषु वापीकुण्डह्रदेषु च । निर्झरे देवखातेषु द्विजः शौचं न कारयेत् ॥ **यमः**–आहरेन्मृत्तिकां विप्रः कूलात्ससिकतां तु वा । नाखुकृष्टान्न वल्मीकात्पांसुलान्न च कर्दमात् ॥ न मार्गान्नोषरान्नैव शौचशिष्टात्परस्य च । एतास्तु वर्जयेन्नित्यं वृथा शौचं हि तत्स्मृतम् ॥ वापीकूपतटाकेषु नाहरेद्बाह्यमृत्तिकाम् । अन्तर्जलगता ग्राह्या परतो मणिबन्धनात् ॥ **चतुर्विंशतिमते**–वापीकूपतटाकेषु नान्यतो मृदमाहरेत् । अरत्निमात्राद्गृह्णीयाज्जले वा मणिबन्धतः ॥ पूर्वं जलेन प्रक्षाल्य मृदा पश्चात्ततोऽम्बुभिः । एवं द्वादशकृत्वस्तु गुदशौचं समाचरेत् ॥ प्रथमा प्रसृतिर्ज्ञेया द्वितीया च तदर्धिका । उत्तरोत्तरतः सर्वा द्वितीयैव तथा बुधैः ॥ दशकृत्वो वामहस्तं सप्तकृत्वः करावुभौ । संयोज्य चैवं प्रक्षाल्य सकृच्छौचं समाचरेत् ॥ पञ्चकृत्वः करौ क्षाल्य मृदाऽऽमलकमात्रया । त्रिःकृत्वो लिङ्गशौचं च हस्तौ क्षाल्य पदद्वयम् ॥ संयोज्य त्रिर्मृदा क्षाल्य क्षालयेच्छौचभूतलम् । **यमः**–आपद्गतो विना तोयं शारीरं यो निषेवते । एकाहं क्षपणं कृत्वा सचेलं स्नानमाचरेत् ॥ अनेनैवाभिप्रायेण **स्मृत्यन्तरे** च–रेतोमूत्रपुरीषेषु उत्सर्जने उपस्थिते । अकृताचमनो विप्रस्तिष्ठेदासूर्यदर्शनात् ॥ रेतोमूत्रपुरीषेषु कस्यचिदुत्सर्जने जलाभावे, अकृताचमनश्चेत् अकृतशौचश्चेत्, आसूर्यदर्शनात्तिष्ठेदित्यर्थः। **भगवच्छास्त्रेऽपि**–ऊरुद्वयान्तरस्थेन सव्येनाक्षालयेद्गुदम् । बहिर्जानुस्थितेनाम्भो देयं दक्षिणपाणिना ॥ **देवलः**–आशौचान्नोत्सृजेच्छिश्नं प्रस्रावोच्चारयोरपि । **शाण्डिल्यः**–चिरं नोपविशेन्नातिपीडयेन्नार्थवेशसम् । गृहीतशिश्नश्चोत्थाय संतिष्ठेत्क्षालनावधि ॥ **संवर्तः**–ब्रह्मचारी यतिश्चैव नान्तर्लिङ्गं विशोधयेत् । अन्तर्लिङ्गस्य शौचेन तयोश्चान्द्रायणं स्मृतम् ॥ **भरद्वाजः**–उत्थाय सव्यहस्तेन गृहीत्वा चोर्ध्वमेहनम् । शौचदेशमथागत्य शौचं कुर्यान्मृदाम्बुभिः ॥ कुर्वीतैवं दिवा शौचं रात्रौ तस्यार्धमुच्यते । अशक्तस्य यथाशक्ति शौचमुक्तं तथाध्वनि ॥ योषितामुक्तशौचार्धं शूद्राणामप्युदीरितम् । एवं शौचविधिः प्रोक्तो द्विजानां शुद्धिहेतवे ॥ **मनुः**–एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् । त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम् ॥ **व्यासः**–विट्शौचं प्रथमं कुर्यान्मूत्रशौचमतः परम् । पादशौचं ततः कुर्यात्करशौचमतः परम् ॥ एवं शौचं पुरा कृत्वा सकृच्छौचं पुनश्चरेत् । **वसिष्ठः**–द्वे लिङ्गे मृत्तिके देये पश्चापाने करे दश । उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता॥ **दक्षः**–एका लिङ्गे मृदं दद्याद्वामहस्ते तु मृत्त्रयम् । उभयोर्हस्तयोर्द्वे तु मूत्रशौचे प्रचक्षते ॥ **शातातपः**–एका लिङ्गे करे तिस्रः सव्ये द्वे हस्तयोर्द्वयोः । मूत्रशौचं समाख्यातं शुक्रे तु द्विगुणं भवेत् ॥ **विवस्वान्**–पर्वमात्रप्रमाणास्तु लिङ्गशौचे

मृदः स्मृताः । दक्षः—लिङ्गे तु मृत्समाख्याता त्रिपर्वं पूर्यते यथा । मरीचिः—हस्तादिप्वर्दानसमा मृत्स्यादिति यदा वालुकाभिः शौचं कुर्यात्तदा द्विगुणं कुर्यादिति भार्गवः । दक्षः—अर्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता । द्वितीया च तृतीया च तदर्धेन प्रकीर्तिता ॥ अङ्गिराः—प्रथमा प्रसृतिर्ज्ञेया द्वितीया च तदर्धिका । उत्तरोत्तरतः सर्वा द्वितीयैव धृता बुधैः ॥

## ❀ अथ शौचे दिङ्नियमः ❀

ब्रह्माण्डे—उद्धृतोदकमादाय मृत्तिकां चैव वाग्यतः । उदङ्मुखो दिवा शौचं रात्रौ चेद्दक्षिणामुखः ॥ कुर्यादिति शेषः । आद्यन्तयोस्तु शौचानामद्भिः प्रक्षालनं स्मृतम् । सुनिर्णिक्ते जलं दद्यान्मृदन्ते जलमेव च ॥ मनुः—यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृते । तावन्मृद्वारि देयं स्यात्सर्वासु द्रव्यशुद्धिषु ॥ शंखः—प्रदेया वामहस्तस्य पश्चाद्भागे तु षण्मृदः । तिस्रस्तु मृत्तिका देयाः कृत्वा तु नखशोधनम् ॥ मरीचिः—तिसृभिश्च तथा पादावागुल्फान्तं तथैव च । हस्तावामणिबन्धात्तु गन्धलेपापकर्षणम् ॥ पाद्मे पुराणे—मृत्तिकाभिर्द्वादशभिर्गुदं षड्भिश्च मेहनम् । अन्तरा चान्तरा वामं हस्तं प्रक्षाल्य मृज्जलैः ॥ मृन्मात्राभिस्तदन्ते द्वौ करौ द्वादश संख्यया । विशोध्य मृज्जलैर्जंघे कटिमूरू च वारिभिः ॥ प्रत्येकं मृत्तिकामात्राचतुष्केणाभिशोधयेत् । एतदुत्सर्गकाले मलस्पर्शे, अन्यथा कट्यूरुशोधनं नास्त्येव । तथा पारमेश्वरे—तिस्रो लिङ्गे मृदो देया एकैकान्तरमृत्तिका । पञ्च वामकरे देयास्तिस्रः पाण्योर्विशुद्धये ॥ मूत्रोत्सर्गे शुद्धिरेषा पुरीषस्याप्यनन्तरम् । दश वामकरे देयाः सप्त तूभयहस्तयोः ॥ पादयोस्तिसृभिः शुद्धिर्जंघाशुद्धिस्तु पञ्चभिः । नियोजयेत्तथा विप्रः कट्यां वै सप्त मृत्तिकाः ॥ स्वदेहस्वेददोषघ्ना बाह्या कर्दमशान्तये । भक्तानां श्रोत्रियाणां च वर्णास्वेवं प्रकीर्तितम् ॥ द्वादशमलोपहतस्य शुद्धिमाह बौधायनः—आददीत मृदः पञ्च षट्सु पूर्वेषु शुद्धये । उत्तरेषु च षट्स्वद्भिः केवलाभिर्विशुद्ध्यति ॥ मनुस्तु उत्तरेष्वपि कर्णविण्मूत्रादिषु मृज्जलाभ्यां शुद्धिमाह—विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्यादेयमर्थवत् । दैहिकानां मलानां च विशुद्ध्यै द्वादशस्वपि ॥ यमः—मूत्रे तिस्रः पादयोस्तु हस्तयोस्तिस्र एव च । मृदः पञ्चदश स्मे तु हस्तादीनां विशेषतः ॥ एतदात्मीयमात्रादिस्पर्शे शौचमुदाहृतम् । उत्सर्गकालादन्यत्र परकीयेषु पञ्चते ॥ देवलः—मनुष्यास्थि वसां विष्ठामार्तवं मूत्ररेतसी । मज्जानं शोणितं स्पृष्ट्वा परस्य स्नानमाचरेत् ॥ तान्येव स्वानि संस्पृश्य प्रक्षाल्याचम्य शुद्ध्यति । मनुः—परस्य शोणितस्पर्शे रेतोविण्मूत्रजे तथा । चतुर्णामपि वर्णानां द्वात्रिंशन्मृत्तिकाः स्मृताः ॥ विष्णुः—नाभेरधस्ताद्बाहुषु च कायिकैर्मलैः सुराभिर्मद्यैर्वोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्याचान्तः शुध्येत् । अन्यत्रोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नानेन इन्द्रियेषूपहत उपोष्य स्नात्वा पञ्चगव्येन दशनच्छदोपहतश्चेति । मृत्तोयैः पञ्चभिरित्यर्थः । शंखः—मेहने मृत्तिकाः सप्त लिङ्गे द्वे परिकीर्तिते । एकस्मिन्विंशतिर्हस्ते द्वयोर्देयाश्चतुर्दश ॥ तिस्रस्तु मृत्तिका देयाः कृत्वा तु नखशोधनम् । तिस्रस्तु पादयोर्देयाः शौचकामस्य नित्यशः ॥ एतच्छौचं

गृहस्थानां तथा गुरुनिवासिनाम् । द्विगुणं स्याद्वनस्थानां यतीनां त्रिगुणं भवेत् ॥ मेहनमत्र पायुः। **विष्णुमन्दिरे**-सप्तभिर्गुह्यदेशे च शिश्नं तिसृभिराचरेत् । अन्तरान्तरयोगेन हस्तप्रक्षालनं चरेत् ॥ परां काष्ठामाह **शाण्डिल्यः**-पञ्चधा लिङ्गशौचं स्याद्गुदशौचं त्रिवेष्टितम् । पादयोर्लिङ्गवच्छौचं हस्तयोस्तु चतुर्गुणम् ॥ **शातातपः**-आर्द्रामलकमात्रास्तु ग्रासा इन्दुव्रते स्मृताः । तथैवाहुतयः सर्वाः शौचार्थे याश्च मृत्तिकाः ॥ **देवलः**-प्रमाणं शौचसङ्ख्यायां न शिष्टैरुपदिश्यते । यावत्तु शुद्धिं मन्येत तावच्छौचं समाचरेत् ॥ विहितसङ्ख्यासु यावद्गन्धलेपापकर्षणं मन्येतेत्यर्थः । यत्तु **दक्षेणोक्तम्**-न्यूनाधिकं न कर्तव्यं शौचं शुद्धिमभीप्सता । प्रायश्चित्तेन युज्येत विहितातिक्रमे कृते ॥ इति तत्सङ्ख्याया अर्वाक्छौचसमापने गन्धाद्यनपगमे वेदितव्यम् । मूत्रसंस्थातारतम्यस्मरणगतिमाह **बौधायनः**-देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च ज्ञात्वा शौचं समाचरेत् ॥ **बृहस्पतिः**-उपविष्टस्तु विण्मूत्रं कर्तुं यस्तं न विन्दति । तत्र तिकुर्याच्छौचार्थं स्वस्य शौचस्य सर्वदा ॥ भुञ्जानस्य तु विप्रस्य कदाचित्प्रस्रवेद्गुदम् । उच्छिष्टमशुचित्वं च तस्य शौचं कथं भवेत् ॥ पूर्वं कृत्वा तु शौचं हि पश्चात्स्नानं समाचरेत् । ततः कृत्वोपवासं च पञ्चगव्येन शुद्ध्यति ॥ अनुपनीतादिविषये **पितामहः**-न यावदुपनीयन्ते द्विजाः शूद्रास्तथाङ्गनाः । गन्धलेपक्षयकरं शौचमेषां विधीयते ॥ **चतुर्विंशतिमते**-यद्दिवा विहितं शौचं तदर्धं निशि कीर्तितम् । तदर्धमातुरे प्रोक्तमातुरस्यार्धमध्वनि ॥ एतत्सामर्थ्ययुक्तातुरविषयम् । तथा **चादिपुराणे**-दिवा शौचस्य निश्यर्धं पथि पादं विधीयते । आर्तः कुर्याद्यथाशक्ति स्वस्थः कुर्याद्यथोदितम् ॥ **हारीतः**-गृहीत्वा वामहस्तेन शेफोग्रं बाह्यतश्चरेत् । हस्तोद्धृतैर्जलैः शौचं कुर्यान्नान्तर्जले बुधः ॥ बाह्यतः जलाद्बहिः । **विवस्वान्**-अप्यम्भोगृह्य शौचार्थमाङ् मृद् ग्राह्या तदसंभवे । अरत्निमात्रे जलं त्यक्त्वा कुर्याच्छौचमनुद्धृते ॥ तदसंभवे कथंचिदुद्धरणायोगे । **भरद्वाजः**-धर्मविद्दक्षिणं हस्तं नाधःशौचे नियोजयेत् । तथैव वामहस्तेन नाभेरूर्ध्वं न शोधयेत् ॥ **दक्षः**-नाभेरधस्तात्सकलं क्षालयेत्सव्यपाणिना । कुर्यादाचमनादीनि सर्वाणीतरपाणिना ॥ **वैयाघ्रपादः**-शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥ गङ्गातोयेन कृत्स्नेन मृद्भारैश्च सगोमयैः। आमृत्योराचरञ्शौचं भावदुष्टो न शुध्यति॥ **वृद्धमनुः**-आपद्गतो विना तोयं शारीरं सन्निषेव्य तु । सचेलो जलमाप्लुत्य गामालभ्य विशुद्ध्यति ॥ शारीरं विण्मूत्रादि । **स्मृत्यन्तरे**-कृते मूत्रे पुरीषे वा भुक्तोच्छिष्टे तथैव च । श्वादिस्पृष्टे जपेन्मन्त्रं सहस्रं स्नानपूर्वकम् ॥ पलाण्डुलशुनस्पर्शे कृते स्नानं समाचरेत् । कृतेचारस्त्वहोरात्रमुच्छिष्टे द्व्यहमेव च ॥ **आङ्गिराः**-कृत्वा मूत्रं पुरीषं वा यदा नैवोदकं लभेत् । स्नात्वा लब्धोदकः पश्चात्सचेलं तु विशुध्यति ॥ विभक्तुष्टे जले **पैठीनसिनोक्तो** विशेषः। मूत्रयित्वा प्रजन्मार्गे सवासा जलमाविशेत्। महाव्याहृतिभिर्होमं कुर्यादेवं मलोज्झितः ॥ अत्र **पाद्मे** विशेषः-दक्षिणेतरहस्तेन गृहीत्वा मेहनं द्विजः । दक्षिणे मृत्तिकां हस्ते समुत्थाय जलाशयम् ॥ प्रागुदीच्यामुदीच्यां वा

गत्वा शौचं समाचरेत् । इदं प्राग्गृहीतमृत्तिकाविषयम् । उत्सर्गादूर्ध्वं तद्ग्रहणे स्नानस्मरणात् । तथा देवलः-विण्मूत्रकरणात्पूर्वमादद्यान्मृत्तिकां सदा । आददानस्तु तां पश्चात्सवासा जलमाविशेत् ॥ सजलं भाजनं स्थाप्य मृत्तिकां चेति व्यासः । अतः पूर्वगृहीतनिक्षिप्तमृद्ग्रहणपरमेतत् । जलाशयं गत्वेति पुनर्जलग्रहणार्थं नतु शौचार्थम् । तत्र प्राङ्मृत्तिकाग्रहणनियमाभावात् । नाहरेद्ब्राह्ममृत्तिकामिति निषेधाच्च । शंखः-आत्ममूत्रस्पर्शे तिस्रो मृदः पादहस्तादिषु, स्वामेध्यस्पर्शे मृदः पञ्चदश, एवं परस्य शोणितरेतोविण्मूत्रस्पर्शे चेति । दक्षः-शौचे यत्नः सदा कार्यस्तन्मूलो हि द्विजः स्मृतः । शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥ यस्य शौचेऽपि शैथिल्यं वृत्तं तस्य परीक्षितम् । तस्मात्सर्वप्रयत्नेन द्विजः शौचं समाचरेत् ॥

## ❀ अथाचमनविधिः ❀

याज्ञवल्क्यः-अन्तर्जानु शुचौ देश उपविष्ट उदङ्मुखः । प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ अन्तर्जानु जान्वोरन्तरा अरत्निं कृत्वेत्यर्थः । देशग्रहणात्पीठादेर्निषेधः । उपविष्ट इति स्थितप्रह्वयोः, उदक्प्रागिति पश्चिमदक्षिणयोः, ब्राह्मेणेति कराग्रस्य च निषेधः । नित्यग्रहणादाश्रमान्तरेऽपि । मनुः-ब्राह्मेण तीर्थेन द्विजः सर्वकालमुपस्पृशेत् । इति । भरद्वाजः-जंघान्तं जानुपर्यन्तमपि वा चरणद्वयम् । कूर्परान्तं करौ सम्यक् क्षालयेत् प्रथमं बुधः ॥ उपविश्य शुचौ देशे प्राङ्मुखो ब्रह्मसूत्रधृत् । बद्धचूडः कुशकरो द्विजः शुचिरुपस्पृशेत् ॥ मार्कण्डेयः-सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् । नोच्छिष्टं तत्पवित्रं तु भुक्तोच्छिष्टं तु वर्जयेत् ॥ एतद्ग्रन्थिविहीनपवित्राभिप्रायम् । तदाह भरद्वाजः-कुशहस्तः पिबेत्तोयं कुशहस्तः सदाचमेत् । सग्रन्थिकुशहस्तस्तु न कदाचिदुपस्पृशेत् ॥ एतत्कर्माङ्गव्यतिरिक्ताचमनविषयम् । सपवित्रः सदर्भो वा कर्माङ्गाचमनं चरेत् ॥ नोच्छिष्टं तत्सदर्भश्च भुक्तोच्छिष्टं तु वर्जयेत् । स्मृत्यन्तरे-न ब्रह्मग्रन्थिनाचामेन्न दूर्वाभिः कदाचन । न काशैर्न च शून्यश्च कुशपाणिरुपस्पृशेत् ॥ सकृत्प्रदक्षिणीकृतं पवित्रं निष्टर्ष्यम् ब्रह्मग्रंथिः । ग्रंथियुक्तपवित्रेण कुर्यादाचमनं यदि । तत्पवित्रं परित्यज्य पुनराचम्य शुद्ध्यति ॥ इति वचनं केवलाचमनविषयम् । कर्माङ्गाचमने न दोषः । मनुः-ब्राह्मेण विप्रस्तीर्थेन सर्वकालमुपस्पृशेत् । कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥ कार्यं प्राजापत्यम्, त्रैदशिकं देवतीर्थम्, ताभ्यां प्राशनमापद्विषयम् । आचाराभावात् । तोयं पाणिनखस्पृष्टं ब्राह्मणो न पिबेत्क्वचित् । सुरापानेन तत्तुल्यमित्येवं मनुरब्रवीत्॥ इत्यत्रिस्मरणात् । याज्ञवल्क्यः-कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रं करस्य तु । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ भरद्वाजः-अंगुष्ठस्य कनिष्ठायास्तर्जन्या मूलमग्रकम् । करस्य मध्यमं चाहुः पञ्च तीर्थानि साधवः ॥ तर्पणं देवतादिभ्यः स्वस्वतीर्थेन तर्पयेत् । पिबेदाचमने वारि वीक्षितं ब्रह्मतीर्थतः ॥ रात्राववीक्षितेनैव शुद्धिरुक्ता मनीषिभिः । यमः-तावन्नोपस्पृशेद्विद्वान्यावद्वामेन न स्पृशेत् । वामे हि द्वादशादित्या वरुणश्च जलेश्वरः ॥ वैयाघ्रपादः-गात्रस्थानानि सर्वाणि स्पृष्ट्वा स्पृष्ट्वा जलं स्पृशेत् । आचामन्ब्राह्मणो नित्यमित्याह भगवान्भृगुः ॥ दक्षः-गोकर्णाकृतिहस्तेन त्रिः पिबे-

ब्रह्मतीर्थतः। परिमृज्य द्विरास्यन्तु द्वादशाङ्गानि चालभेत् ॥ प्रत्यङ्गमुदकस्पर्शं कुर्यादाचमने बुधः। **सुमन्तुः**—दक्षिणस्य तु हस्तस्य तलं गोकर्णतुल्यकम्। विन्यस्य ब्रह्मतीर्थेन त्वशब्दं तोयमापिबेत् ॥ **देवलः**—अप्सु प्राप्तासु हृदयं ब्राह्मणः शुद्धिमाप्नुयात् । राजन्यः कण्ठताल्वोश्च वैश्यः शूद्रस्तथा स्त्रियः॥ **याज्ञवल्क्यः**—हृत्कण्ठतालुगाद्भिस्तु यथासंख्यं द्विजातयः । शुद्धेरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ अन्ततस्तालुना सकृत्स्पृष्टाभिरद्भिः स्त्रियः शूद्राश्च शुद्ध्यन्तीत्यर्थः । **व्यासः**—गोकर्णाकृतिहस्तेन माषमग्नं जलं पिबेत् । तन्न्यूनमधिकं पीत्वा सुरापानसमं भवेत् ॥ तत्परिमाणोपायमाह **स एव**—संहतांगुलिना तोयं गृहीत्वा पाणिना द्विजः । मुक्त्वांगुष्ठकनिष्ठे तु शिष्टस्याचमनं भवेत् ॥ शेषेणाचमनं चरेदिति पाठान्तरम्। **संवर्त्तः**—शिरः प्रावृत्य कण्ठं वा तिष्ठन्मुक्तशिखोऽपि वा। अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥ **आपस्तम्बः**—जान्वोरधस्तात्सलिल उपविष्ट उपस्पृशेत् । जलाशयाद्व्याचामेदूर्ध्वाम्भस्यूर्ध्वसंस्थितः ॥ एतत् आर्द्रवस्त्रविषयम् । आर्द्रवासा जले कुर्यात्तर्पणाचमने जपम्। शुष्कवासाः स्थले कुर्यात्तर्पणाचमने जपम् ॥ इति हारीतस्मरणात् । **स एवाह**—जान्वोरूर्ध्वमथाचामेज्जले तिष्ठञ्छुचिर्भवेत् । अधस्ताच्छतकृत्वोऽपि समाचान्तो न शुद्ध्यति ॥ **भरद्वाजः**—उदके तूदकस्थस्तु स्थलस्थः स्थलके शुचिः। पादौ कृत्वोभयत्रापि ह्याचम्योभयतः शुचिः ॥ **स्मृत्यन्तरे**—जानुमात्रे जले तिष्ठन्नासीनः प्राङ्मुखः स्थले । सर्वतः शुचिराचान्तस्तयोस्तु युगपत्स्थितः॥तयोः स्थलयोर्युगपत्स्थितिप्रकारमाह **पैठीनसिः**—अन्तरुदकमाचान्तो ह्यन्तरेव शुध्यति । बहिरुदकमाचान्तो बहिरेव शुध्यति । तस्मादन्तरेकं बहिरेकं च पादं कृत्वा आचामेत्सर्वत्र शुद्धो भवति । **दक्षः**—स्नात्वाऽऽचामेद्यदा विप्रः पादौ कृत्वा जले स्थले । उभयोरप्यसौ शुद्धस्ततः कर्मक्षमो भवेत् ॥ **पैठीनसिः**—शुचौ देश आसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीती प्राङ्मुख उदङ्मुखो वा वाग्यतः प्रक्षाल्य पादौ पाणी चामणिबन्धनाद्दक्षिणहस्ततलं गोकर्णाकारं विन्यस्य, ब्राह्मेण तीर्थेन अशब्दं माषनिमज्जनमात्रा हृदयङ्गमास्त्रिरपः ऋग्यजुस्सामवेदान् ध्यायन् पीत्वा, अथर्वणवेदेतिहासपुराणान् ध्यायन् ब्राह्मेण तीर्थेनौष्ठौ संमृज्य, मध्यमाभिस्त्रिभिरंगुलिभिः सकृदोष्ठावुपस्पृश्य मुखं परिमृजेदग्निं ध्यायन् ततो दक्षिणेन पाणिना सव्यं पाणिं प्रोक्ष्य पादौ विष्णुं ध्यायन् प्रोक्षेत् । ततः शिरश्च प्रोक्ष्य, अंगुष्ठोपकनिष्ठाभ्यां नयने चन्द्रादित्यौ ध्यात्वोपस्पृशेत् । ततोऽप उपस्पृश्य तर्जन्यंगुष्ठाभ्यां नासिके प्राणान् ध्यात्वा, ततोऽप उपस्पृश्य कर्णौ दिशो ध्यात्वा कनिष्ठांगुष्ठाभ्यां ततोऽप उपस्पृश्य बाहू चतसृभिरंगुलीभिरिन्द्रं ध्यात्वा, ततोऽप उपस्पृश्य अंगुष्ठेन केवलेन नाभिं पृथिवीं ध्यात्वा, ततोऽप उपस्पृश्य तलेन हृदयं परमात्मानं ध्यात्वा, ततोऽप उपस्पृश्य सर्वांगुलीभिः श्रियं ध्यायन् मूर्ध्नि प्रक्षिपेत् । ततः सव्ये पाणौ शेषा अपो निनयेत् । इति । **हारीतः**—आर्द्रवासाः स्थलस्थस्तु यथाचामेन्नराधमः । वस्त्रनिश्च्योतनं प्रेता अपवार्य पिबन्ति ते ॥ अपवार्य तद्भागिनं पितृगणं वारयित्वेत्यर्थः । शुष्केणान्तर्जले चैव बहिरप्यार्द्रवाससा । स्नानं दानं जपो होमः सर्वं भवति निष्फलम् ॥ **आपस्त-**

सलाम् । दृष्ट्वा तोयमुपस्पृश्याभाष्य स्नात्वा पुनर्जपेत् ॥ **वसिष्ठः**—क्षुते निष्ठीवने सुप्ते परिधानेऽश्रुपातने । पञ्चस्वेतेषु चाचामेत्कर्णं वा दक्षिणं स्पृशेत् ॥ तथा **पराशरः**—क्षुते निष्ठीवने चैव दन्तस्पर्शे तथाऽनृते । पतितानां तु संभाषे दक्षिणं श्रवणं स्पृशेत् ॥ प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा । विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत् ॥ अग्निरापश्च वेदाश्च चन्द्रसूर्यानिलास्तथा । सर्वे एते हि विप्राणां कर्णे तिष्ठन्ति दक्षिणे ॥ गङ्गाद्या दक्षिणे श्रोत्रे नासिकायां हुताशनः । उभावपि सकृत्स्पृष्ट्वा तत्क्षणादेव शुध्यति ॥ तस्मादाचमनासम्भवे नासिकाकर्णस्पर्शः कार्यः । **मार्कण्डेयः**—यथाविभवतो ह्येतत्पूर्वाभावे ततः परम् । अविद्यमाने पूर्वोक्ते ह्युत्तरमाप्तिरिष्यते ॥ ओषधिं गां शकृद्भूमिं शाद्वलं वा स्पृशेद्बुधः । **स्मृत्यन्तरे**—सत्यमाचमनाशक्तावभावे सलिलस्य वा । पूर्वोक्तेषु निमित्तेषु दक्षिणं श्रवणं स्पृशेत् ॥ मुहूर्तमप्यप्रयतो न भवेदनुपस्पृशन् ॥

## ❀ अथाचमनापवादः ❀

तत्र **याज्ञवल्क्यः**—मुखजा विप्रुषो मेध्यास्तथाऽऽचमनबिन्दवः । श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥ मुखजाः मुखनिःसृताः, विप्रुषः बिन्दवः, मेध्याः उच्छिष्टं न कुर्वन्ति, अङ्गे निपाताभावे । तथा **गौतमः**—न मुख्या विप्रुष उच्छिष्टं कुर्वन्ति, न चेदङ्गे निपतन्ति । इति । अतोऽङ्गे मलस्पर्शे तन्निमित्ताचमनं कार्यमेव । अङ्गास्पर्शेऽप्याचमनमाह **आपस्तम्बः**—य आस्याद्बिन्दवः पतन्त उपलभ्यन्ते तेष्वाचमनं विहितम् । ये भूमौ न तेष्वाचामेदित्येके । इति । स्वमतं त्वाचामेदेव । **गौतमः**—मन्त्रब्राह्मणमुच्चारयतो य आस्याद्बिन्दवः शरीर उपलभ्यन्ते, न तेष्वाचमनं विहितम् । इति । अत्र **मनुः**—स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् । भूमिगैस्ते समा ज्ञेया न तैरप्रयतो भवेत् ॥ **यमः**—प्रयान्त्याचामतो याश्चेच्छरीरे विप्रुषो नृणाम् । उच्छिष्टदोषो नास्त्यत्र भूमितुल्यास्तु ताः स्मृताः ॥ अनुपहतदेशस्थलजलतुल्यास्ता विप्रुष इत्यर्थः । **आपस्तम्बः**—न श्मश्रुभिरुच्छिष्टो भवत्यन्तरास्ये सद्भिर्यावन्न हस्तेनोपस्पृशति । **मनुः**—दन्तवद्दन्तलग्नेषु जिह्वास्पर्शेऽशुचिर्न तु । परिच्युतेष्ववस्थानान्निगिरन्नेव तच्छुचिः ॥ **शङ्खः**—दन्तवद्दन्तलग्नेषु रसवर्जमन्यत्र जिह्वाभिमर्शनात् । इति । जिह्वाभिमर्शनाभावे दन्तलग्नं शुचि रसोपलब्धावशुचीत्यर्थः । **गौतमः**—दन्तश्लिष्टेषु दन्तवदन्यत्र जिह्वाभिमर्शनात् । प्राक्च्युतेरित्येके । च्युतेष्वास्राववद्विद्यान्निगिरन्नेव तच्छुचिः ॥ इति । यथा नास्रावोऽशुद्धिकृदित्यर्थः । **देवलः**—भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् । दन्तलग्नमसंहार्यं लेपं मन्येत दन्तवत् ॥ न तत्र बहुशः कुर्याद्यत्नमुद्धरणे पुनः । भवेदशौचमत्यर्थं तृणवेधाद्व्रणे कृते ॥ एवंच यद्रसहीनमजिह्वास्पृष्टमसंहार्यं च तद्दन्तवदशुचिकरं न भवतीत्यर्थः । तथा **शातातपः**—दन्तलग्ने फले मूले भुक्तस्नेहानुलेपने । ताम्बूले चेक्षुखण्डे च नोच्छिष्टो भवति द्विजः ॥ **पराशरः**—ताम्बूलभक्षणे चैव भुक्तस्नेहानुलेपने । इक्षुखण्डे तिले सोमे नोच्छिष्टं मनुरब्रवीत् । अतस्तेष्वाचमनं न कार्यमिति भावः ।

मुखहस्ते भुक्तकृतलेपसद्भावेपि तेन न चोच्छिष्टत्वमित्यर्थः। **षट्त्रिंशन्मते**–अद्भिः पत्रैर्मूलपुष्पैस्तृणकाष्ठमयैः फलैः । सुगन्धिभिस्तथा द्रव्यैर्नोच्छिष्टो भवति द्विजः ॥ भक्षितैरिति शेषः । अद्भिः आपोशनीयाभिः । **अत्रिः**–मधुपर्के च सोमे च हव्येषु प्राणाहुतीषु च । नोच्छिष्टस्य भवेद्दोषस्त्वत्रेस्तु वचनं यथा ॥ **वसिष्ठः**–प्राणाहुतिषु सोमे च मधुपर्के तथैव च । सूर्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः ॥ प्राणाहुतिषु उत्तरोत्तरमन्त्रोच्चरणे, पात्रस्थाने च प्राणाहुत्यन्तमुच्छिष्टदोषो नास्ति । तथा फलेषु च । आचामेच्चर्वणे नित्यं मुक्त्वा ताम्बूलचर्वणम् । इत्युक्ताचमनं च नास्तीत्यर्थः। **देवलः**–सोपानत्को जलस्थो वा मुक्तकेशोपि वा पुनः। उष्णीषी वापि नाचामेद्वस्त्रेणावेष्ट्य वा शिरः ॥ भान्तरीयैकदेशस्य कृत्वा चैवोत्तरीयताम् । केशान्नीवीमधःकायं न स्पृशेद्धरणीमपि ॥ यदि स्पृशति चैतानि भूयस्त्वाचमनं चरेत् । **मरीचिः**–न बहिर्जानु न त्वरया नासनस्थो न चोत्थितः । न पादुकास्थो नाचित्तः शुचिः प्रयतमानसः ॥ भुक्त्वासनस्थोप्याचामेन्नान्यकाले कदाचन । **भृगुः**–विना यज्ञोपवीतेन तथा धौतेन वाससा । धौतम् उत्तरीयम् । मुक्त्वा शिखां वाप्याचामेत्कृतस्यैव पुनः क्रिया । कृतस्य कर्मणः आचमनस्येति वा शेषः । अत्र **देवलः**–सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखोऽनुपवीती च यत्करोति न तत्कृतम् ॥ **आपस्तम्बः**–दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाण्यव उपस्पृशेच्चक्षुषी नासिके श्रोत्रे चाथाऽप उपस्पृशेत् । इत्येवमुक्तम् । स्मृत्यन्तरे तु इन्द्रियान्तराणि चोक्तानि, तत्राङ्गुलिभेदश्चोक्तः । मध्यमाङ्गुष्ठाभ्यामेव बाहुस्पर्शनं शिष्टाचारः । अथाचमनस्य लक्षणमुक्तं दक्षेण–गोकर्णाकृतिहस्तेन त्रिः पिबेद्ब्रह्मतीर्थतः । परिमृज्य द्विरास्यं तु द्वादशाङ्गानि चाऽऽलभेत् ॥ प्रत्यङ्गमुदकस्पर्शं कुर्यादाचमने बुधः । अंगुष्ठानामिकाभ्यां वा चक्षुषी समुपस्पृशेत् ॥ अंगुष्ठतर्जनीभ्यां तु नासापुटमुपस्पृशेत् । कनिष्ठांगुष्ठयोगेन श्रोत्रे चैव समालभेत् ॥ मध्यमांगुष्ठयोगेन बाहुमूलमुपस्पृशेत् । केवलांगुष्ठतो नाभिं तलेन हृदयं स्पृशेत् ॥ सर्वांगुलीर्न्यसेन्मूर्ध्नि जलं स्पृष्ट्वाऽन्तरान्तरा । अन्यदप्याचमनविषयम् किंचिदुच्यते । **वसिष्ठः**–प्रचरन्नवहार्येषु उच्छिष्टं यदि संस्पृशेत् । भूमौ निक्षिप्य तद्द्रव्यमाचम्य प्रचरेत्पुनः ॥ प्रचरन् भोजनस्थानेषु पर्यटन्नित्यर्थः । *द्रव्यस्योच्छिष्टत्वेन तत् त्याज्यमेव । तदाह स एव*–उच्छिष्टमगुरोरभोज्यं स्वयमुच्छिष्टोपहतमुच्छिष्टं च त्याज्यम् इति । **बृहस्पतिर्विकल्पमाह**–प्रचरन्नन्नपानेषु यद्यन्योच्छिष्टमुपस्पृशेत् । भूमौ निधाय तद्द्रव्यमाचम्य प्रचरेत्पुनः॥ **मार्कण्डेयः**–उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तो निधाय वा । आचम्य द्रव्यमभ्युक्ष्य पुनरादातुमर्हति ॥ "द्रव्यस्य निधानाभ्युक्षणाभ्यां शुद्धिः स्वस्य त्वाचमनात्" इति द्रव्यस्य निधानमनिधानं वा कार्यमित्यर्थः। **कौर्मे**–तैजसं वै समादाय यदुच्छिष्टो भवेद्द्विजः । भूमौ निक्षिप्य तद्द्रव्यमाचम्याभ्युक्षयेत्तु तत् ॥ यदि द्रव्यं समादाय भवेदुच्छेषणान्वितः । अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥ वस्त्रादिहस्तविषयमिदम् । तथा **मनुः**–उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथंचन । अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥ द्रव्यमत्रानभ्यवहार्यं वस्त्रादि । पक्वान्नमादाय मूत्रपुरीष-

र्यः-तिष्ठन्नाचामेत्प्रह्वो वा आसीनस्त्रिराचामेत् । इति । तिष्ठन्निति स्थलविषयम् । अतएव जानुदघ्नमुदकं प्रविश्य शिष्टा आचामन्ति । **स्मृतिचन्द्रिकायाम्**-जानुमात्रे तदूर्ध्वं वा जले तिष्ठन् शुचिर्भवेत् । अधस्ताच्छतकृत्वोऽपि समाचान्तो न शुध्यति ॥ **स्मृत्यन्तरे**-अलाबूताम्रकांस्येषु करकप्रभृतिष्वपः । गृहीत्वा स्वयमाचामेन्न तेनाप्रयतो भवेत् ॥ करपात्रे च यत्तोयं यत्तोयं ताम्रभाजने । सौवर्णे राजते कांस्ये नैवाशुद्धं तु कर्हिचित् ॥ **भरद्वाजः**-ताम्रचर्माश्ववालैश्च नारिकेलाश्मपात्रकैः । उपस्पृशेत्स्वहस्तस्थैस्तैरपि विचक्षणः ॥ यत्त्विदं वचनं, उपविश्यासने शुद्धे कुर्यादाचमनं बुधः । इति तद्भुक्त्वाचमनविषयम् । भुक्त्वाऽऽसनस्थोप्याचामेन्नान्यकाले कदाचन । इति वचनात् । अत्र मन्वादिभिः त्रिरपां प्राशनम्, द्विः परिमार्जनम्, सकृदुपस्पर्शनं चोक्तम् । " त्रिश्चतुर्वाऽप आचामेत्त्रिरोष्ठौ परिमृजेद्द्विरित्येके सकृदुपस्पृशेद्द्विरित्येके " इति गौतमादिभिः प्रकारान्तरं चोक्तम् । तथा मूर्धस्पर्शान्तमाचमनं बहुस्मृतिसिद्धम् । बाह्वन्तं क्वचित् । अतो यथोपदेशमनुष्ठेयम्, सदुपदेशात् । अत्र **भरद्वाजः**-प्रक्षाल्य चरणौ हस्तौ प्राङ्मुखो वाप्युदङ्मुखः । उपविश्यासने शुद्धे कुर्याद्गोकर्णवत्करम् ॥ सपवित्रे करे तस्मिन् माषोन्मानमिदं जलम् । आनीय त्रिः पिबेद्धीमान् वेदत्रितयतुष्टये ॥ कर्मावसाने कर्मादावेवमाचमनं पुनः । कुर्यात्स्वकर्मसिद्ध्यर्थं सर्वदा सर्वकर्मसु ॥ विना विध्युक्तमार्गेण समाचामति यो द्विजः ॥ शतकृत्वः समाचान्तोऽप्यशुद्ध इति भाषितः ॥ उपस्पर्शनकालेन स्मरेत्पानाङ्गदेवताः । उपस्पृष्टं भवेत्तेन रुधिरेण मलेन च ॥ **पैठीनसिः**-पादप्रक्षालनोच्छेषेण नाचामेत् । यद्वा भूमौ स्रावयित्वाऽऽचामेत् । न वर्षधारास्वाचामेत् । **स्मृतिरत्ने**-एलालवङ्गकर्पूरगन्धाद्यैर्वासितैर्जलैः । नाचामेदद्भिरुष्णाभिस्तथा शौच वशोषितैः ॥ शस्तमाचमनं तोयैरुष्णैरेवोष्णपायिनाम् । **याज्ञवल्क्यः**-अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः । त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ॥ **भरद्वाजः**-पक्वं सफेनं कलुषं न दुर्गन्धं सबुद्बुदम् । उष्णं समृत्तिकं क्षारं त्यजेदाचमने जलम् ॥ आन्तरिक्षं नखस्पृष्टं भिन्नरन्ध्रविनिर्गतम् । एकहस्तार्पितं वारि त्यजेदाचमने बुधः ॥ छन्नं पर्युषितं स्पृष्टमन्त्यजैः कृमिसंयुतम् । देवाभिषिक्तं हेयं च त्यजेदाचमने जलम् ॥ **आपस्तम्बः**-नाप्युदकशेषेण वृथा कर्माणि कुर्वीताचामेद्वा न शूद्राशुच्येकपाण्यावर्जितेन । इति । वृथा कर्माणि पादप्रक्षालनादीनि, आचामेदिति विशेषणाद्वृथाकर्मत्वाभावाच्च, अग्निपरिषेचनशिष्टं जलमन्यस्य परिषेचनार्हमेव । **भरद्वाजः**-तिष्ठन्नमन्हसञ्जल्पञ्छृण्वन्नन्त्यजभाषणम् । अन्यं स्पृशन्दिशः पश्यन्न कदाचिदुपस्पृशेत् ॥ काकश्वखरविट्क्रोडताम्रचूडरजस्वलाः । ग्राम्यान्त्यपतितान्पश्यंस्ततो नोपस्पृशेद्बुधः ॥ देवाजीवभिषक्छूद्रान् चण्डालातुरपातकान् । पश्यन्नुपस्पृशेद्धीमानन्यान्संकरजानपि ॥ शयानः पादुकास्थश्च बहिर्जानुकरोन्यधीः । उष्णीषी कंचुकी नग्नो न कदाचिदुपस्पृशेत् नमन् प्रह्वः, देवाजीव- त्रिविधो देवलकः । **चन्द्रिकायाम्**-शिरः प्रावृत्य कण्ठं वा तिष्ठन्मुक्तशिखोऽपि वा । अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥

## ❀ अथ द्विराचमनविधिः ❀

**भरद्वाजः**—स्नानपानक्षुतस्वापहोमभोजनकर्मसु । रथ्योपसर्पणे मूत्रविड्उत्सृष्टौ द्विराचमेत् ॥ जपे श्मशानाक्रमणे परिधाने च वाससः । चत्वरक्रमणे चैव द्विजाति-र्द्विरुपस्पृशेत् ॥ **याज्ञवल्क्यः**—स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे । आचान्तः पुनराचामेद्वासोपि परिधाय च ॥ **स्मृतिरत्ने**—दाने प्रतिग्रहे होमे जपे सन्ध्यात्रये तथा । बलिकर्मणि चाचामेदादौ द्विः सकृदन्ततः ॥ भोजने च द्विराचामेदादावन्ते च नित्यशः । **विष्णुः**—रथ्याक्रमणमूत्रपुरीषोत्सर्जनचण्डालम्ले-च्छभाषणेषु द्विराचामेत् । अत्र **भरद्वाजः**—चण्डालैरन्त्यजैरुक्तौ मलमूत्रविमोचने । दक्षिणे श्रवणे विप्रो ब्रह्मसूत्रं विनिक्षिपेत् ॥ **बौधायनः**—भोजने हवने दाने ह्युपहारे प्रतिग्रहे । हविर्भक्षणकाले च द्विर्द्विराचमनं स्मृतम् ॥ उपहारः देवार्चनम् । **व्यासः**—भोक्ष्यन्भुक्त्वा च होमे च सन्ध्ययोरुभयोरपि । आचान्तः पुनराचामेज्जपदानार्चना-दिषु ॥ **कौर्मे**—ओष्ठाविलोमके स्पृष्ट्वा वासोपि परिधाय च । रेतोमूत्रपुरीषाणामुत्सर्गे शूद्रभाषणे ॥ ष्ठीवित्वाऽध्ययनारम्भे कासश्वासागमे तथा । चत्वरं वा श्मशानं वा समा-गम्य द्विजोत्तमः ॥ सन्ध्ययोरुभयोस्तद्वदाचान्तोप्याचमेत्पुनः ॥ **भरद्वाजः**—ब्रह्मयज्ञे विशेषोस्ति कश्चिदाचमनक्रमः । प्रवक्ष्यते तदेतद्धि तत्कर्मफलसिद्धये ॥ पानत्रयं यथा पूर्वं तथा द्विः परिमार्जनम् । उपस्पृशेच्छिरश्चक्षुर्नासिकाश्रवरद्वयम् ॥ श्रोत्रद्वयं च हृदयं पूर्वोक्तविधिनालभेत् । एवमाचमनं प्रोक्तं ब्रह्मयज्ञे महर्षिभिः ॥

## ❀ अथाचमननिमित्तानि ❀

**मनुः**—कृत्वा मूत्रं पुरीषं वा खान्याचान्त उपस्पृशेत् । वेदमध्येष्यमाणश्च ह्यन्न-मश्नंश्च सर्वदा ॥ खानि इन्द्रियाणि, आचान्तः त्रिः पीत्वा । **आपस्तम्बः**—स्वप्ने क्षवथौ शिङ्घाणिकाश्वालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं गत्वा अमेध्यं चोपस्पृश्याप्रयतं च मनुष्यं नीवीं च परिधायाप उपस्पृशेत् । आलम्भे स्पर्शे, क्षवथुः क्षुतम्, शिङ्घाणिका नासामलम्, नीवीशब्देनाधोवासो लक्ष्यते, वासोग्रथनं नीवी । **चन्द्रिकायाम्**—चण्डालम्लेच्छसंभाषे स्त्रीशू-द्रोच्छिष्टपूरुषान् । स्पृष्ट्वाऽऽचामेदश्रुपाते लोहितस्य तथैव च ॥ **मार्कण्डेयः**—देवार्चनादिकार्याणि तथा गुर्वभिवादनम् । कुर्वीत सम्यगाचम्य तद्वदेव भुजिक्रि-याम् ॥ **शातातपः**—आचामेच्चर्वणे नित्यं मुक्त्वा ताम्बूलचर्वणम् । उपक्रमे विशि-ष्टस्य कर्मणः प्रयतोपि सन् ॥ **मनुः**—सुप्त्वा क्षुत्वा च भुक्त्वा च ष्ठीवित्वोक्त्वाऽनृतं वचः । रथ्यां श्मशानं चाक्रम्य ह्याचामेत्प्रयतोपि सन् ॥ **बृहस्पतिः**-अधोवायुस-मुत्सर्गे स्वाक्रन्दे क्रोधसम्भवे । मार्जारमूषिकास्पर्शे प्रहासेऽनृतभाषणे ॥ निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नुपस्पृशेत् । **ब्रह्माण्डे**—सन्देहेषु च सर्वेषु शिखामोक्षे तथैव च । उपवीतविपर्यासे नित्यमेवमुपस्पृशेत् ॥ **मनुः**— आचम्य प्रयतो नित्यं जपेदशुचिद-र्शने । अशुचिः शूद्रादिः । **पाद्मे**—चण्डालादीन् जपे होमे दृष्ट्वाऽऽचामेद्द्विजोत्तमः । श्वादीन्दृष्ट्वा तथैवापि कर्णं वा दक्षिणं स्पृशेत् ॥ श्वशूद्रपतितांश्चैव रासभं च रज-

रणे श्लेकाः । आपस्तम्बः–भूमौ निक्षिप्य तद्द्रव्यं शौचं कृत्वा यथाविधि । उत्सङ्गोपात्तपक्वान्नमुपस्पृश्य ततः शुचिः ॥ एतदापद्यशक्यनिधानद्रव्यविषयम् । तथा बृहस्पतिः–अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि । कृत्वा मूत्रं पुरीषं वा द्रव्यहस्तो न दुष्यति ॥ अत्र विशेषमाह मार्कण्डेयः–पक्वान्नेन गृहीतेन मूत्रोच्चारं करोति यः । अनिधायैव तद्द्रव्यमङ्के कृत्वा समाश्रितम् ॥ शौचं कृत्वा यथान्याय्यमुपस्पृश्य यथाविधि । अन्नमभ्युक्षयेच्चैव उद्धृत्यार्कस्य दर्शयेत् ॥ त्यक्त्वाग्रमात्रं वा तस्माच्छेषं प्रोक्ष्य विशुद्ध्यति । यमः–प्राङ्मुखादङ्मुखो वापि समाचम्य विशुद्ध्यति । पश्चिमे पुनराचम्य याम्ये स्नानेन शुध्यति ॥ आम्रेक्षुखण्डताम्बूलचर्वणे सोमपानके । विष्ण्वंघ्रितोयपाने च नाद्यन्ताचमनं स्मृतम् ॥ विष्णुपादोद्भवं तीर्थं पीत्वा न क्षालयेत्करम् । क्षालयेद्यदि मोहेन पञ्चपातकमाप्नुयात् ॥ भरद्वाजः–याः क्रियाः कुरुते मोहादनाचम्यैव नास्तिकः । भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः ॥ हारीतोपि विशेषमाह–श्रौतस्मार्तेषु गर्हेषु कृत्येषु विधिवद्बुधः । द्विराचामेत्तु सर्वत्र विण्मूत्रोत्सर्जने त्रयम् ॥ अत्रापस्तम्बसूत्रतात्पर्यं किञ्चिदुच्यते । तिष्ठन्नाचामेत्प्रह्वो वाऽऽसीनस्त्रिराचामेद्हृदयंगमाभिरद्भिस्त्रिरोष्ठौ परिमृजेत्, द्विरित्येके, सकृदुपस्पृशेत् द्विरित्येके । दक्षिणेन पाणिना सव्यं प्रोक्ष्य, पादौ शिरश्चेन्द्रियाणि उपस्पृशेच्चक्षुषी नासिके श्रोत्रे चाथाप उपस्पृशेत् । भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचमेत्, द्विः परिमृजेत्सकृदुपस्पृशेत् श्यावान्तपर्यन्तावोष्ठावुपस्पृश्याचामेत् । तिष्ठन्निति स्थलविषयम् । श्रोत्रे चेति चशब्देन । मुखाक्षिनासिके श्रोत्रभुजनाभिभुजान्तरम् । शिरश्चेति द्वादशाङ्गान्याचामन् संस्पृशेत्पृथक् ॥ इत्यादिस्मृत्यन्तरोक्ताङ्गान्तरं समुच्चीयते । द्विः परिमृजेत्सकृदुपस्पृशेदिति पूर्वोक्तविकल्पनिरासार्थमिति न पुनरुक्तिः । अनन्तरं स्वप्ने क्षवथावित्यदीन्याचमननिमित्तानि परिगणय्याप उपस्पृशेदित्याचमनं विहितम् । तत्र पूर्वोक्तेषु स्वल्पनिमित्तेषु आर्द्रं वा सकृदोषधिं भूमिं वेति विकल्प उक्तः । तत्र अमेध्यं चोपस्पृश्याप्रयतं च मनुष्यम् । इत्यत्राप्याचमनमेव, न स्नानम्, प्रकरणविरोधात् । मूत्रं कृत्वा पुरीषं वा, मूत्रपुरीषलेपानन्नलेपानुच्छिष्टलेपान् रेतसश्च ये लेपास्तान् प्रक्षाल्य पादौ च, आचम्य प्रयतो भवतीति तेनैव स्मरणाच्च । ऊर्ध्वमाचमनं प्रोक्तम् इति संवर्ताद्युक्तोऽशुचिस्पृष्टस्तृतीय एवात्राप्रयतः पुरुषः । लोहितकेशौ स्वदेहस्थो भूमिगतौ चाचमननिमित्तम्, अतः सर्वत्राचमनमेव । एवं गुरुनिमित्तेषु सत्स्वाचमनं कृत्वा क्षणमपि नाशुचिस्तिष्ठेदित्याह–भूमिगतास्वप्स्वाचम्य प्रयतो भवति, यं वा प्रयत आचमयेत् । न वर्षधारास्वाचामेत्, तथा प्रदरोदके, तप्ताभिश्चाकरणात्, रिक्तपाणिर्वयस उद्यम्याप उपस्पृशेत् । शक्तिविषये न मुहूर्तमप्यप्रयतः स्यात् । इति । भूमीति, भूमिस्थमुद्धृतात्पुण्यम् । इति स्मृतेः । यं वेति पात्रावर्जितजलेन आचमनमनुज्ञातम् । न वर्षेति वर्षग्रहणात्पात्रधारासु "न दूष्याः सन्तताधाराः" इति बौधायनोक्तनिरन्तरधारासु च न दोषः । प्रदरेति, गोतृप्तिशिष्टे पयसि शिलेराचमनक्रिया । इति कलौ निषेधाच्छुद्धमपि पल्वलोदकमाचमनानर्हमित्यर्थः । अकारणात् ज्वरादौ न दोष इति भावः । वयसे पश्युत्सादनार्थं तृणदण्डादिरहित-

हस्तोद्यमनकार्ये कृते आचामेदित्यर्थः । शक्तिविषये, अशक्तावश्यकत्वं नेति भावः। अत्र **पराशरः**—आपत्काले तु संप्राप्ते शौचाचारं न चिन्तयेत् । शुद्धिं समाचरेत्पश्चादिति वेदविदो विदुः ॥ **सूत्रम्**—शिरस्तु प्रावृत्य मूत्रपुरीषे कुर्यात् । भूम्यां किंचिदन्तर्धाय छायायां मूत्रपुरीषयोः कर्म वर्जयेत्।स्वान्तु छायामवमेहेत् न सोपानत्मूत्रपुरीषे कुर्यात् कृष्टे पथ्यप्सु च । तथा ष्ठीवनमैथुनयोः कर्माप्सु वर्जयेत्, अग्निमादित्यमपो ब्राह्मणं गां देवताश्चाभिमुखो मूत्रपुरीषयोः कर्म वर्जयेत् । अश्मानं लोष्टमार्द्रानोषधीवनस्पती-नूर्ध्वानाच्छिद्य मूत्रपुरीषयोश्शुन्धने वर्जयेत् । इति । शिरस्त्विति, अप्रावृतशिरा इति दीपस्मृतेः। अन्तर्धाय नाच्छादितायां भूमाविति निषेधात् । छायायां पान्थविश्रमच्छा-यायाम्। न चोपजीव्यच्छायासु मेहेत्, इति स्मृतेः । न याज्ञीयानाम् वृक्षाणामधस्ता-दिति विशेषणादन्यवृक्षच्छायासु प्राप्तेः । एवमेव । न तु मेहेन्नदीच्छायावर्त्मगोष्ठा-म्बुभस्मसु । न प्रत्यग्न्यर्कगोसोमसन्ध्याम्बुस्त्रीद्विजन्मनाम् ॥ इत्यादिपूक्तच्छाया च विज्ञेया । न ग्राममध्ये विप्रेन्द्र कुर्वीत मलमोचनम् । आत्मच्छायां नरच्छायां न मेहेत कदाचन ॥ विभीतककपित्थकेसुहिच्छाया न चाश्रयेत् । स्तम्भदीपमनुष्याणा-मन्येषां प्राणिनां तथा ॥ इति शाण्डिल्यादिवचनैः स्वतस्त्याज्यच्छायासु न प्रसंगः । आत्मशब्देन श्रुतिः—"यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति । " इति सर्वदेवतावासभूतो विप्र एवोच्यते । अयं तु स्वच्छायायां न मेहेत् । देवतावासभूतद-क्षिणभागष्ठीवनवत् । अन्यस्तु कामम् । अतः स्वान्तु च्छायामवमेहेदिति न विरोधः। मध्याह्ने स्वस्य छायायां मेहनं सम्भवतीति न चोद्यावकाशः । वेदविद्विप्रः स्वदेहं पुरतः किंचित्प्रसार्य मेहेत् । यत्तूक्तं **सूत्रम्**—अस्तमिते च बहिर्ग्रामादारादावसथाच्च मूत्रपुरीषयोः कर्म वर्जयेत् । इति, तद्गाढान्धकारपरम् । न चोरव्याघ्रादिभीतिपरम्, दिवापि ग्राम एव तत्प्रसक्तेः, अस्तमितेति विशेषणवैयर्थ्यापत्तेश्च । यच्चोक्तमश्मानं लोष्टमार्द्रानोषधीवनस्पतिमूर्ध्वानाच्छिद्य मूत्रपुरीषयोः शुन्धने वर्जयेदिति । तदपि वि-शिष्टविधिपरम्, अग्निपादिवाक्यवत् । अत उच्छिष्टौषधीवनस्पतिच्छेदनं न कुर्यादिति सिद्धम्। लोष्टाद्यैः केनचिद्वापि न मलं मार्जयेत् बुधः इति स्मरणात् । शुष्कैः पत्ति-तैर्वा गुदशुद्धिं न कुर्यादित्यलम् । **स्मृतिसारसमुच्चये**—न चांगुलिभिराचामेन्नाती-थेन न शब्दवत्। नात्यभर्व न त्वरया नोष्णं जलमकारणात् ॥ अत्र **व्यासः**—अपः पाणिनखस्पृष्टा आचामेद्यस्तु ब्राह्मणः । सुरापानेन तत्तुल्यं मनुः स्वायंभुवोऽब्रवीत् ॥

## ❀ अथ दन्तधावनविधिः ❀

**वृद्धशातातपः**—मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः । तस्माच्छुष्कमथार्द्रं वा भक्षयेद्दन्तधावनम् ॥ आस्यप्रवेशाद्भक्षणोपचारः । दन्तधावनं दन्तकाष्ठम् । **व्यासः**—प्रक्षाल्य पादौ हस्तौ च मुखं चाद्भिः समाहितः । दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरा ततः। आचम्य प्राङ्मुखः पश्चाद्दन्तधावनमाचरेत् । **याज्ञवल्क्यः**—कण्टकीक्षीरवृक्षोत्थं द्वादशाङ्गुलमव्रणम् । कनिष्ठिकाग्रवत्स्थूलं पर्वाग्रकृतकूर्चकम् ॥ दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथा । **भरद्वाजः**—आयुरित्यादिमन्त्रोयमुक्तः शाखाभिमन्त्रणे । विनाभिमन्त्रणं तूष्णीं वृथा स्याद्दन्तधावनम् ॥ **दन्तधावनमन्त्रः**—आयुर्बलं यशो

यर्चः प्रजाः पशुवसूनि च । ब्रह्मप्रज्ञां च मेधां च त्वन्नो देहि वनस्पते ॥ अस्य प्रजापतिर्ऋषिश्छन्दोनुष्टुप् वनस्पतिः । देवतेति हृदि स्मृत्वा मन्त्रारम्भे वदेद्बुधः ॥ अभिमन्त्र्याहृतां शाखां मन्त्रेणानेन वै द्विजः । अत ऊर्ध्वं क्रमेणैव धावयेच्छाखया तया ॥ वामभागं समारभ्य प्रादक्षिण्यक्रमेण तु । शाखां विदार्य तस्यैव भागेनैकेन मार्जयेत्॥जिह्वां ततो द्वितीयेन गृहस्थश्च यतिस्तथा । प्रक्षाल्य दन्तकाष्ठं तु शुचौ देशे ततस्त्यजेत् ॥ विधवाकन्यकाब्रह्मचारिणां नास्यशोधनम् । करञ्जार्जुनकैडर्यशिरीषखदिरादिषु ॥ द्विजः शुद्धिं यतिः कुर्यात्सदाष्टांगुलशाखया । कात्यायनः—पूर्वामुखो धृतिं विन्द्यच्छरीरारोग्यमेव च । दक्षिणे च तथा क्रौर्यं पश्चिमे तु पराजयम् ॥ उत्तरे तु गवां नाशं स्त्रीणां परिजनस्य च । पूर्वोत्तरे तु दिग्भागे सर्वान्कामानवाप्नुयात् ॥ काष्ठेन दन्तधावने दुर्लभ एव कालः, अतः स न प्रदर्श्यते । मार्कण्डेयः—शाल्मल्यश्वत्थहव्यानां धवकिंशुकयोरपि । कोविदारशमीपीलुश्लेष्मातकविभीतकान् ॥ वर्जयेद्दन्तकाष्ठेषु गुग्गुलं क्रमुकं तथा । त्याज्यं सपत्रमज्ञातमूर्ध्वशुष्कं च पाटितम् ॥ स्वग्धीनं ग्रन्थिसंयुक्तं तथा पालाशशिग्रुपे । उशनाः—तिन्दुकेंगुदबंधूकमोचामरजवल्लिजाः । कार्पासदन्तकाष्ठं च शक्रस्यापि श्रियं हरेत् ॥ गर्गः—कुशं काशं पलाशं च शिंशुपां यस्तु भक्षयेत् । तावद्भवति चण्डालो यावद्गङ्गां न पश्यति ॥ गोभिलः—गुवाकतालहिन्तालकेतकं च बृहद्वटम् । खर्जूरं नारिकेलं च सप्तैते तृणराजकाः ॥ तृणराजसमोपेतं यः कुर्याद्दन्तधावनम् । नरश्चण्डालयोनिः स्याद्यावद्गङ्गां न पश्यति ॥ भरद्वाजः—वानीरशिग्रुबन्धूकसीरिकाकोविदारकाः । काशांगुलिकुशाश्चैते विवर्ज्या दन्तधावने ॥ अत्र तर्जनीमध्यमाकनिष्ठांगुलीनामेव निषेधः । तथा वृद्धयाज्ञवल्क्यः—इष्टकालोष्टपाषाणैरितरांगुलिभिस्तथा । मुक्त्वा चानामिकांगुष्ठौ वर्जयेद्दन्तधावनम् ॥ शातातपः—यस्तु गण्डूषसमये तर्जन्या वक्त्रचालनम् । कुर्वीत यदि मूढात्मा नरके पतति द्विजः ॥ पैठीनसिः—तृणपर्णोदकेनांगुल्या वा दन्तान् धावयेत्, प्रदेशिनीवर्जम् । अंगुल्या अनामिकांगुष्ठाभ्याम् । व्यासः—प्रतिपत्पर्वषष्ठीषु नवम्यां दन्तधावनम् । पर्णैरन्यत्र काष्ठैस्तु जिह्वोल्लेखः सदैव तु ॥ अन्यत्र अनिषिद्धाहेषु. सदा निषिद्धानिषिद्धेष्वपि काष्ठेनैव जिह्वोल्लेखः कार्य इत्यर्थः । एवंच—अङ्गारवालुकापर्णतृणवस्त्रनखादिभिः । न कुर्याद्दन्तधावं तु भस्मलोष्टेष्टकादिभिः । इति रत्नावलीवचनं निषिद्धकुशकाशपलाशपर्णाश्वत्थादिपर्णविषयम् । व्यासः—अलाभे दन्तकाष्ठानां प्रतिषिद्धदिनेष्वपि । अपां द्वादश गण्डूषैर्मुखशुद्धिर्भविष्यति ॥ प्रतिपत्पर्वषष्ठीषु नवम्यां हरिवासरे । दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥ अष्टम्यां च चतुर्दश्यां पञ्चदश्यां त्रिजन्मसु । तैलं मांसं व्यवायं च दन्तकाष्ठं च वर्जयेत् ॥ भरद्वाजः—जन्मत्रयापराह्णार्कादिवसव्यतिपातकाः । ससंक्रमा विवर्ज्याः स्युर्दन्तधावनकर्मणि ॥ नद्यां देवालये गोष्ठे श्मशाने जलमध्यमे । यागस्थाने शुचौ देशे नाचरेद्दन्तधावनम् ॥ दक्षिणाभिमुखस्तिष्ठञ्छयानश्च विदिङ्मुखः । गच्छन् प्रत्यङ्मुखो भूत्वा नाचरेद्दन्तधावनम् ॥ कृष्णशार्दूलगोकृत्तौ यज्ञवृक्षतृणेषु च । उपविश्य न कुर्वीत वक्त्रशुद्धिमनासनः ॥

अनासन एव दन्तशुद्धिं कुर्यादित्यर्थः। **गर्गः**–दन्तकाष्ठे त्वमावास्या मैथुने च चतुर्दशी। अष्टमी ग्राम्यधर्मे च ज्वलन्तमपि पातयेत्॥ **नारदः**–उपवासादिने राजन् दन्तधावनकृन्नरः। स घोरं नरकं याति व्याघ्रभक्षश्चतुर्युगम्॥ स्त्रीसङ्गं खादनं पानं स्वाध्यायं क्षुरकर्म च। न कुर्याद्दन्तकाष्ठं च तैले तु शिरसि स्थिते॥ **गार्ग्यः**–शन्यर्कशुक्रवारेषु कुजाहे व्रतवासरे। जन्मभे श्राद्धदिवसे दन्तकाष्ठं विवर्जयेत्॥ **शाण्डिल्यः**–बाहू जान्वन्तरा कृत्वा कुक्कुटासनसंस्थितः। तर्पणाचमनोल्लेख्यदन्तशुद्धीः समाचरेत्॥ **भरद्वाजः**–यावन्तो नियमाः प्रोक्ता द्विजश्रेष्ठस्य भुञ्जतः। प्रेक्ष्याप्रेक्ष्येषु कर्तव्या दन्तधावनकर्मणि॥ मुखशुद्धिं प्रयत्नेन कृत्वैवाहरहर्द्विजः। प्रातःसन्ध्यामुपासीत तां विना न शुचिर्भवेत्॥

## ❀ अथ प्रातःस्नानविधिः ❀

अत्र **योगयाज्ञवल्क्यः**–अगम्यगमनात्स्तेयात् पापेभ्यश्च प्रतिग्रहात्। रहस्याचरितात्पापान्मुच्यते स्नानमाचरन्॥ मनःप्रसादजननं रूपसौभाग्यवर्धनम्। शोकदुःस्वप्नहं स्नानं मोक्षदं ह्लादनं तथा॥ स्नानमूलाः क्रियाः सर्वाः श्रुतिस्मृत्युदिता नृणाम्। तस्मात्स्नानं निषेवेत श्रीपुष्ट्यारोग्यवर्धनम्॥ **शाण्डिल्यः**–स्नानं प्रदानं भक्तानां सम्यक्शुद्ध्युपपादकम्। वक्ष्यामि योगादूर्ध्वं यत्कर्तव्यं स्नानपूर्वकम्॥ **चन्द्रिकायाम्**–याम्यं हि यातनादुःखं प्रातःस्नायी न पश्यति। प्रातःस्नानेन पूयन्ते ये हि पापकृतो जनाः॥ अस्नातो नाचरेत्कर्म जपहोमादि किंचन। लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान्॥ **दक्षः**–गुणा दश स्नानपरस्य पुंसो रूपं च तेजश्च यशश्च शौचम्। आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्ननाशश्च तपश्च मेधा॥ **सत्यव्रतः**–बलं रूपं यशो धर्मं शौचमायुः सुखं धृतिम्। आरोग्यं परमाप्नोति प्रातः स्नानेन मानवः॥ **चतुर्विंशतिमते**–उषस्युषसि यत्स्नानं सन्ध्यायामुदिते रवौ। प्राजापत्येन तत्तुल्यं महापातकनाशनम्॥ सन्ध्यायामुषस्युषसि यत् स्नानम्, अपि वा उदिते सूर्ये यत् स्नानम्, तद्द्वयं प्राजापत्यतुल्यमित्यर्थः। अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः। स्रवत्येष दिवारात्रं प्रातःस्नानं विशोधनम्॥ **दक्षः**–प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत्। सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम्॥

## ❀ अथ स्नानभेदाः ❀

**शंखः**–स्नानं तु द्विविधं प्रोक्तं गौणमुख्यप्रभेदतः। तयोस्तु वारुणं मुख्यं तत्पुनः षड्विधं भवेत्॥ नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम्। क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्तितम्॥ अस्नातस्तु पुमान्नार्हो जपाग्निहवनादिषु। प्रातःस्नानं तदर्थं तु नित्यस्नानं प्रकीर्तितम्॥ चण्डालशवयूपादि स्पृष्ट्वास्नातां रजस्वलाम्। स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तत्॥ पुष्यस्नानादिकं यत्तु दैवज्ञविधिचोदितम्। तद्धि काम्यं समुद्दिष्टं नाकामस्तत्प्रयोजयेत्॥ दैवज्ञः ज्योतिःशास्त्रवित्। जप्तुकामः पवित्राणि ह्यर्चिष्यन् देवताः पितॄन्। स्नानं समाचरेद्यत्तु क्रियाङ्गं तद्विदुर्बुधाः॥ मलापकर्षणं स्नानं स्नानमभ्यङ्गपूर्वकम्। मलापकर्षणार्थं तु प्रवृत्तिस्तस्य नान्यथा॥

सरस्सु देवखातेषु तीर्थेषु च नदीषु च । स्नानं तत्र समादिष्टं क्रियास्नानमिति स्मृतम् ॥ **गोभिलः**—नित्यं सन्ततनिर्वर्त्यं काम्यं कामाय यद्धितम् । निमित्तादुपजातं तु स्नानं नैमित्तिकं स्मृतम् ॥ अनेन मध्यन्दिनस्नानस्यापि नित्यत्वं सिद्धम् । तस्यापि सततनिर्वर्त्यत्वात् । तथा च **वैय्याघ्रपादः**—प्रातःस्नायी भवेन्नित्यं मध्यस्नायी सदा भवेत् ॥

## ❀ अथ गौणस्नानानि ❀

**गार्ग्यः**—दिव्यं वायव्यमाग्नेयं ब्राह्मं सारस्वतं तथा । मानसं चेति विज्ञेयं गौणस्नानं तु षड्विधम् ॥ **योगयाज्ञवल्क्यः**—मान्त्रं भौमं तथाऽऽग्नेयं वायव्यं दिव्यमेव च । वारुणं मानसं चेति सप्त स्नानान्यनुक्रमात् ॥ आपोहिष्ठादिभिर्मान्त्रं मृदालंभस्तु पार्थिवम् । आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ॥ यत्तु सातपवर्षेण दिव्यं तत्स्नानमुच्यते । वारुणं चावगाहस्तु मानसं विष्णुचिन्तनम् ॥ मानसं प्रवरं स्नानं सर्वे शंसन्ति सूरयः । आत्मतीर्थप्रशंसायां व्यासेन पठितं यतः ॥ इति । आग्नेयमत्र पाशुपतविषयम्, अथर्वशिखायां पाशुपतव्रतं विधायाग्निरित्यादिना भस्मेति तस्यैव तद्विधानात्, जटाधारणेन स्नातुं अशक्यत्वात् च । अन्यस्य तु विप्रस्य, विरुद्धं वर्जयेत्कर्म प्रेतधूमवदीरितम् । केशभस्मतुषांगारकपालेषु च संस्थितम् ॥ न पर्णलोष्ठाश्मभिर्मूत्रपुरीषापकर्षणं कुर्यात् । न भस्मकेशतुषकपालामेध्यान्यधितिष्ठेत् इति याज्ञवल्क्यगौतमादिभिर्भस्मवर्जनस्मरणात् । स्पर्शे तु, दीपाग्निं दीपतैलं च भस्म चास्थि रजस्वलाम् । एतानि ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत् ॥ इति स्नानविधानाच्च, हस्तौ मुक्त्वा देहस्पर्शे स्नानमिति न चोद्यावकाशः । **योगयाज्ञवल्क्यः**—शन्न आपस्तु द्रुपदा आपोहिष्ठाऽघमर्षणम् । एतैस्तु पञ्चभिर्मन्त्रैर्मन्त्रस्नानमुदाहृतम् ॥ **बृहस्पतिः**—वायव्यं गोरजः प्रोक्तमस्तं गच्छति गोपतौ । विद्वत्सरस्वतीप्राप्तं स्नानं सारस्वतं स्मृतम् ॥ प्राप्य सारस्वतं तीर्थं भवेन्मुदितमानसः । सर्वतीर्थाभिषेकाद्धि पवित्रं विदुषां हि वाक् ॥ तथा, ब्राह्ममाग्नेयकं भौमं वायव्यं दिव्यमेव च । वारुणं यौगिकं चैव षोढा स्नानं प्रकीर्तितम् ॥ भुवि मूर्ध्नि तथाऽऽकाशे मूर्ध्न्याकाशे तथा भुवि । आकाशे भुवि मूर्ध्नि स्यान्मन्त्रस्नानं विधीयते ॥ पादादिप्रणवं कुर्यादृर्चान्ते तथैव च । ऋगादिप्रणवं कुर्यान्मन्त्रस्नानेष्वयं विधिः ॥ शुचिदेशान्मृदानीय कुर्याद्गात्रोपलम्भनम् । मन्त्रं पार्थिवसंयुक्तं भौमस्नानं तदुच्यते ॥ गोखुराद्रज आदाय गोसावित्रीं जपेद्बुधः । गात्रेष्वथ तथा लिप्य स्नानं वायव्यमुच्यते ॥ उत्तरायणमध्ये तु यदा वर्षति वासवः । आतपेन सह स्नानं दिव्यं स्नानं तदुच्यते ॥ स्नानमब्दैवतैर्मन्त्रैर्जलमज्जनगाहनैः । तर्पणं पितृदेवानां स्नानं वारुणमुच्यते ॥ अनेन गौणस्नानेषु तर्पणं नास्तीति गम्यते । यौगिकं स्नानमाख्यातं योगो विष्णुविचिन्तनम् । आत्मतीर्थप्रशंसायां व्यासेन परिकीर्तितम् ॥ मानसं प्रवरं प्रोक्तं सेवितं ब्रह्मवादिभिः । मनःशुद्धिकरं पुंसां नित्यं तत्स्नानमाचरेत् ॥ शक्तश्चेद्वारुणं स्नानमप्रायत्ये तदेव हि । हृत्स्थितं सर्वभूतानां रविमण्डलसंस्थितम् ॥ नीलजीमूतसंकाशं वासुदेवं चतुर्भुजम् । शङ्खचक्रगदापद्मधारिणं वनमालिनम् ॥ तत्पादोदकजां धारां निपतन्तीं स्वमूर्द्धनि । चिन्तयेद्ब्रह्मरन्ध्रेण

प्रविशन्तीं स्वकां तनुम् ॥ तया प्रक्षालितं सर्वं स्वदेहं परिचिन्तयेत् । इदं स्नानं परं मन्त्रा सहस्रादधिकं स्मृतम् ॥ एवं स्नात्वा विशेषेण सर्वपापैः प्रमुच्यते । **पाद्मे**—वारुणं दिव्यमाग्नेयं वायव्यं पार्थिवं तथा । मान्त्रं मानसमित्येवं स्नानं सप्तविधं भवेत् ॥ प्रशस्तपर्वताग्रादौ जातया श्वेतमृत्स्नया । उच्चार्य केशवादीन नामान्यंगे यथाक्रमम् ॥ ललाटादौ यद्विन्यासमूर्ध्वपुंड्रस्य तद्भवेत् । पार्थिवं स्नानमब्लिंगैर्मन्त्रैर्वि-प्रकीरितैः ॥ अम्भोभिः प्रोक्षणं कुर्यात्तन्मात्रं स्नानमिष्यते । **अखण्डादर्शे**—अशामर्थ्याच्छरीरस्य वैषम्याद्देशकालयोः । स्नानान्यंतानि तुल्यानि मानसं श्रेष्ठमुच्यते ॥ **कौर्मे**—अशायत्ये समुत्पन्ने स्नानमेव समाचरेत् । ब्राह्मादीन्यन्यथाऽशक्तौ स्नान्याहुर्मनीषिणः ॥

## ❀ अथ स्नानार्हजलानि ❀

तत्र **मनुः**—नदीषु देवखातेषु तटाकेषु सरस्सु च । स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च ॥ **श्रीविष्णुपुराणे**—नदीनदतटाकेषु देवखातजलेषु च । नित्यं क्रियार्थं स्नायीत गिरिप्रस्रवणेषु च ॥ नदः प्रत्यक्स्रोतः । **मनुः**—कूपेषूद्धृततोयेन स्नानं कुर्वीत वा भुवि । स्नायीतोद्धृततोयेन ह्यथवा भुव्यसंभवे ॥ भूमिस्थजलस्नानासंभवे कूपादुद्धृत्य मृण्मयपात्रावर्जितजलैः स्नायादित्यर्थः । तथा **अखण्डादर्शे**—शूर्पवातनखाग्राम्बुस्नानं वस्त्रघटोदकम् । मार्जनीरेणुकेशाम्बु हन्ति पुण्यं पुरातनम् ॥ **जाबालिः**—न पारक्ये सदा स्नायान्न भुञ्जीत महानिशि । नार्द्रमेकं च वसनं परिदध्यात्कदाचन ॥ **मनुः**—परकीयनिपानेषु न स्नायीत कदाचन । निपानकर्तुः स्नात्वा तु दुष्कृतांशेन लिप्यते ॥ एतत्पतितादिजलविषयम् । महात्मनां निपानेषु न दोषः । तथा **मार्कण्डेयः**—पुराणानां नरेन्द्राणामृषीणां च महात्मनाम् । स्नानं कूपतटाकेषु देवतानां समाचरेत् ॥ **वृद्धमनुः**—अन्यायोपात्तवित्तस्य पतितस्य च वार्धुषेः । न स्नायादुदपानेषु स्नात्वा कृच्छ्रं समाचरेत् ॥ नद्याद्यलाभे विशेषमाह **शौनकः**—वापीकूपतटाकेषु यदि स्नायात्कथंचन । उद्धृत्य मृत्तिकापिण्डान् दश पञ्चाथवा क्षिपेत् ॥ एतत्परकीयनिपानविषयम् । **योगयाज्ञवल्क्यः**—परकीयनिपानेषु यदि स्नायात्कथंचन । सप्त पिण्डांस्ततोद्धृत्य तत्र स्नानं समाचरेत् ॥ अलाभे देवखातानां सरसां सरितामपि । उद्धृत्य चतुरः पिण्डान् पारक्ये स्नानमाचरेत् ॥ त्रीन्पिण्डानथ वोद्धृत्य स्नायादापत्सु नो सदा । अन्यैरपि कृते कूपे सरोवाप्यादिके तथा ॥ तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते । इदमत्यन्तापद्विषयम् । अनापदि, **विज्ञानेश्वरे**—अन्त्यजैः खानिताः कूपास्तटाका वाप्य एव च । एषु स्नात्वा च पीत्वा च प्राजापत्येन शुद्ध्यति ॥ अकामाद्ब्राह्मणः शुद्ध्येद्ब्रह्मकूर्चोपवासतः । पिण्डानुद्धरणे **शौनकः**—अनुद्धृत्य तु यः स्नायात्परकीयजलाशये । वृथा भवति तत्स्नानं कर्तुः पापेन लिप्यते ॥ अत्र विशेषः । अनुत्सृष्टेषु न स्नायात्तथैवासंस्कृतेषु च । असंस्कृतम् अप्रतिष्ठितम् । सर्वसत्त्वोद्देशेनाकृतमनुत्सृष्टम् । उत्सृष्टेषु सर्वार्थत्वेन कृतत्वात्पिण्डानुद्धरणेऽपि न दोषः । अत्र **शंखः**—स्नातस्य वह्नितप्तेन तथैव परवारिणा । शरीरशुद्धिर्विज्ञेया न तु स्नानफलं लभेत् ॥ पिण्डानुद्धरणे न परवारिस्नानेन स्नानफलं, किंतु शरीरशुद्धिमात्रमित्यर्थः ।

**याज्ञवल्क्यः**–वृथा तृष्णोदकैः स्नानं वृथा जप्यमवैदिकम् । वृथा त्वश्रोत्रिये दानं वृथा भुक्तमसाक्षिकम् ॥ यत्तु **षट्त्रिंशन्मते**–आपः स्वभावतो मेध्याः किं पुनर्वह्निसंयुताः । तेन सन्तः प्रशंसन्ति स्नानमुष्णेन वारिणा ॥ तदातुरविषयम् । तथा **यमः**–आदित्यकिरणैः पूतं पुनः पूतं तु वह्निना । आम्नातमातुरस्नाने प्रशस्तं तु शृतोदकम् ॥ नित्यं नैमित्तिकं स्नानं क्रियाङ्गं मलकर्षणम् । तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः ॥ **चन्द्रिकायाम्**–कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च । नित्यं याद्दच्छिकं चैव यथारुचि समाचरेत् ॥ इदं चण्डालशवादिस्पर्शस्नानविषयम् । पूर्वत्र यमोक्तं नैमित्तिकस्नानमस्पृश्यस्पृष्टस्पृष्टिविषयमशक्तविषयं वेति न विरोधः । **वृद्धमनुः**–मृतौ जन्मनि संक्रान्त्यां श्राद्धे जन्मदिने तथा । अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥ अस्पृश्यः स्वतोस्पृश्यः, न तु श्वादिस्पृष्टोऽस्पृश्यो विप्रः । सङ्क्रान्त्यां भानुवारे च सप्तम्यां राहुदर्शने । आरोग्यपुत्रवित्तार्थी न स्नायादुष्णवारिणा ॥ पौर्णमास्यां तथा दर्शे न स्नायादुष्णवारिणा । स गोहत्याकृतं पापं प्राप्नोत्येव न संशयः ॥ एतेनोक्तेषु मरणादिषु तीर्थाभावेपि न क्वाप्युष्णोदकैः स्नायात् । परोदकैरुद्धृतैः कूपोदकैर्वा स्नायादित्युक्तं भवति । अत्र **व्यासः**–शीतास्वप्सु निषिच्योष्णा मन्त्रसम्भारसंभृताः । गेहेऽपि शस्यते स्नानं तद्धीनमफलं वहिः ॥ मन्त्राः अब्लिङ्गा वारुणाश्च, तद्धीनम् मन्त्रहीनम्, सम्भाराः मृदादयः, वहिः तटाकादौ । अतस्तीर्थादौ स्नानमपि मन्त्रहीनं मण्डूकादिमज्जनवत् । तदाह **विवस्वान्**–मन्त्रसम्भारसंयुक्तमुपस्पर्शनमुच्यते । स्नानेवगाहने चैव प्लावनं विधिवर्जितम् ॥ मत्स्यकच्छपमण्डूकास्तोये मग्ना दिवानिशम् । न तेषां हि स्नानफलं तथैव विधिवर्जितम् ॥ **मनुः**–नातुरो नारुणकरानाक्रान्ते च नभस्थले । न पराम्भसि नाल्पे च नाशिरस्कः कथंचन ॥ नारुणकरानाक्रान्ते अरुणोदयात्पूर्वं न स्नायादित्यर्थः । नद्यां तु विद्यमानायां नदीं चोत्सृज्य कृत्रिमे । न स्नायादल्पतोये तु विद्यमाने बहूदके ॥ **मार्कण्डेयः**–भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम् । ततोपि सारसं पुण्यं ततो नादेयमुच्यते ॥ तीर्थतोयं ततः पुण्यं गोदावर्यां ततः परम् । **विष्णुः**–उद्धृतात्पुण्यं भूमिष्ठमुदकं तस्मान्नादेयं तस्मादपि साधुपरिगृहीतं सर्वत एव गांगम् । **मरीचिः**–त्रिभिः सारस्वतं तोयं पञ्चाहेन तु यामुनम् । सद्यः पुनाति गांगेयं दर्शनादेव नार्मदम् ॥ **पाद्मे**–जलं शुद्धमशुद्धं वा विष्णुवास्तुसमीपतः । विष्णुगङ्गासमं तोयं महापातकनाशनम् ॥ **शुकानुशासने**–यत्र भागवताः स्नानं कुर्वन्ति विमलाशयाः । तत्तीर्थमधिकं विद्धि सर्वपापप्रणाशनम् ॥ **अश्वत्थस्तवे**–अश्वत्थस्य जले यत्र छाया भवति कुत्रचित् । तत्प्रयागसमं तीर्थं तत्र सन्निहितो हरिः ॥ नद्यामस्तमिते स्नानं वर्जयेत्तु सदा बुधः । नद्यां स्नात्वा नदीं चान्यां न प्रशंसेत धर्मवित् ॥ **देवलः**–नदीषु न नदीं ब्रूयात्पर्वतेषु न पर्वतम् । नान्यं प्रशंसेत्तत्रस्थस्तीर्थेष्वायतनेषु च ॥ **श्रुतिः**–सितासिते सरिते यत्र संगते तत्राप्लुतासो दिवमुत्पतन्ति । ये वै तन्वां विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते ॥ इति । **गङ्गामाहात्म्ये**–यस्योदरे स्थितं तोयं गोदावर्य्याश्च यामतः ।

न यात्यसौ पुनर्गर्भमिति वेदविदो विदुः ॥ श्रुताभिलषिता दृष्टा स्मृता पीतावगाहि-तां । गङ्गा तारयते नृणामुभौ वंशौ भवार्णवात् ॥ श्रीपराशरः-सेतुं दृष्ट्वा समु-द्रस्य ब्रह्महत्यां व्यपोहति । पाद्मे-देवेन सह तत्काले निमज्जन्तीह ये नराः । ते निर्धूयाशुभं सर्वं महापातकमप्यय ॥ यान्ति ध्रुवं सुदुष्पापं स्थानमाचन्द्रतारकम् । यजन्ते चाश्वमेधेन राजानं पृथिवीपतिम् ॥ व्यासः-नद्या यच्च परिभ्रष्टं नद्या यच्च विवर्जितम् । गतप्रत्यागतं यच्च तत्तोयं परिवर्जयेत् ॥ न मेहेत जलद्रोण्यां स्नातुं च न नदीं तरेत् । नातिक्रमेद्वृथा सिन्धुं नानुस्नातुं नदीं तरेत् ॥ सिन्धुम् नदीम् । वृथा अस्नात्वाऽनाचम्य वा न लङ्घयेदित्यर्थः । बौधायनः-स्नानं रजकतीर्थेषु भोजनं गणिकागृहे । पश्चिमोत्तरशायित्वं शक्रस्यापि श्रियं हरेत् ॥ योगयाज्ञवल्क्यः-अग्राह्यास्त्विमा आपो नद्याः प्रथमवेगिकाः । प्रक्षोभिताश्च केनापि याश्च तीर्थाद्विनिःसृताः ॥ तीर्थम् अवतरणदेशः । कात्यायनः-याः शोषमुपगच्छन्ति ग्रीष्मे कुसरितश्च याः । तासु प्रावृषि न स्नायादपूर्णे दशवासरे ॥ भरद्वाजः-शशिव्रतं त्रयः कृच्छ्रा गायत्र्याश्चायुतं जपः । आप्लवनं महानद्यां तुल्य-मेतच्चतुष्टयम् ॥ उद्भूता भूधरेम्भोधिं प्रविशत्यम्बुसन्ततिः । या सा महानदी ज्ञेया सर्वपापप्रणाशनी ॥ शतयोजनमागम्य शैलाद्विशति सागरम् । याम्बुसन्ततिरेके तां प्रवदन्ति महानदीम् ॥ उद्भूता पूर्वदिग्भागे शैले सलिलसन्ततिः । या सा महानदी-युक्ता सा नदीत्यभिधीयते ॥ सरस्वती सूर्यसुता जह्नुकन्या च नर्मदा । एताश्चतुर्म-हानद्यो महानद्युत्तमोत्तमाः ॥

## ❀ अथ संक्रमणनिर्णयः ❀

संक्रान्तिविषये वृद्धवसिष्ठः-अयने द्वे द्वे विषुवे चतस्रःषडशीतयः । चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः ॥ विष्णुपद्यादिलक्षणं संज्ञाप्रकरण एवोक्तम् । मृगकर्कटसंक्रान्ती द्वे उदग्दक्षिणायने । विषुवे तु तुलामेषौ गोलमध्ये तयोः पराः ॥ अतीतानागते पुण्ये द्वे उदग्दक्षिणायने । त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः स्मृताः ॥ विषुवे तु तुलामेषे नाड्यस्तूभयतो दश । पुण्यायां विष्णुपद्यायां प्राक्प-श्चादपि षोडश ॥ षडशीत्यां व्यतीतायां षष्टिरुक्तास्तु नाडिकाः । पुण्या इति शेषः । अहःसंक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् । रात्रौ संक्रमणे पुण्यं दिनार्धं स्नानदान-योः ॥ पूर्णे चैवार्धरात्रे तु यदा संक्रमते रविः । तदा दिनद्वयं पुण्यं मुक्त्वा मकरक-र्कटौ ॥ प्रत्यस्तमयवेलायां मकरं याति भास्करः । प्रदोषे वार्धरात्रे वा स्नानं दानं परेऽहनि ॥ अर्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने । पूर्वमेव दिनं ग्राह्यं यावन्नोदय-ते रविः ॥ कुर्यात्सदायने भध्ये विष्णुपद्यां विषूवति । षडशीत्यापन्त्यभागे स्नानदा-नादिमादृतः ॥ भविष्योत्तरे-प्रत्यूषे कर्कटं भानुः प्रदोषे मकरं यदि । संक्रमे-त्वष्टिनाड्यस्तु पुण्याः पूर्वोत्तराः स्मृताः ॥ या यास्तत्संनिहिता नाड्यस्तास्ताः पुण्य-तमाः स्मृताः ॥ शातातपः-सूर्यस्य संक्रमे पुण्ये न स्नायाद्यदि मानवः । सप्तज-न्मसु रोगी स्याद्दुःखभागी च जायते ॥ अत्रायं विवेकः । मुक्त्वा मकरकर्कटौ स्नानं

दानं परेऽहनि । पूर्वमेव दिनं ग्राह्यमिति विशिष्य निश्चितत्वाद्रात्रौ संक्रमणे कर्कटके पूर्वमेव दिनं ग्राह्यम्, स्नानदानादौ तथा मकरे परदिनमेव ग्राह्यम्, न रात्रौ स्नानदानादिकं कार्यमिति, विशेषणवैयर्थ्यापत्तेः । रात्रौ संक्रमणे पुण्यमितीदं कर्कटमकरव्यतिरिक्तविषयमिति व्याख्यातृभिराख्यातम् । ततश्च । राहुदर्शनसंक्रान्तिविपुवात्ययवृद्धिपु॥ स्नानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ॥ इति वचनं च तदन्यसंक्रमविषयम् । ( ग्रहणोद्वाहसंक्रान्तीति पाठान्तरम् ) अत्ययः मृतिः, वृद्धिः पुत्रजन्म, अतस्तयोः पूर्वापरदिन एव स्नानादिकं कार्यम् । तथा **भविष्योत्तरे**–मिथुनात्कर्कसंक्रान्तिर्यदि स्यादंशुमालिनः । प्रभाते वा निशीथे वा कुर्यादहनि पूर्वतः ॥ पूर्वतः पूर्वस्मिन् । कार्मुकं तु परित्यज्य झषं संक्रमते रविः । प्रदोषे वा निशीथे वा स्नानं दानं परेहनि ॥ **वृद्धगार्ग्योऽपि**–यद्यस्तमयवेलायाम्, इति । अतः कर्कटमकरसंक्रमयोर्विकल्पेन पूर्वापराह्वविहितविंशतिषष्टिनाडिकादिकालेषु दिवसगतपुण्यकालत्वरतम्यपरमेव, या याः सन्निहिता इति वचनमिति । यत्त्वापस्तम्बेनोक्तम्–सशिरावमज्जनमप्सु वर्जयेत्, इति तदल्पजलविषयम्, समुद्रविषयम् च । तथा **ब्रह्माण्डे**–स्रवन्नदीषु तु स्नायात्प्रविश्यान्तः स्थितो द्विजः । तटाकादिषु तोयेषु प्रत्यक्षं स्नानमाचरेत् ॥ गृहस्थस्तु स्रवन्तीषु निमज्ज्य स्नानमाचरेत् । अन्यत्रासिच्य हस्ताभ्यामितरेषां तु मार्जनम् ॥ नाल्पाम्भसि शिरो मज्जेन्नावगाहेन्महोदधौ । क्रियास्नाने शिरो मज्जेदन्यत्रापि सरित्सु च ॥ स्रोतसोभिमुखः स्नायान्मार्जने चाघमर्षणे । अन्यत्रार्कमुखो रात्रौ प्राङ्मुखोऽभिमुखोऽपि वा ॥ सन्ध्यामुखस्तु सन्ध्यायां तथा चायन्तयामयाः । अन्यत्र स्थावरोदके । **कात्यायनः**–अंगुष्ठांगुलिभिश्चैव श्रोत्रदृङ्नासिकामुखम् । पिधायान्तर्निमज्ज्याप्सु त्रिर्जपेदघमर्षणम् ॥ **स्मृत्यर्थसारे**–नद्यां नास्तमिते स्नायाद्विशेषान्मध्ययामयोः । अग्निं प्रज्वाल्य वा स्नायाद्वाप्यादिषु महाजले ॥ रात्रौ स्नानं न कुर्वीत दानं चापि यथाविधि । अन्यत्र धाम्न इत्येव तत्रस्थे स्नानमाचरेत् ॥ ब्राह्मणाग्निगवामग्रे स्नानं विज्ञाप्य बुद्धिमान् । निशि स्नानं च दानं च कुर्यादग्निं सामिध्य च ॥ एते अस्पृश्यस्पर्शनपुत्रजन्मविषये स्नानदाने । **भरद्वाजः**–जन्मर्क्षे वैधृतौ पुण्ये व्यतीपाते च संक्रमे । दर्शे महानदीस्नानं समस्तदुरितक्षयम् ॥ यदि चेदर्धरात्रे तु भवेदेवं हि संक्रमः । दिवसद्वितयं पुण्यं स्नानदानजपादिषु ॥ यद्यर्द्धरात्रसमयात्परतः संक्रमो भवेत् । परस्मिन् दिवसे पुण्यं स्नानाद्यखिलकर्मसु ॥ इदं कर्कटकमकरव्यतिरिक्तसंक्रान्तिविषयम् । **भरद्वाजः**–ससप्तमीभानुदिने सामावास्येन्दुवासरे । सचतुर्थ्यारवारे च स्नापनं पृथुसिन्धुषु ॥ कृतं षष्टिसहस्राब्दकृतस्नानसमं भवेत । जपहोमप्रदानानि तादृशानि भवन्ति च ॥ पर्वणि स्नपनं शस्तं सर्वेषां लवणाम्बुधौ । सागरेषु तथाऽन्येषु शुभमाप्लावनं स्मृतम् ॥ क्षीरारवारयोरब्धौ पर्वणोरुभयोरपि । सन्तानकामी न स्नानं कुर्यात्तु ग्रहणं विना॥ निद्धे पर्वणि न स्नायाच्चतुर्दश्यां महोदधौ। सा चेद्रोमयुता स्नायात्तामतिक्रम्य पर्वणि ॥ अन्यत्र–अश्वत्थः सागरस्त्वेतौ न स्पृष्टव्यौ कदाचन । मन्दवारे स्पृशेत्पूर्वमपरं पर्वणि स्पृशेत् ॥ तथा–गर्भिण्यां संप्रवेशं च गर्भिणी गृहिणी यदि । वपनं सागरस्नानं शवभारं च वर्जयेत् ॥

## ❀ तीर्थयात्रायां वाहननिषेधः ❀

**स्मृतिरत्ने**—छत्रं तु हरते पादमर्धं हरति पादुका । यानं हरेत्त्रिपादं तु सर्वं हरति दोलिका ॥ ऐश्वर्याल्लोभमोहाद्वा गच्छेद्यानादिभिस्तु यः । निष्फलं तस्य तत्तीर्थं तस्माद्यानादि वर्जयेत् ॥ अत्र **शाण्डिल्यः**—कुटुम्बिनां विनान्येषां दृष्टं तीर्थादिसेवनम् । कुटुम्बिनो गृहे सर्वं विकलो निर्गतो गृहात् ॥ विकलः शून्यनित्यकृत्य इत्यर्थः ॥

## ❀ नदीनां रजोदोषनिर्णयः ❀

नदीरजोदोषविषये किञ्चिदुच्यते । अत्र **कात्यायनः**—संप्राप्ते श्रावणे मासि सर्वा नद्यो रजस्वलाः । तासु स्नानं न कुर्वीत वर्जयित्वा तु जाह्नवीम् ॥ **मार्कण्डेयः**—द्विमासं सरितः सर्वा भवन्ति हि रजस्वलाः । अप्रशस्तं ततः स्नानं वर्षादौ नववारिणि ॥ कर्कटसंक्रममारभ्य सिंहान्तं मासद्वयं नद्यो रजस्वला भवंति । **मार्कण्डेयः**—नभोनभस्ययोर्मध्ये सर्वा नद्यो रजस्वलाः । तासु स्नानं न कुर्वीत देवर्षिपितृतर्पणम् ॥ अत्र नभस्यशब्दः सिंहश्रावणपरः । तथा **वैय्याघ्रपादः**—सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः । तासु स्नानं न कुर्वीत वर्जयित्वा महानदीः ॥ **नारसिंहपुराणे**—गङ्गा यमुना गोदावरी तुङ्गभद्रा कावेरीत्येता महानद्यः इति । **मरीचिः**—आदित्यदुहिता गङ्गा प्लक्षजाता सरस्वती । रजसा नाभिभूयन्ते वेणा च नदसंज्ञिता ॥ **महाभारते**—महानद्यो देविका च कावेरी प्लक्षजा तथा । रजसा तु प्रदुष्याः स्युः कर्कटादौ त्र्यहं नृप ॥ प्लक्षजा गौतमी । **ब्राह्मे**—गोदावरी भीमरथी तुङ्गभद्रा च वेणिका । तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः ॥ भागीरथी नर्मदा च यमुना च सरस्वती । विशोका च वितस्ता च विन्ध्यस्योत्तरतः स्थिताः ॥ द्वादशैता महानद्यो देवर्षिक्षेत्रसम्भवाः । **कात्यायनः**—प्रवृत्ते श्रावणे मासि त्र्यहं गङ्गा रजस्वला । चतुर्थेऽहनि संप्राप्ते शुद्धा भवति जाह्नवी ॥ एतच्चान्द्रमानाभिप्रायम् । **अन्यथा**—प्रथमं कर्कटेऽपि त्र्यहं गङ्गा रजस्वला । सर्वा रक्तवहा नद्यः करतोयाम्बुवाहिनी ॥ इति वचनविरोधः स्यात् । श्रावणमासप्रवृत्तेरर्वागेव कर्कटसंक्रान्तेः । करतोया नदी । **कात्यायनः**—कर्कटादौ रजोदुष्टा गौतमी वासरत्रयम् । चन्द्रभागा सती गङ्गा सरयूर्नर्मदा तथा ॥ सेदम् । सप्तस्व सुता गङ्गा गोमती च सरिद्वरा । रजसा न प्रदुष्यन्ति ये चान्ये पुत्रदाः स्मृताः ॥ इति कात्यायनवचनं मासद्वयदोषाभावपरम् । स एव—नभोनभस्ययोर्मध्ये सर्वा नद्यो रजस्वलाः । न सन्ध्योपासनं स्नानं देवर्षिपितृतर्पणम् । एवमपि नदाः पुमांस इति रजोदोषो नास्त्येव । रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञिताः । इति स्मृतेः । प्रत्यक्स्रोतसो नदाः । अस्य क्वचिदपवादमाह **कात्यायनः**—उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च । चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥ स्वर्धुन्यम्भःसमानि स्युः सर्वाण्यम्भांसि भूतले । कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः ॥ सर्वं गङ्गासमं तोयं सर्वे ब्रह्मसमा द्विजाः । सर्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्ययोः ॥

---

१ प्रात स्नान इति पाठान्तरम् ।

## ❀ ग्रहणकालस्नानश्राद्धादिविधिः ❀

**महाभारते**—गङ्गास्नानं प्रकुर्वीत ग्रहणे चन्द्रसूर्ययोः । महानदीषु चान्यासु स्नानं कुर्याद्यथाविधि ॥ **शङ्खः**—वापीकूपतटाकेषु गिरिप्रस्रवणेषु च । नद्यां नदे देवखाते सरसीषूद्धृताम्बुषु ॥ उष्णोदकेपि वा स्नायाद्ग्रहणे चन्द्रसूर्ययोः । उष्णोदकस्नानं रोगिविषयम्[1] । तथा **वैय्याघ्रपादः**—आदित्यकिरणैः पूतं पुनः पूतं तु वह्निना । अतो व्याध्यातुरः स्नायाद्ग्रहणेप्युष्णवारिणा ॥ चन्द्रसूर्यग्रहे स्नायान्मृतके सूतकेपि वा । अस्नायी मृत्युमाप्नोति स्नायी मृत्युं न विन्दति ॥ ग्रहणे संक्रमे चापि न स्नायाद्यदि मानवः । सप्तजन्मसु रोगी स्याद्दुःखभागी च जायते ॥ **महाभारते**—सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने । अकुर्वाणस्तु नास्तिक्यात्पङ्के गौरिव सीदति ॥ भूमिर्गावः सुवर्णं वा धान्यं वा यद्यदीप्सितम् । तत्सर्वं ग्रहणे देयमात्मनः श्रेय इच्छता ॥ नैमित्तिकश्राद्धेषु पठितत्वाद्ग्रहणे श्राद्धमामेन कर्तव्यम् । तथा **व्यासः**—आपद्यनग्नौ तीर्थे च ग्रहणे चन्द्रसूर्ययोः । आमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात्सदैव हि ॥ अतः सति सम्भवेऽप्यामेनैव श्राद्धं कार्यं न त्वन्नेनेति । **बौधायनः**—अश्रोत्रियः श्रोत्रियो वा त्वपात्रं पात्रमेव वा । विप्रब्रुवो वा विप्रो वा ग्रहणे दानमर्हति ॥ अश्रोत्रियः वेदहीनः, श्रोत्रियः एकशाखाध्यायी, अपात्रं विद्यातपोहीनः, पात्रं तद्युक्तः, विप्रब्रुवः अध्ययनाध्यापनरहितः, तद्युक्तो विप्रः। **व्यासः**—त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा । मनुष्या मध्यकाले तु मुक्तिकाले तु राक्षसाः ॥ इदं त्रिदशादि कालपरम्, नतूत्तमादिपरम् । **अथर्वणे**—स्नानं स्यादुपरागादौ मध्ये होमः सुरार्चनम् । ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीयते ॥ मुच्यमाने भवेद्दानं स्नानं मुक्ते विधीयते । ग्रस्यमाने रवौ स्नायान्मुच्यमाने निशाकरे ॥ प्राक्पश्चात्संक्रमेपूक्तः पुण्यकालोपि भागशः । चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः ॥ **ब्राह्मे**—उपमध्ये लक्षगुणं ग्रहणे चन्द्रसूर्ययोः । पुण्यं कोटिगुणं मध्ये मुक्तिकाले त्वनन्तकम् ॥ स्नानदानादीति शेषः । **निगमे**—यदा सूर्यग्रहो रात्रौ दिवा चन्द्रग्रहो यदि । तत्र स्नानं न कुर्वीत दद्याद्वा न तु किंचन ॥ **वैय्याघ्रपादः**—स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके । स्मार्तकर्म श्राद्धदानादि । **अङ्गिराः**—सर्वे वर्णाः सूतके च मृतके राहुदर्शने । स्नात्वा श्राद्धं प्रकुर्वीरन् दानं शाठ्यविवर्जिताः ॥ शाठ्यं लोभः । अतो ग्रहण स्नानादावाशौचं नास्त्येव । तथा रजोदोषश्च नास्तीति सिद्धम् । **संग्रहे**—काले नवोदकं शुद्धं न पिबेत्त्र्यहमेव तत् । अकाले सप्तरात्रं तु पीत्वा नाद्यादहर्निशम् ॥ **भविष्यपुराणे**—महदम्बुसमं चापि यदि तिष्ठेत्पुरातनम् । नवाम्बुमिश्रितं तेन न दुष्टमिति सूरयः ॥ **वैय्याघ्रपादः**—अभावे कूपवापीनामनपायिपयोभृताम् । रजोदुष्टेपि पयसि ग्रामभोगो न दुष्यति ॥ **कात्यायनः**—उपाकर्मणि चोत्सर्गे प्रेतस्नाने च निर्गतौ । चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥

---

1 इदं ग्रहणस्य स्पर्शमध्यमोक्षकालपरमिति पाठान्तरम् ।

## ❀ माघस्नानविधिः ❀

अथ माघस्नानविषये किंचिदुच्यते । पाद्मे—आपो नारायणो देवः सर्ववेदेषु पठ्यते । ग्रहाणां च यथा सूर्यो नक्षत्राणां यथा शशी ॥ मासानां च तथा माघः श्रेष्ठः सर्वेषु कर्मसु । योगोऽपि दुर्लभो राजन् त्रैलोक्ये सचराचरे ॥ अस्मिन्योगेऽप्यशक्तो हि स्नायादपि दिनत्रयम् । योगः मकरे कात्स्न्र्येन माघान्वयः । अथातः संप्रवक्ष्यामि माघस्नानविधिं परम् । कर्तव्यो नियमः कश्चिद् व्रतरूपो नरोत्तमैः ॥ फलातिशयहेतोर्वै किंचिद्भोज्यं त्यजेद्बुधः । भूमौ शयीत होतव्यमाज्यं तिलविमिश्रितम् ॥ त्रिकालं चार्चयेन्नित्यं वासुदेवं सनातनम् । दातव्यो दीपको दण्डो देवमुद्दिश्य माधवम् ॥ इन्धनं कम्बलं वस्त्रमुपानत्कुंकुमं घृतम् । अन्नं चैव यथाशक्ति देयं माघे नराधिप ॥ परस्यान्नं न सेवेत त्याज्यो विप्रैः प्रतिग्रहः । माघान्ते भोजयेद्विप्रान् यथाशक्ति नराधिप ॥ देया तु दक्षिणा तेभ्यो ह्यात्मनो हितमिच्छता । मकरस्थे रवौ माघे गोविन्दाच्युत माधव ॥ स्नानेनानेन मे देव यथोक्तफलदो भव ॥ इति मन्त्रं समुच्चार्य स्नायान्मौनं समाश्रितः ॥ बहिःस्नानं तु वाप्यादौ द्वादशाब्दफलप्रदम् । तटाके द्विगुणं राजन् नद्यादौ तु चतुर्गुणम् ॥ दशधा देवखाते च शतधा च महानदी । शतं चतुर्गुणं राजन् महानद्योस्तु सङ्गमे ॥ महानदी महानद्याम् । सहस्रगुणितं सर्वं तत्फलं मकरे रवौ । गङ्गायां स्नानमात्रेण लभते मानुषो नृप ॥ पापानां भूरिभारस्य दाहदेशं प्रजापतिः । प्रयागं विदधे भूप प्रजानां च हिते रतः ॥ सितासितेऽपि यो मज्जेदपि पापशतावृतः । मकरस्थे रवौ राजन्न गर्भेषु निमज्जति ॥ दुर्जेया वैष्णवी माया देवैरपि सुदुस्त्यजा । प्रयागे दह्यते सापि माघमासे नराधिप ॥ धर्मद्रव्यो ह्यपां बीजं वैकुण्ठचरणाच्युतम् । धृतं मूर्ध्नि महेशेन यद्गाङ्गममलं जलम् ॥ तद्ब्रह्मैव न सन्देहो निर्गुणं प्रकृतेः परम् । तेन किं समतां गच्छेदपि ब्रह्माण्डगोचरे ॥ सर्वेभ्योऽपि च यज्ञेभ्यो माघो योगाच्च गर्जति । तीर्थाच्च तपसा माघो यो विद्यायाश्च गर्जति ॥ तस्मिन्वै भारते वर्षे कर्मभूमौ विशेषतः । माघस्नानं विना नृणां निष्फलं जन्म कीर्तितम् ॥ मकरस्थे रवौ माघे यत्र क्वापि बहिर्जले । निष्कामैर्वा सकामैर्वा स्नातव्यं हरितुष्टये ॥ व्रतैर्दानैस्तपोभिश्च न तथा प्रीयते हरिः । माघमज्जनमात्रेण यथा प्रीणाति केशवः ॥ अवैष्णवो हतो विप्रो हतं श्राद्धमदक्षिणम् । अब्रह्मण्यं हतं क्षत्रमनाचारं कुलं हतम् ॥ अदीक्षेग्नौ हतो होमः स्वार्थे पाकक्रिया हता । जीवनार्थं हतं तीर्थं जीवनार्थं हतं व्रतम् ॥ संदिग्धोऽपि हतो मन्त्रो व्यग्रचित्तो हतो जपः । अनायासं हतं सर्वं यत्कृतं पारलौकिकम् ॥ मनुष्याणां तथा जन्म माघस्नानं विना हतम् । मकरस्थे रवौ यो हि न स्नात्यनुदिते रवौ ॥ कथं पापैः प्रमुच्येत कथं स त्रिदिवं व्रजेत् । अनेन, माघस्नानमुदयात्पूर्वमेव कर्तव्यमिति सिद्धम् । ततश्च माघमासे रटन्त्यापः किंचिदभ्युदिते रवौ । ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे ॥ इति वचनं स्त्रीशूद्रादिविषयम् । तेषां स्नानव्यतिरेकेणानुष्ठानाभावात् । विप्रादिविषये तु सन्ध्यातिक्रम-

---

१ या विद्यायश्च गर्जतीति पाठान्तरम् ।

दोषो दुर्वारः स्यात्, स्नानपूर्वकत्वात्सन्ध्यावन्दनादेः । न ह्युदयात्पूर्वं किंचिदुदये च, कालद्वये स्नानमिति युक्तम्, मार्जनाद्युपस्थानान्तस्यैककर्मत्वेन मध्ये कर्मान्तरानुष्ठानायोगात् । उदयन्तं दिवाकरमित्युदयकाले सूर्योपस्थानविधानाच्च । किंचिदभ्युदिते स्नानानुष्ठाने, मासं सन्ध्यातिक्रमेणाशुचित्वकर्मानर्हत्वशूद्रत्वादिदोषाः प्रसज्येरन् । "अजीर्णेभ्युदिते वान्त" इति सन्ध्यातिक्रमप्रायश्चित्तत्वेन विहितस्योदयस्नानस्य नैमित्तिकत्वस्मरणेन माघस्नानासिद्धेः । यद्वा । उपस्युपसि यत्स्नानं सन्ध्यायामुदिते रवौ । इति स्नानप्रशंसापरं वा, आहोस्वित्कैमुतिकन्यायेन उदयात्पूर्वस्नानपरं वा । अभ्युतेपि रवौ, कं जलम्, पतन्तं स्नानं कुर्वन्तम्, पुनीमहे किल, किमुतोदयात्प्राक् स्नानमित्यलम् । शोचन्ति सर्वपापानि माघमासे समागते । नाशकालोयमस्माकं यदि स्नास्यति वारिणि ॥ ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः । माघस्नायी विपापः स्यात्तत्संयोगी च पञ्चमः ॥ सन्देहो नात्र कर्तव्यो माघस्नाने नराधिप । प्रायश्चित्तं परं चैतन्माघस्नानमनुत्तमम् ॥ सर्वाधिकारिणो ह्यत्र विष्णुभक्ता यथा नृप । इति । एवंप्रकारपर्यालोचनया, माघस्नानं नित्यं नैमित्तिकं काम्यं चेति सिद्धम् ॥

## ❀ अथ समुद्रस्नानविधिः ❀

अत्र संग्रहश्लोकः—पापाणमन्त्रं प्रथमं पुरस्तादावाहनं तत्र नमस्क्रिया च । अर्घ्यं तथा प्रार्थनमभ्यनुज्ञा स्नानं च कुर्यादश तर्पणं च ॥ क्रमेण मन्त्रोदाहरणम् । पिप्पलादसमुत्पन्ने कृत्ये लोकभयङ्करि । पापाणं ते मया दत्तमाहारार्थं तु कल्पितम् ॥ विश्वाची च घृताची च विश्वयोने विशांपते । सान्निध्यं कुरु मे देव सागरे लवणाम्भसि ॥ नमस्ते विश्वगुप्ताय नमो विष्णवपाम्पते । नमो जलधिरूपाय नदीनां पतये नमः ॥ सर्वरत्नमयः श्रीमान् सर्वरत्नाकराकर । सर्वरत्नप्रदातस्त्वं गृहाणार्घ्यं महोदधे ॥ पृथिव्यां यानि तीर्थानि प्रविशन्ति महोदधे । स्नातस्य मे फलं देहि सर्वस्मादपि चांहसः ॥ समस्तजगदाधार शंखचक्रगदाधर । अनुज्ञां देहि मे देव युष्मत्तीर्थनिषेवणे ॥ वेदादयो वेदविसिष्ठयोनिः सरित्पतिः सागररत्नयोनिः । अग्निश्च ते तेज इला च तेजो रेतोधा यज्ञममृतस्य नाभिः ॥ इदं ते अन्याभिरसमानमद्रियोः काश्च सिन्धुं प्रविशन्त्यापः । सर्पो जीर्णामिव त्वचं जहाति पापं शरीरात्सशिरस्कोभ्युपेत्य ॥ इदं द्वयं स्नानमन्त्रः । तर्पणमन्त्रः—पिप्पलादं कविं कण्वं कृतान्तं जीवितेश्वरम् । मन्युं च कालरात्रिं च विद्यां चाहर्गणेश्वरम् ॥ ततो देवर्षितर्पणादि समानम् । अत्र विशेषमाह भरद्वाजः—दर्भाक्षततिलैः सार्धं गत्वा तीरं महोदधेः । प्रणम्य प्रयतो भक्त्या दत्त्वा पुष्पाक्षताञ्जलिम् ॥ दद्यादेतैस्त्रिभिर्मन्त्रैः प्रणमेद्दण्डवद्बुधः । नमस्ते सर्वतोयेश नमो गम्भीरमूर्तये ॥ नमो मेघविनादाय नमस्ते परमात्मने । विविधाघौघनाशाय सुधागर्भाय ते नमः ॥ महानद्यधिनाथाय महारत्नोद्भवाय च । महाप्राण्यधिवासाय

---

१ सेतुतर्पणे विश्वामित्रो वसिष्ठमाह—वसिष्ठ वामदेव च पराशरमुमापतिम् । वाल्मीकिं नारद चैव वालखिल्यांश्च काश्यपम् ॥ नल नील गवाक्ष च गवय गन्धमादनम् । मैंद च द्विविद चैव ऋषभ शरभं तथा ॥ जाम्बवन्त हनूमन्त सुग्रीव चाङ्गद तथा । राम च लक्ष्मण चैव सीतां चैव विभीषणम् ॥ एतांश्च तर्पयेद्विद्वान्दर्भाक्षततिलैः सह ।

महावारिधये नमः ॥ समुद्रः सागरोम्भोधिरुदन्वानुदधिस्तथा । सरस्वानम्बुराशिश्च पारावारोऽमृतोद्भवः ॥ नामधेयैश्चतुर्थ्यन्तैः प्रणवादिनमोन्तकैः । एतैर्मन्त्रैर्नमस्कृत्य वरुणं प्रणमेद्बुधः ॥ इमं मे वरुणेत्यादि द्वाभ्यां च वरुणं स्तुवन् । मुहूर्तद्वितयं तत्र संसेव्यासीत कोविदः ॥ मुहूर्तमथवा तत्र ततः स्नानमुपाक्रमेत् । तिलान्पुष्पाणि दर्भांश्च दत्त्वा स्नायाद्यथाविधि ॥ इति । ततः पाषाणमन्त्रादि समानम् ॥

## ❀ अथाभ्यङ्गस्नानविधिः ❀

**भरद्वाजः**–अभ्यङ्गस्नपने योग्या वारा ये तिथिभिः सह । कथ्यन्ते तेधुना स्पष्टं पुष्टये बलवृद्धये ॥ इन्दोर्बुधस्य सौरेश्च वारेऽभ्यङ्गं प्रशस्यते । कान्तिं मामखिलां दद्युर्भोगान्वाराधिपाः क्रमात् ॥ द्वितीयायाश्चतस्रस्तु प्रशस्ताः सप्तमी तथा । दशमी द्वादशी चैव त्रयोदश्यपि च स्मृता ॥ भानुभौमामराचार्यशुक्रवारेषु संक्रमे । व्यतीपाते च जन्मर्क्षे नाभ्यङ्गस्नानमाचरेत् ॥ एकादश्यां चतुर्दश्यामष्टम्यां प्रतिपद्यपि । षष्ठ्यां पर्वणि चाभ्यंगस्नानं नैव समाचरेत् ॥ उत्तराफल्गुनीज्येष्ठाश्रवणार्द्रासु रात्रिषु । अभ्यंगस्नपनं धीमान् सुखार्थी वर्जयेत्सदा ॥ शिशुरोगार्तवृद्धानां यथाकालं शरीरिणाम् । अभ्यंगोष्णोदकस्नानं नैव दोषावहं स्मृतम् ॥ **स्मृत्यन्तरे**–रवौ पुष्पं गुरौ दुर्वा भृगौ गोमयमेव च । भौमे भूमिं विनिक्षिप्य तैलाभ्यंगं समाचरेत् ॥ द्रव्यान्तरयुतं तैलं न दुष्येद्ग्रहणं विना । तुलसीदलसंमिश्रं ग्रहणेपि न दुष्यति ॥ इदमापद्विषयम् । **पुराणे**–तिथिनक्षत्रवारेषु निषिद्धेष्वपि रात्रिषु । तैलमाज्येन संस्पृष्टमद्रिर्वा शुद्धिमाप्नुयात् ॥ **सत्यव्रतः**–पिष्टपकारनालेन घृतेनाथ जलेन वा । तैलमामयुतं वापि न कदाचन दुष्यति ॥ रोगातुरस्यापि तथा तैलं जातु न दुष्यति । **उमामहेश्वरसंवादे**–शिरोभ्यक्तेन तैलेन नांगं किंचिदुपस्पृशेत् । तिलपिष्टं च नाश्नीयात्तस्य चायुर्न रिष्यति ॥ दशमी पुत्रनाशाय स्वनाशाय त्रयोदशी । तृतीयोभयनाशाय तैलाभ्यंगं विवर्जयेत् ॥ उक्तवचनं क्षत्रियादिविषयम् । तथा **जाबालिः**–त्रयोदश्यां तृतीयायां दशम्यां चैव सर्वदा । शूद्रविट्क्षत्रियाः स्नानं न कुर्युस्तैलसंस्कृतम् ॥ **ज्योतिःशास्त्रे**–सन्तापः कीर्तिरल्पायुर्धनं निर्धनता तथा । अनारोग्यं सर्वकामा अभ्यङ्गाद्भास्करादिषु ॥ नाभ्यंगमर्के न च भूमिपुत्रे क्षौरं च शुक्रे च कुजे च मांसम् । बुधेषु योषित्परिवर्जनीया शेषेषु सर्वाणि सदैव कुर्यात् ॥ **अत्रि**–दन्तकाष्ठे त्वमावास्या मैथुने च चतुर्दशी । हन्ति सप्तकुलं पुंसां तैलग्रहणतोऽष्टमी ॥ **गार्ग्यः**–मांसाशने पञ्चदशी तैलाभ्यंगे चतुर्दशी । अष्टमी ग्राम्यधर्मे च ज्वलन्तमपि पातयेत् ॥ **विष्णुपुराणे**–चतुर्दश्यष्टमी चैव ह्यमावास्या तु पूर्णिमा । पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥ तैलस्त्रीमांससंभोगी पर्वस्वेतेषु यः पुमान् । विण्मूत्रभोजनं नाम प्रयाति नरकं नरः ॥ **वृद्धवसिष्ठः**–कुहूपूर्णेन्दुसंक्रान्तिचतुर्दश्यष्टमीषु च । नरश्चाण्डालयोनिः स्यात्तैलस्त्रीमांससेवनात् ॥ **गार्ग्यः**–षष्ठ्यमापूर्णिमापातचतुर्दश्यष्टमीषु च । आह सन्निहितं पापं तैले मांसे क्षुरे भगे ॥ **संग्रहे**–श्राद्धाहे जन्मदिवसे विवाहे सुखदुःखयोः । व्रते चैवोपवासे च तैलाभ्यङ्गं विवर्जयेत् ॥ **वृद्धमनुः**–गते देशान्तरे पत्यौ गन्धमाल्याञ्जनानि च । दन्तकाष्ठ च

ताम्बूलं वर्जयेद्वनिता सती ॥ रत्नावल्याम्–सुरया लिप्तदेहोऽपि प्रायश्चित्तीयते द्विजः । प्रातरभ्यक्तदेहस्य निष्कृतिर्नैव विद्यते ॥ अयं निषेधः । अतएव आश्वयुग्धर्मे चतुर्दश्यामिनोदये । ( अरुणोदय इति केचित्पठन्ति ) स्नानमभ्यज्य कर्त्तव्यं नरैर्नरकभीरुभिः ॥ इति स्मरणात् । नरकचतुर्दशीव्यतिरिक्तविषयः । स्मृत्यन्तरे–उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः । तावत्तिष्ठति वै लक्ष्मीर्यावत्तैलं न संस्पृशेत् ॥ एवं चोपोषितव्रतिक्षौरिणां सर्षपादितैलमपि वर्ज्यमेव । अन्येषां तु न दुष्टम् । तथा प्रचेताः–सार्षपं गन्धवत्तैलं यत्तैलं पुष्पवासितम् । द्रव्यान्तरयुतं तैलं न दुष्यति कदाचन ॥ सर्वत्र सामान्येन निषेधे सत्यपि पुनरपि निषेधो दोषाधिक्यप्रदर्शनार्थः । तथा मरीचिः–सामान्येन निषेधेऽपि दोषाधिक्यान्निषेधनम् । तद्दोषभेदहेतुत्वादिति शास्त्रविदो विदुः ॥ महाभारते–पादाभ्यंगं शिरोभ्यङ्गं द्विजस्योच्छिष्टमार्जनम् । एकैकं पाण्डवश्रेष्ठ राजसूयाद्विशिष्यते ॥ नारदीये–तैलाभ्यंगं महाराज ब्राह्मणानां करोति यः । स स्नातोऽब्दशतं साग्रं गङ्गायां नात्र संशयः ॥ न तत्कुर्यात्तृतीयायां त्रयोदश्यां तिथावपि । शाश्वतीं भूतिमन्विच्छन् दशम्यामपि पण्डितः ॥ भूतिमिच्छतां तैलस्पर्शननिषेधोऽभ्यङ्गे नास्ति, प्रत्युताभ्यङ्गकाभ्यक्तयोर्वृद्धिः स्यादित्याह व्यासः–पञ्चमी दशमीं चैव तृतीयां च त्रयोदशीम् । अभ्यंगस्पर्शनास्पानाद्यश्च तैलं निषेवते ॥ चतुर्णां तस्य वृद्धिः स्याद्धनापत्यबलायुषाम् ॥

## ❀ अथ स्नाननिषेधः ❀

अत्र मेधातिथिः–न स्नायादुत्सवेऽतीते माङ्गल्यं विनिवर्त्य च । अनुव्रज्य सुहृद्बन्धूनर्चयित्वेष्टदेवताम् ॥ मनुः–न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि । न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ॥ न वासोभिरिति, सवासा जलमाविशेदित्युक्तेन्यैव सचैलस्नानं नान्यत्रेत्यर्थः । वृद्धमनुः–आराध्यं देवमाराध्य बन्धूनप्यनुसृत्य च । भुक्त्वा व्याधौ च न स्नायात् तैलेनापि निशास्वपि ॥ अस्यापवादमाह मनुः–राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु । स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च ॥ चन्द्रिकायाम्–ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च । स्नानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ॥ व्याघ्रपादः–पुत्रजन्मनि यात्रायामभिषेके व्रतेषु च । उपरागे विवाहे च प्राणार्थेषु विशेषतः ॥ मन्त्रपूर्वमकालेऽपि स्नायात्तैलेन वा नरः । विवाहादौ तैलेन स्नानमशक्तविषयम् । पुत्रजन्माद्यभावे स्पर्शादिना स्नाने कर्तव्ये देवलो विशेषमाह–दिवाहृतैर्जलैः स्नानं निशि कुर्यान्निमित्ततः । निक्षिप्य च सुवर्णं वा सन्निधाप्य च पावकम् ॥ प्रवेशाद्वरुणस्यामी न रात्रौ जलमुद्धरेत् । धाम्न इत्यादिमन्त्रेण ततो रात्रौ जलं हरेत् ॥ ततः नदीतटाकादिभ्यः । एवं क्वचित्तिथिदोषाभावमाह गार्ग्यः–पुत्रजन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा । नित्यस्नाने च कर्तव्ये तिथिदोषो न विद्यते ॥ अत्र श्राद्धेऽभ्यंगस्नानं वृतब्राह्मणविषयम् ॥

## ❀ अथामलकस्नाननिषेधः ❀

शातातपः–अमायां च नवम्यां च सप्तम्यां च विशेषतः । धात्रीकल्केन च

स्नानं प्रातःस्नाने च वर्जयेत् ॥ **गार्ग्यः**–तैलस्नानं सदा पुण्यं कुर्यादामलकैः श्रिये । सप्तमीनवमीदर्शरविसंक्रमणादृते ॥ **मरीचिः**–अमायां चैव सप्तम्यां संक्रान्तौ च रवेर्दिने । चन्द्रसूर्योपरागे च स्नानमामलकैस्त्यजेत् ॥ **स्मृत्यन्तरे**–आदित्यवारे संक्रान्त्यां नवम्यां पर्वणोर्द्वयोः । नरो नामलकैः स्नायादलक्ष्म्या परिगृह्यते ॥ सप्तम्यानिन्दुनवमीषु च सम्पदिच्छुः स्नायात्कदाचिदपि नामलकैर्मनुष्यः । स्नातुर्जनस्य दशमी तनयं चतुर्दश्यर्थं निहन्त्युभयमेव सदा द्वितीया ॥ एवं द्वितीयादिषु च प्रातःकाले धात्रीकल्कस्नानं त्याज्यमिति सिद्धम् ॥

## ❀ अथ काम्यस्नानम् ❀

**भरद्वाजसंवर्तौ**–जन्मर्क्षे वैधृतौ पुण्ये व्यतीपाते च संक्रमे । आप्लावनं महानद्यां समस्तदुरितक्षयम् ॥ **शातातपः**–यो नरः स्नाति तीर्थेषु समुद्रे सेतुबन्धने । सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥ **कौर्मे**–पुनर्वसुबुधोपेता चैत्रमासे सिताष्टमी । तस्यां नदीषु स्नातस्तु वाजपेयफलं लभेत् ॥ **स्मृतिसारसमुच्चये**–पुण्ये च जन्मनक्षत्रे व्यतीपाते दिनत्रये । अमायां च नदीस्नानं कुलकोटिं समुद्धरेत् ॥ **महाभारते**–या मन्वाद्या युगाद्याश्च तिथयस्तासु मानवः । स्नात्वा हुत्वा च जप्त्वा च दत्त्वानन्तफलं लभेत् ॥ मन्वादियुगादी संज्ञाप्रकरणे द्रष्टव्यौ । **गार्ग्यः**–आसु यत्क्रियते श्राद्धं यच्च दानं य आप्लवः । उपवासादिकं यच्च तदनन्तफलं स्मृतम् ॥ आसु मन्वादियुगादिपुण्यतिथिषु । **शङ्खः**–अमा सोमेन भौमेन गुरुणा वा युता यदि । सा तिथिः पुष्कला प्रोक्ता सहस्रार्कग्रहैः समा ॥ **संग्रहे**–पितरं मातरं वापि भ्रातरं सुहृदं गुरुम् । निमज्जेत्तु यमुद्दिश्य द्वादशांशं लभेत सः ॥ तस्यार्थितेष्वष्टमांशं लभेत्स्नानफलं नरः । किं च । भावहीनस्य पुण्यक्षेत्रवासः पुण्यतीर्थस्नानादिकं च निष्फलमेव । तथा **सात्वते**–गङ्गातीर्थेषु वसन्ति मत्स्या देवालये पक्षिसङ्घाश्च नित्यम् । भावोज्झितास्ते न फलं लभन्ते तीर्थैश्च देवायतनैश्च पुण्यैः ॥ **इतिहाससमुच्चये शुकानुशासने**–ज्ञानं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः । सर्वभूतदया तीर्थं सत्यं तीर्थं तथाऽऽर्जवम् ॥ दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते । ब्रह्मचर्यं परं तीर्थमहिंसा तीर्थमुच्यते ॥ अस्तेयं तु परं तीर्थमद्रोहस्तीर्थमुच्यते । श्रद्धा तीर्थं धृतिस्तीर्थं तपस्तीर्थमुदाहृतम् ॥ तीर्थानामपि तत्तीर्थं संशुद्धिर्मनसः परा । न जलाप्लुतदेहस्तु स्नात इत्यभिधीयते ॥ स स्नातो यो दमस्नातः स तु शुद्धतमो मतः । यो लुब्धः पिशुनः क्रूरो नास्तिको विषयात्मकः ॥ सर्वतीर्थेष्वपि स्नातः पापो मलिन एव सः । न शरीरमलत्यागान्नरो भवति निर्मलः ॥ मानसेस्तु मलैस्त्यक्तो भवत्यत्यन्तनिर्मलः । विषयेष्वनिशं रागो मनसो मल उच्यते ॥ तेष्वेव वीतरागत्वं निर्मलत्वमुदाहृतम् । चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्न शुद्ध्यति ॥ शतशोथ जलैर्धौतं सुराभाण्डमिवाशुचि । दानमिज्या तपः शौचं तीर्थं वेदाः श्रुतं तथा ॥ सर्वाण्येतानि तीर्थानि यस्य भावः सुनिर्मलः । निगृहीतेन्द्रियग्रामो यत्र यत्र वसेन्नरः ॥ यत्र रागादिरहिता वासुदेवपरायणाः । वसन्ति पुण्यकर्माणस्तत्क्षेत्रमधिकं ततः ॥ तस्मादेव महाभागा वैष्णवा धीतकल्मषाः । पुनन्ति सकलं लोकं किं तीर्थमधिकं ततः ॥ **आश्वमेधिके**–आचार-

वस्त्रान्तरगालितेन सत्यप्रसन्नक्षमशीतलेन । ज्ञानाम्बुना स्नाति हि यस्तु नित्यं किं तस्य भूयः सलिलेन कृत्यम् ॥ उद्धवं प्रति **श्रीभगवानाह**–तपस्तीर्थं जपो दानं पवित्राणीतराणि च । नालं कर्तुं हि तां शुद्धिं या ज्ञानकलया कृता ॥ **समुच्चये**–ज्ञानह्रदे ध्यानजले रागद्वेषमलापहे । यः स्नाति मानसे तीर्थे स याति परमां गतिम् ॥ पृथिव्यां यानि तीर्थानि तानि सर्वाणि सागरे । सागरे यानि तानि स्युः पादे विप्रस्य दक्षिणे ॥ **आश्वमेधिके**–आस्ते हरिरचिन्त्यात्मा यत्रैव मधुसूदनः । तत्तीर्थं तत्परं ब्रह्म तत्पुण्यं तत्तपोवनम् ॥

## ❀ अथ नैमित्तिकस्नानम् ❀

**मनुः**–दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा । शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति ॥ तृतीयस्यापि स्नानं वेदितव्यम् । तथा **गौतमः**–पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचेलमुदकोपस्पर्शनाच्छुध्येत् इति । अनेन पतितादिस्पृष्टिनमारभ्य तृतीयस्यापि सचेलस्नानमिति स्पष्टम् ॥ **चन्द्रिकायाम्**–चण्डालसूतिकोदक्याः पतिताः शव एव च । एतेषामेव संस्पर्शे तत्स्पृष्टिन्याय इष्यते ॥ एवकारेण चान्त्यादिव्यतिरिक्तस्पर्शे तत्स्पृष्टिन्यायो नेति गम्यते । तथा **संग्रहकारः**–कटधूमस्पृशं वान्तं विरक्तं क्षुरकर्माणि । मैथुनाचरितारं च स्पृष्ट्वा स्नानं न विद्यते ॥ यत्तु **संवर्तः**–तत्स्पृष्टिनं स्पृशेद्यस्तु स्नानं तस्य विधीयते । ऊर्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा ॥ तदबुद्धिपूर्वस्पर्शविषयम् । तथा **चन्द्रिकायाम्**–अबुद्धिपूर्वसंस्पर्शे द्वयोः स्नानं विधीयते । त्रयाणां बुद्धिपूर्वे तु तत्स्पृष्टिन्यायकल्पना ॥ उपस्पृशेच्चतुर्थस्तु तदूर्ध्वं प्रोक्षणं स्मृतम् । यद्यनामिकलग्नानां स्पृष्ट्वा स्पृष्टिर्भवेद्यदि ॥ तत्स्पृष्टस्यैव तत्स्पृष्टिरितरस्तु शुचिर्भवेत् । दुर्बलादिविषये **कौर्मे विशेषः**–चण्डालसूतिकाशवैः संस्पृष्टं संस्पृशेद्यदि । प्रमादात्तत आचम्य जप्यं कुर्यात्समाहितः ॥ तत्स्पृष्टस्पृष्टिनं स्पृष्ट्वा बुद्धिपूर्वं द्विजोत्तमः । आचामेत्तद्विशुद्ध्यर्थं प्राह देवः पितामहः ॥ अत्र **याज्ञवल्क्यः**–उदक्याशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत् । अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा सकृत् ॥ अत्र **विज्ञानेश्वरः**–अशुचयः शवचण्डालपतितसूतिकाशावाशौचिनः एतैः संस्पृष्टः स्नायात् । एतैः पुनरुदक्याऽशुचिसंस्पृष्टादिभिः संस्पृष्टः उपस्पृशेत् आचामेत् । अब्लिङ्गानि आपोहिष्ठा इत्येवमादीनि मन्त्रवाक्यानि जपेत्, त्रिष्वेव बहुवचनस्य चरितार्थत्वात् । तथा गायत्रीं च सकृन्मनसा जपेत् । ननु उदक्यासंस्पृष्टः स्नायादित्येकवचननिर्दिष्टस्य कथं तैरिति बहुवचनेन परामर्शः । सत्यमेवम्, किंच उदक्यादिसंस्पृष्टव्यतिरिक्तस्नानानर्हमात्रस्पर्शस्याचमनविधानार्थं तैरिति बहुवचननिर्देश इत्यविरोधः । ते च स्नानार्हाः स्मृत्यन्तरतोऽवगन्तव्याः । यथाह **पराशरः**–दुःस्वप्ने मैथुने वान्ते विरक्ते क्षुरकर्मणि । चितियूपश्मशानानां स्पर्शने स्नानमाचरेत् ॥ **मनुः**–वान्तो विरक्तः स्नात्वा तु घृतप्राशनमाचरेत् । आचम्यैव तु भुक्त्वान्नं स्नानं मैथुनिनः स्मृतम् ॥ एतदृतुगमनविषयम अनृतावपि मैथुने क्वचित्स्नानं स्मृतम् । अष्टम्यां च चतुर्दश्यां दिवा पर्वणि मैथुनम् । कृत्वा सचेलं स्नात्वा

तु वारुणीभिश्च मार्जयेत् ॥ **यमः**—अजीर्णेऽभ्युदिते वान्ते तथा ह्यस्तमिते रवौ । दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते ॥ **च्यवनः**—श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीविनं ग्रामयाजकं सोमविक्रयिणं यूपं चितिकाष्ठं च मद्यं मद्यभाण्डं च सस्नेहं मानुषास्थि शवस्पर्शिनं रजस्वलां महापातकिनं शवं स्पृष्ट्वा सचेलमप्सोऽवगाह्योत्तीर्याग्निमुपस्पृश्य गायत्र्यष्टशतं जपेत्। घृतं प्राश्य पुनः स्नात्वा त्रिराचामेत्। इति । एतच्च बुद्धिपूर्वविषयम् । अन्यत्र स्पर्शे स्नानमात्रम् । तदाह **बृहस्पतिः**— दिवाकीर्तिं चितिं चैव शवं यूपं रजस्वलाम् । स्पृष्ट्वाप्यकामतो विप्रः स्नानं कृत्वा विशुद्ध्यति ॥ इति । **काश्यपः**—उदयास्तमये स्कन्दित्वा अक्षिस्पन्दने कर्णाक्रोशने चित्यारोहणे यूपस्पर्शने सचेलस्नानं कृत्वा "पुनर्मन" इति जपेत् । महाव्याहृतिभिः सप्त आज्याहुतीर्जुहुयादिति । शवस्पृष्टिव्यतिरिक्तस्पर्शे द्वितीयस्याचमनमिति सिद्धम् । तथा **देवलः**—संस्पृश्याऽशुचिसंस्पृष्टं द्वितीयं वापि मानवः । हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यति ॥ **वृद्धशातातपः**—अशुचि संस्पृशेदन्यमेक एव स दुष्यति । तत्स्पृष्टो न च दुष्येत सर्वद्रव्येष्वयं विधिः ॥ तदेवम्, शवादिस्पर्शे तृतीयस्याचमनपरं वचनं अकामविषयम् रोगिविषयं च । तृतीयस्य स्नानपरं वचनं कामविषयमिति व्यवस्थापनीयम् । तथा **चन्द्रिकायाम्**—ससूतकं समृतकं प्रसूतां वा रजस्वलाम् । स्पृष्ट्वा स्नायात्तु तत्स्पृष्टस्पर्शनादाचमेद् बुधः ॥ अत्र **प्रचेताः**—वस्त्रान्तरितसंस्पर्शः साक्षात्स्पर्शोऽभिधीयते । साक्षात्स्पर्शे तु यत्प्रोक्तं तद्वस्त्रान्तरितेऽपि च ॥ **आपस्तम्बः**—एकशाखां समारूढश्चण्डालादिर्यदि स्थितः । ब्राह्मणस्तत्र निवसन्स्नानेन शुचितामियात् ॥ **चन्द्रिकायाम्**—तार्णे संस्तर एकस्मिन्नस्पृश्यैः सह तिष्ठति । अस्पृष्टस्तैरदुष्टोऽस्मीत्येवं मूढस्तु मन्यते ॥ तार्णे तृणनिर्मिते । **वैयाघ्रपादः**—चण्डालं पतितं चैव दूरतः परिवर्जयेत् । गोबालव्यजनादर्वाक्सवासा जलमाविशेत् ॥ एतदतीव संकटस्थलविषयमिति व्याख्यातम् । **अङ्गिराः**—यस्तु च्छायां श्वपाकस्य ब्राह्मणोऽप्यधिरोहति । तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुध्यति ॥ **विज्ञानेश्वरे**—शैवान्पाशुपतान्स्पृष्ट्वा लोकायतिकनास्तिकान् । विकर्मस्थान्द्विजाञ्छूद्रान्सवासा जलमाविशेत् ॥ इदं ब्रह्माण्डवचनम् । **चन्द्रिकायाम्**—बौद्धान्पाशुपताञ्जैनान् लोकायतिकनास्तिकान् । इत्यादि । **व्यासः**—लवणं गुडकार्पासं कौसुम्भं तैलसर्पिषी । चण्डालाद्यैस्तु संस्पृष्टं प्रोक्षणादेव शुध्यति ॥ चण्डालम्लेच्छपतितसंकारान्त्यजमृन्मयम् । यद्यादि यदि संस्पृष्टं स्नात्वा कृच्छ्रं समाचरेत् ॥ कापालिकांस्तु संस्पृश्य प्राणायामोऽधिको मतः । **मार्कण्डेयः** अभोज्यसूतिकाषण्ढमार्जाराखुश्वकुक्कुटान् । पतितापविद्धचण्डालमृताहारांश्च धर्मवित् ॥ संस्पृश्य शुध्यते स्नानादुदक्याग्रामसूकरौ । तद्वच्च सूतिकाशौचदूषितौ पुरुषावपि ॥ **व्यासः**—चण्डालपतितौ दृष्ट्वा नरः पश्येत भास्करम् । स्नातस्तौ समालोक्य पुनः स्नानेन शुध्यति ॥ सूतिकापतितोदक्याचण्डालश्च यतुर्थकः । यथाक्रमं परिहरेदेकद्वित्रिचतुर्युगैः ॥ **बृहस्पतिः**—युगं युगद्वयं चैव त्रियुगं च चतुर्युगम् । चण्डालः सूतिकोदक्यापतितानामधः क्रमात् ॥ **पैठीनसिः**—काकोलूकस्पर्शने सचेलस्नानम्, अनुदकमूत्रपुरीषकरणे सचेलस्नानम्, महाव्याहृतिभिर्होमश्च ।

संवर्त्तः–विड्वराहखरानुष्ट्रान्वृकगोमायुवानरान् । काककुक्कुटगृध्रांश्च स्पृष्ट्वा स्नानं विधीयते ॥

## ❀ श्वादिस्पर्शे ❀

श्वविषये विष्णुः–नाभेरधः कराग्रं वा शुना यद्युपहन्यते । प्रक्षाल्य तमभिज्वाल्य पुनराचम्य शुध्यति ॥ नाभेरूर्ध्वं शुना स्पृष्टे लिप्तोमेध्येन वा पुनः । प्रक्षाल्य मृद्भिरङ्गानि सचेलस्नानमर्हति ॥ अत्र विशेषमाह देवलः–मानुषास्थि वसां विष्ठामार्तवं मूत्ररेतसी । मज्जानं शोणितं वापि परस्य यदि संस्पृशेत् ॥ स्नात्वा प्रमृज्य लेपादीनाचम्य च शुचिर्भवेत् । तान्येव स्वानि संस्पृश्य पूतः स्यात्परिमार्जनात् ॥ इति । परिमार्जनं प्रक्षालनम् । रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ॥ मारुतेनैव शुध्यन्ति पक्वेष्टकाचितानि च ॥ इति याज्ञवल्क्यः । यमः–सकर्दमं तु वर्षासु प्रविश्य ग्रामसंकरम् । जङ्घयोर्मृत्तिकास्तिस्रः पादयोर्द्विगुणं दिशेत् ॥ ग्रामसंकरः ग्रामसलिलप्रवाहप्रदेशः । अत्र विशेषमाह विष्णुः–आजानुभ्यां भवेत्स्नानमानाभ्युपवसेदहः । ऊर्ध्वं नाभेस्त्रिरात्रं स्यादमेध्यस्पर्शने विधिः ॥ शंखः–रथ्याकर्दमतोयेन ष्ठीवनाद्येन वा पुनः । नाभेरूर्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुध्यति ॥

## ❀ विडालस्पर्शे ❀

मनुः–पुच्छे विडालकं स्पृष्ट्वा स्नात्वा विप्रो विशुध्यति । भोजने कर्मकाले च विधिरेष उदाहृतः ॥ अन्यकाले–मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः । देवलः–श्वकुक्कुटवराहांश्च ग्राम्यान्संस्पृश्य मानवः । सचेलः सशिराः स्नात्वा तदानीमेव शुध्यति ॥

## ❀ अशुद्धस्य चण्डालादिस्पर्शे ❀

श्वपाकं पतितं चान्त्यमुन्मत्तं शवदाहकम् । सूतिकां स्राविकां नारीं रजसा च परिप्लुताम् ॥ अशुद्धान्स्वयमप्येतानशुद्धस्तु यदि स्पृशेत् । विशुद्ध्यत्युपवासेन तथा कृच्छ्रेण वा पुनः ॥ स्राविका प्रसवस्य कारयित्री । एतद् बुद्धिपूर्वविषयम् । अत्र कौर्मे–उच्छिष्टोद्विरनाचान्तश्चण्डालादीन् स्पृशेद्विजः । प्रमादाद्वा जपेत्स्नात्वा गायत्र्यष्टसहस्रकम् ॥ चण्डालपतितादींस्तु कामाद्यः संस्पृशेद्विजः । उच्छिष्टस्तत्र कुर्वीत प्राजापत्यं विशुद्धये ॥ अनेनाभिप्रायेण विष्णुः–अनुच्छिष्टेन संस्पृष्टे स्नानं येन विधीयते । तैरेवोच्छिष्टसंस्पृष्टः प्राजापत्येन शुध्यति ॥ इत्यादयः स्नानार्हाः स्मृत्यन्तरतो बोद्धव्याः । एवं स्नानार्हाणामशुचित्वात्तदभिप्रायम् तैरिति बहुवचनमविरुद्धम् । उदक्याशुचिभिः स्नायादित्येतच्चण्डालाद्यचेतनद्रव्यव्यवधानस्पर्शे वेदितव्यम् । चेतनव्यवधाने तु द्वितीयस्य स्नानम् । "दिवाकीर्तिमुदक्यां च" इति मनुस्मरणात् । तृतीयस्य तु आचमनमेव । तत्स्पृष्टिनं स्पृशेद्यस्तु स्नानं तत्र विधीयते । ऊर्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा ॥ इति संवर्तस्मरणात् । इदं चाबुद्धिपूर्वे, बुद्धिपूर्वे तु तृतीयस्यापि स्नानमेव । पतितचण्डालसूतिकेति गौतमस्मरणात् । बुद्धिपूर्वेपि चतुर्थस्याचमनमेव । उपस्पृश्याशुचिस्पृष्टं तृतीयमपि मानवः । हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यति ॥ इति देवलस्मरणादिति विज्ञानेश्वरः ॥

## ❀ चाण्डालादिच्छायास्पर्शे ❀

**स्मृतिरत्ने**–छायामन्त्यश्वपाकादेः स्पृष्ट्वा स्नानं समाचरेत् । चत्वारिंशत्पदादूर्ध्वं छायादोषो न विद्यते ॥ **अखण्डादर्शे**–तृणकाष्ठादिखातेन कुड्येनान्तरिते तथा । गोवालव्यजनेनापि स्नानं तत्र न विद्यते ॥

## ❀ वृषलादिस्पर्शे मज्जनसंख्या ❀

**स्मृत्यन्तरे**–वृषलं चान्त्यजातिं च चण्डालं पतितं तथा । आर्तवाभिप्लुतां नारीं स्पृष्ट्वा स्नानं समाचरेत् ॥ एकं च दशकं चैव द्वात्रिंशद्विंशतिं तथा । द्वात्रिंशच्च क्रमेणैव स्नानं कृत्वा विशुध्यति ॥ एवं मज्जनसंख्याव्यवस्था तत्तद्ग्रन्थस्पर्शे । अन्यथा **भरद्वाजः**–अस्पृश्यस्पर्शने चैव त्रयोदश निमज्ज्य च । आचम्य प्रयतः पश्चात्स्नानं विधिवदाचरेत् ॥ **वृद्धमनुः**–चण्डालादेस्तु संस्पर्शे वारुणं स्नानमेव हि । इतराणि तु चत्वारि यथायोगं स्मृतानि हि ॥ **योगयाज्ञवल्क्यः**–अप्रायत्ये समुत्पन्ने स्नानमेव विधीयते । पूर्वोद्दिष्टैस्तथा मन्त्रैरन्यथा मार्जनं स्मृतम् ॥ मन्त्रैः वारुणैरब्लिङ्गैश्च ॥

## ❀ अन्तर्दशाहे रोदने ❀

**पराशरः**–अस्थिसंचयनादर्वागुदित्वा स्नानमाचरेत् । अन्तर्दशाहे विप्रस्य ऊर्ध्वमाचमनं स्मृतम् ॥ रोदः अश्रातुरव्यञ्जनपरः । शावे शवगृहं गत्वा श्मशाने वान्तरेऽपि वा । आतुरव्यञ्जनं कृत्वा दूरस्थोऽप्यशुचिर्भवेत् ॥ आतुरव्यञ्जनं मृतविषयविलापादि । बहुसम्भवे प्रत्येकं स्नात्वा अनुगमनादि कार्यम्, अन्यथा " अनुद्वाह्य स्वयमप्येतान् " इति वचनात् कृच्छ्रं स्यात् ॥

## ❀ शिश्वादीनां रजस्वलादिस्पर्शे ❀

**पराशरः**–शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतम् । रजस्वलादिसंस्पर्शे स्नानमेव कुमारके ॥ शिशुरादन्तजननादाचौलाद्बालकः स्मृतः । कुमारः स तु विज्ञेयो बुधैरामौञ्जिबन्धनात् ॥

## ❀ रात्रौ नैमित्तिकस्नानम् ❀

**संग्रहे**–अप्रशस्तं निशि स्नानमासुरी चाधिदेवता । पुत्रोत्सवे विवाहे च ग्रहणे स्नानमाचरेत् ॥ **चन्द्रिकायाम्**–ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च । स्नानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ॥ आर्तिः मरणम् । **पराशरः**–पुत्रजन्मनि यज्ञे च मृतौ संक्रमणे रवेः । राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि ॥ यज्ञे अवभृथे । नान्यथेति मध्ययामद्वयाभिप्रायम् । दिवाकरकरैः पूतं दिवा स्नानं प्रशस्यते । प्रदोषपश्चिमौ यामौ दिनवत्स्नानमाचरेत् ॥ इति चन्द्रिकायामुक्तेः ॥

## ❀ रात्रौ जलोद्धरणविधिः ❀

**मरीचिः**–दिवाहृतं तु यत्तोयं गेहे यस्य न विद्यते । प्रज्वाल्याग्निं ततः स्नायान्न रात्रौ जलमुद्धरेत् ॥ अन्यत्र धाम्न इत्येव तत्रस्थे स्नानमिष्यते । यदि गेहे जलं न स्यात्तस्य शुद्धिः कथं भवेत ॥ धाम्नो धाम्नेति मन्त्रेण गृह्णीयादग्निसन्निधौ । रात्रौ ग्रहांशुभिः पूतं दिवा पूतं तु भानुना ॥

## ❀ आतुरस्नानम् ❀

पराशरः–आतुरस्नान उत्पन्ने दशकृत्वो ह्यनातुरः । स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्ध्येत्स आतुरः ॥

## ❀ रजस्वलानैमित्तिकस्नानविधिः ❀

स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला । पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥ सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गा कथंचन । न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत् ॥ नैमित्तिकमत्र श्वचण्डालादिस्पर्शजम् । उशनाः–ज्वराभिभूता या नारी रजसा च परिप्लुता । कथं तस्या भवेच्छौचं शुध्यते केन कर्मणा ॥ चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् । सा सचेलावगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥ दशद्वादशकृत्वो वा ह्याचामेच्च पुनः पुनः । अन्ते च वाससस्त्यागस्ततः शुद्धा भवेत्तु सा ॥ दद्याच्छक्त्या ततो दानं पुण्याहेन विशुद्ध्यति ॥

## ❀ सूतिकामरणे ❀

चन्द्रिकायाम्–सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः । कुम्भे सलिलमादाय पञ्चगव्यं तथैव च ॥ पुण्याभिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः । तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि ॥ पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् । वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम् ॥ अत्र स्मृत्यन्तरे विशेषः–उदक्यामरणे प्राप्ते सूतिकामरणे तथा । अस्पृश्यवचनात्पूर्वं लौकिकैरभिषेचयेत् ॥ उद्धृतैरम्बुभिः शुद्धैः स्नापयित्वा ततः पुनः । सप्तभिः पावमानीभिर्यदन्ति यच्च दूरके ॥ यजुःसामपवित्राभ्यां गोमूत्रेणोदकेन वा । स्नाप्य पवित्रैरब्लिङ्गैर्हिरण्येत्यादिमन्त्रकैः ॥ स्नापयित्वा तु गोमूत्रैः शवधर्मेण दाहयेत् । ब्राह्मणाभ्यनुज्ञानात्, यदन्ति यच्च दूरके इत्यादयः पावमान्यः ऋग्वेदपठिताः । यजुःपवित्रम्, आपो अस्मानिति मन्त्रः । सामपवित्रम्, कयानश्चित्र इति मन्त्रः । यच्चान्यदनयोर्वक्तव्यं तदपि तमेधसारव्याख्याने स्पष्टं निर्दिष्टं द्रष्टव्यम् ॥

## ❀ रजस्वलयोरन्योन्यस्पर्शे प्रायश्चित्तम् ❀

अत्र रजस्वलास्पर्शविषये किंचिदुच्यते । बृहस्पतिः–आर्तवाभिप्लुते नार्यौ संभाषेते मिथो यदि । उपवासं तयोराहुरशुद्धौ शुद्धिकारणम् ॥ मतिपूर्वं ब्राह्मण्योः स्पर्शे संग्रहे–आर्तवाभिप्लुता नारी सार्तवां यदि संस्पृशेत् । आस्नानकालान्नाश्नीयात्कृत्वा चान्द्रायणं चरेत् ॥ अबुद्धिपूर्वे–आर्तवाभिप्लुता नारी स्वार्तवाभिप्लुतां स्पृशेत् । स्नात्वोपवासं कुर्यातां पञ्चगव्येन शुद्ध्यतः ॥ कृच्छ्रं तस्या यया स्पृष्टमन्यस्यास्तु तदर्धकम् । दण्डाद्यन्तर्हिते नोचेदन्यस्या अपि कृच्छ्रकम् ॥ स्नात्वा उद्धृतोदकैरिति शेषः । उपवास अवशिष्टदिन इति शेषः । चतुर्थाहे पञ्चगव्यं प्राश्य शुध्यत इत्यर्थः । दण्डादीत्यादिशब्देन लोष्टपाषाणादि गृह्यते । काश्यपः–उदक्यया तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि । एकरात्रं निराहारं पञ्चगव्येन शुध्यति ॥ इदं अज्ञानात्तृतीयाहे स्पर्शे । अशक्तौ मार्कण्डेयः–उदक्यया सवर्णा च संस्पृष्टा चेद्-

जस्वला । तस्मिन्नेवाहनि स्नात्वा शुद्धिमाप्नोत्यसंशयम् ॥ शूद्रया कृते विप्रास्पर्शे **विष्णुः**–रजस्वला हीनवर्णां सवर्णामुत्तमां यदि । स्पृशेत्स्पृष्ट्वा न भुञ्जीत स्नानादूर्ध्वं तु भोजनम् ॥ उपवासं ततः कुर्याद्ब्राह्मणान्भोजयेत्ततः । स्पर्शे सति उद्धृतैः स्नात्वा उपोष्य चतुर्थाहे स्नानादूर्ध्वं ब्राह्मणान् भोजयित्वा गव्यं प्राश्य भुञ्जीतेत्यर्थः । रजस्वला हीनवर्णां रजस्वलां स्पृष्ट्वा न तावदश्नीयात्, यावच्छुद्धिः स्यात् । प्रतिलोमप्रसूतानामन्यतमस्पर्शे निरीक्षणे भोजने पाने वा, रजस्वलायाः स्नानान्तमनशनम् । तदशक्तौ प्रतिनिधित्वेनैकस्य दिनस्य पञ्च वा त्रीन्वा विप्रान् भोजयेत् । इत्यखण्डादर्शोक्तम् । **विष्णुः**–आस्नानादुपवासं च कृच्छ्रं सान्तपनं ततः । ब्राह्मणान्भोजयेत्पश्चाद्विप्राणामनुशासनात् ॥ सान्तपनप्रतिनिधिः गोद्वयं निष्कद्वयं वा । **आपस्तम्बः**–ब्राह्मणी चैव शूद्रा च स्पृष्ट्वाऽन्योन्यं रजस्वले । कृच्छ्रेण शुध्यते विप्रा शूद्रा दानेन शुध्यति ॥ इदमबुद्धिपूर्वं, कामतस्तु सान्तपनस्योक्तत्वात् । एकभर्तृकयोरकामतः स्पर्शे **अखण्डादर्शे**–रजस्वले यदाऽन्योन्यं संस्पृशेतां मिथो यदि । सवर्णे पञ्चगव्येन ब्रह्मकूर्चेन शुध्यतः ॥ मन्त्रसंयोजितं हुतशिष्टं पञ्चगव्यम्, ब्रह्मकूर्चं ब्रह्मसुवर्चलेति चोच्यते । बुद्धिपूर्वं तु–स्पृष्टे रजस्वलेऽन्योन्यं सगोत्रे चैकभर्तृके । कामतोऽकामतो वापि त्रिरात्रेण विशुध्यतः ॥ त्रिरात्रेण त्रिरात्रोपवासेन ॥

## ❀ रजस्वलायाश्चण्डालादिस्पर्शे प्रायश्चित्तम् ❀

**बृहस्पतिः**–पतितान्त्यश्वपाकैश्च संस्पृष्टा चेद्रजस्वला । तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥ प्रथमेऽह्नि त्रिरात्रं स्याद्द्वितीये ह्यहमेव च । अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमाचरेत् ॥ इदमकामतः । कामतस्तु–रजसा भुञ्जते भार्याऽमोहात्स्पृष्टाः शवादिभिः । त्र्यहे च पर्यपेते तु कृच्छ्रं चान्द्रायणोत्तरम् ॥ अमोहादिति पदच्छेदः । प्रायश्चित्तस्य गुरुत्वात् कृच्छ्रे गौर्निष्कं वा, चान्द्रायणे तु गावस्तिस्रः निष्कत्रयं वा दद्यादिति **जातुकर्णिः**। उच्छिष्टाशुचिसंस्पर्शने वा, श्वसूकरशिवादिस्पर्शने वा उदक्याया एकरात्रमुपवासः । **भृगुः**–रजस्वला यदा नारी ह्यशुद्धान् स्पृशते यदि । अस्नात्वा भोजनं कृत्वा प्राजापत्यं समाचरेत् ॥ सूतकं प्रेतकं स्पृष्ट्वा श्रुत्वा बन्धुपु मरणम् । आस्नानकालं नाश्नीयात्पिबेद्ब्रह्मसुवर्चलाम् ॥ **शातातपः**–उदक्या सूतिका वापि अन्त्यजान्यदि संस्पृशेत् । त्रिरात्रेण विशुद्धिः स्यादिति शातातपोऽब्रवीत् ॥ अन्त्यजाः रजकादयः, प्रायश्चित्तस्य लघुत्वात्, कृच्छ्रं चान्द्रायणोत्तरमिति चण्डालादिस्पर्शे चान्द्रायणविधानात् । तथा **शातातपः**–रजस्वला यदा नारी चण्डालादीन् स्पृशेद्यदि । अतिकृच्छ्रं ततः कुर्यात्कृच्छ्रमेकमथापि वा ॥ कामतोऽतिकृच्छ्रः, अज्ञाने कृच्छ्रः प्राजापत्यः ॥

## ❀ कृच्छ्रकृतिः ❀

प्राजापत्ये तु गामेकां दद्यात्सान्तपने द्वयम् । पराकतप्तचान्द्रातिकृच्छ्रे तिस्रस्तु गाः स्मृताः ॥ गवामभावे निष्कं स्यात्तदर्धं पादमेव वा । पादहीनं न कर्तव्यमिति वेदविदो विदुः ॥ इत्युक्तप्रतिनिधिः सर्वत्र शक्त्यपेक्षया द्रष्टव्यः । अत्र संग्रहे–

आर्तवाभिप्लुता नारी चण्डालादीन्स्पृशेद्यदि । कृच्छ्रमेकं तु मत्या स्यादमत्या तु तदर्धकम् ॥ एवं सूतिकाया अपि द्रष्टव्यम् । उदक्या सूतिका वापीत्यादौ सहोपादानाद्रजस्वलाविषयोक्तं सूतिकायाः समानमेव । रजस्वला यदा नारी यद्यशुद्धांस्तु संस्पृशेत् । अस्नात्वा यदि भुञ्जीत प्राजापत्यं समाचरेत् ॥ यत्तूक्तमखण्डादर्शे—उच्छिष्टेन तु संयुक्ता चण्डालादीन् यदि स्पृशेत् । कृच्छ्रं सान्तपनं कुर्याच्चान्द्रायणमथापि वा ॥ इति तद्विण्मूत्रोत्सर्गे भुक्त्वा वा, अकृतशौचायाश्चण्डालादिस्पर्शे कामतश्चान्द्रायणं अकामतः सान्तपनमिति व्यवस्थितम् । रजस्वला यदा नारी स्पृशेच्चेच्छवसूतके ॥ ऊर्ध्वं त्रिरात्रात्स्नातां तु त्रिरात्रमुपवासयेत् ॥ इदं बुद्धिपूर्वविषयम् । अबुद्धिपूर्वं तु सूतके प्रेतकं स्पृष्ट्वा इत्याद्युक्तं द्रष्टव्यम् ॥

## ❀ आशौचे रजस्संभवे ❀

शावे च सूतके चैव अन्तरा चेदृतुर्भवेत् । नास्नात्वा भोजनं कुर्याद्भुक्त्वा चोपवसेदहः ॥ उद्धृततोयैरस्नात्वा भोजने दिनमुपवासः । बन्धुमृतिं श्रुत्वा तदानीमेव स्नात्वा भुञ्जीतेत्यर्थः ॥

## ❀ रजोमध्ये अघसम्भवे ❀

आर्तवाभिप्लुतायास्तु शावाशौचं भवेद्यदि । सूतकं वा भवेन्मध्ये स्नात्वा भोजनमिष्यते ॥ स्नात्वा, स्नाने नैमित्तिके प्राप्ते इत्युक्तक्रमेणेति शेषः । स क्रमः प्रागेवोक्तः। इदं स्पर्शाभावविषयम् । स्पर्शे तु—आर्तवाभिप्लुता नारी शवं स्पृष्ट्वा विमोहिता । आस्नानकालं नाश्नीयादासीना वाग्यता बहिः ॥ इत्युक्तं द्रष्टव्यम् । इदं चाज्ञानस्पर्शविषयम्, विमोहितेति लिङ्गात् । कामतस्तु " पतितान्त्यश्वपाकैश्च, आस्नानादुपवासश्च कृच्छ्रं सान्तपनं स्मृतम् " इत्यादिभिः प्रागेवोक्तं द्रष्टव्यम् । आशौचे रजःसंभवे, मृतसूतकसंपर्के रजोदृष्टा कथं भवेत् । ब्राह्मणानां करैर्मुक्तं तोयं शिरसि धारयेत् ॥ सर्वतीर्थजलाच्छ्रेष्ठं तोयं विप्रकराच्युतम् । दद्याच्छक्त्या ततो दानं पुण्याहेन विशुध्यति ॥ इत्युक्तं द्रष्टव्यम् । इदं स्नानप्रतिनिधिः ॥

## ❀ भुक्तिमध्ये रजस्वलायाश्चण्डालादिस्पर्शे ❀

किंच, रजस्वला तु भुञ्जाना चण्डालादीन् स्पृशेद्यदि । गोमूत्रयावकाहारा षड्रात्रेण विशुध्यति ॥ बुद्धिपूर्वं कृते स्पर्शे कृच्छ्रं चान्द्रायणं चरेत् । रजस्वला तु भुञ्जाना दिवाकीर्तिं यदि स्पृशेत् ॥ उपवासत्रयं कृत्वा ब्रह्मकूर्चेन शुध्यति । रजस्वला तु संस्पृष्टा श्वजम्बूकखरादिभिः ॥ निराहारा भवेत्तावद्यावत्स्नात्वा भवेच्छुचिः । अप्रायत्ये समुत्पन्ने मलवद्वाससः स्त्रियः ॥ अभिषेके तु भुक्तिः स्यादाशौचं वा दिनत्रयम् ॥

## ❀ रजस्वलास्पर्शे तद्वस्त्रपात्रादिस्पर्शे च ❀

रजस्वलां तु संस्पृष्ट्वाऽस्नात्वा भुञ्जन् उपवासत्रयं चरेत् । तच्छयनं भुक्तिपात्रं वा स्पृष्ट्वा अस्नात्वा भुञ्जन् उपवासेन शुध्येत् । मलमयं तद्वासस्तदन्नं च स्पृष्ट्वा अस्नात्वा भुञ्जन् उपवासत्रयं चरेत् । उदक्यापात्रे अज्ञानाद्भुञ्जन् प्राजापत्यम्, अभ्यासे द्विगुणं चरेत् । उदक्योच्छिष्टं भुञ्जन् कृच्छ्रं सान्तपनं चरेत् । शयनं भुक्तिपात्रं वा स्पृशेन्मो-

हाय्यदि द्विजः ॥ तत्स्पृष्टिन्यायमार्गेण प्रक्षाल्य प्रोक्षयेच्च वा। यत्र भूमौ जलं नास्ति तृणं नोदकयया सह ॥ गोवालव्यजनादर्वाक्स्नानं तत्र विधीयते । आतुरा चेदृतुमती सूतिका वा तथाविधा ॥ स्पृष्ट्वा तामपरा स्नायात् द्वात्रिंशद्वारमेव वा। मन्त्रस्नानं ततः कुर्यात्पुण्याहेन विशुध्यति ॥ इत्यादिस्मृत्यन्तरवचनानि द्रष्टव्यानि ॥

## ❀ उत्सवादौ स्पृष्टिदोषाभावः ❀

अत्र **शातातपः**—ग्रामे तु यत्र संस्पृष्टिर्यात्रायां कलहादिषु। ग्रामसन्दूषणे चैव स्पृष्टिदोषो न विद्यते ॥ **षट्त्रिंशन्मते**—देवयात्राविवाहेषु यज्ञेषु प्रकृतेषु च। उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते ॥ **बृहस्पतिः**—तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे। ग्रामदाहे प्रवासे च स्पृष्टास्पृष्टिर्न विद्यते ॥ एतद्वचनत्रयं अब्राह्मणेन स्पृष्ट इति ज्ञानाभावविषयमिति केचित्। उच्छिष्टाशुचिस्पर्शविषयमित्यपरे। अत्र **आपस्तम्बः**—शक्तिविषये न मुहूर्तमप्यप्रयतः स्यादिति। अत्र **पाद्मे विशेषः**—उत्सवे वासुदेवस्य यः स्नाति स्पर्शशङ्कया। स्वर्गस्थाः पितरस्तस्य पतन्ति नरके क्षणात् ॥ विष्ण्वालयसमीपस्थान् विष्णुसेवार्थमागतान् । चण्डालान् पतितांश्चापि स्पृष्ट्वा न स्नानमाचरेत् ॥ विष्णुसेवार्थमिति विशेषणात् स्वकार्यार्थमागतविष्ण्वालयसमीपस्थचण्डालादिस्पर्शे स्नानं भवत्येव। **श्रीविष्णुमन्दिरे च**—विष्णोरुत्सवसेवार्थमागतास्तत्र ये जनाः। तेऽपि देवसमा ज्ञेयाः प्रतिलोमादयोऽपि च ॥

## ❀ स्नानाङ्गतर्पणविवेकः ❀

**ब्रह्माण्डे**—नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते। तर्पणं त्रिविधस्यापि ह्यङ्गत्वेन प्रकीर्तितम् ॥ तस्य तर्पणस्य क्वचिदपवादमाह **आपस्तम्बः**—अस्पृश्यस्पर्शने वान्ते श्वश्रुपाते क्षुरे भगे। स्नानं नैमित्तिकं ज्ञेयं देवर्षिपितृवर्जितम् ॥ अत्र वान्त इति भुक्त्यनन्तरं वान्तव्यतिरिक्तविषयम्। तथा **मनुः**—वान्तो विरिक्तः स्नात्वा तु घृतं प्राश्य विशुध्यति। आचम्यैव तु भुक्तान्नं स्नानं मैथुनिनः स्मृतम् ॥ इति भुक्त्यनन्तरं वान्तस्याचमनविधानात्। अश्रुपातः आतुरव्यञ्जनम्, अतो दुःखापनोदने कृते तन्निमित्तस्नाने तर्पणं नास्त्येव। तथा **स्मृत्यर्थसारे**—तूष्णीं स्नायादशुद्धस्तु मन्त्रसम्भारवर्जितम्। अस्पृश्यस्पर्शने स्नाने नाघमर्षणतर्पणे ॥ अत्र **शौनकः**—प्रातराचमनं कृत्वा शौचं कृत्वा यथार्थवत्। दन्तशौचं ततः कृत्वा प्रातःस्नानं समाचरेत् ॥ **दक्षः**—अस्नात्वा नाचरेत्कर्म जपहोमादि किंचन। लालास्वेदसमाकीर्णशयनादुत्थितः पुमान् ॥ प्रातः संक्षेपतः स्नानं होमार्थं तु विधीयते। भूम्यन्त्रविधिनिष्पाद्यं मध्याह्ने तत्सविस्तरम् ॥ **कात्यायनः**—अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्मणः। प्रातः संक्षेपतः स्नानं होमकालो विगर्हते ॥ तत्स्नानं **चतुर्विंशतिमतोक्तम्**—स्नानमब्दैवतैर्मन्त्रैर्वारुणैश्च मृदा सह। कुर्याद्व्याहृतिभिर्वाथ यत्किंचिदमृदापि वा ॥ द्रुपदादिति वा स्नायाज्जुम्बकायेति वा पुनः। पुण्यानि च स्मरेत्तीर्थान्युशना मनुरब्रवीत् ॥ अब्दैवता आपोहिष्ठादयः। वारुणा हिरण्यवर्णा इत्यादयः। **विष्णुः**—प्रातःस्नाय्यरुणकरग्रस्तां प्राचीमवलोक्य स्नायादिति ॥

## ❀ स्नानाङ्गतर्पणम् ❀

**यमः**–द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम् । गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥ **विष्णुः**–स्नातश्चार्द्रवासा अम्भस्थ एव देवर्षिपितृतर्पणं कुर्यात् । तत्र **भरद्वाजः**–तर्पणं देवतादिभ्यः स्वस्वतीर्थेन तर्पयेत् । गोशृङ्गमात्रमुद्धृत्य तर्पणे जलमुत्सृजेत् ॥ ऊर्ध्वं तिर्यगधः स्वस्वतीर्थेनैव क्रमाद्द्विजः॥ **कार्ष्णाजिनिः**–श्राद्धे विवाहकाले च पाणिनैकेन दीयते । तर्पणे तूभयेनैव विधिरेष सनातनः ॥ येन तीर्थेन गृह्णीयात्तेन दद्याज्जलाञ्जलिम् । अन्यतीर्थेन गृह्णीयात्तत्तोयं रुधिरं भवेत् ॥ नाभिमात्रे जले स्थित्वा चिन्तयन्नूर्ध्वमानसः । आगच्छन्तु मे पितरो गृह्णन्त्वेतान्पयोञ्जलीन् ॥ पितृणामम्बरस्थानामम्भःस्थो दक्षिणामुखः । त्रींस्त्रीन् जलाञ्जलीन् दद्यादुच्छ्रुतरान् बुधः ॥ पूर्वाशाभिमुखो देवानुत्तराभिमुखस्तृषीन् । पितॄंस्तु दक्षिणास्यस्तु जलमध्ये तु तर्पयेत् ॥ **चन्द्रिकायाम्**-बाहुं पूर्णं तिलैः कृत्वा जलस्थस्तर्पयेत्पितॄन् । स्थलस्थेन न कर्तव्यं पितॄणां तृप्तिमिच्छता ॥ यत्तु **गोभिलोक्तम्**–रोमसंस्थांस्तिलान्कृत्वा यस्तु तर्पयते पितॄन् । पितरस्तर्पितास्तेन रुधिरेण मलेन च ॥ इति तद्दर्शादितर्पणविषयम् । निधायांगुष्ठमूले तु तिलान्वै तर्पयेत्पितॄन् ॥ इति वचनात् । **पराशरः**–देवान्ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः । तर्पयेत्तु पितॄन्भक्त्या सतिलोदकचन्दनैः ॥ **भरद्वाजः**–गन्धपुष्पाक्षततिलैः सार्धं तर्पणमुत्तमम् । पितॄन्साक्षात्तिलैरेव तर्पयेद्द्विजसत्तमः ॥ यत्तु **श्रीविष्णुपुराणे**–शुचिवस्त्रधरः स्नातः परिधायाम्बरं शुचि । तेषामेव हि तीर्थेन कुर्यादुदकतर्पणम् ॥ इति तदशक्तविषयम् । " स्नातश्चार्द्रवासा अम्भःस्थ एव " इति विशेषाभिधानात् । गृहस्नानविषयं वा तद्वचनमिति न विरोधः ॥

## ❀ भानुवारादौ स्नानाङ्गतिलतर्पणविवेकः ❀

**मरीचिः**-सप्तम्यां रविवारे च गृहे जन्मदिने तथा । भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥ **चन्द्रिकायाम्**-भानुवारे भौमवारे नन्दाभृगुमघासु च । मृदा स्नानं पिण्डदानं वर्जयेत्तिलतर्पणम् ॥ **संग्रहे**–अर्के शुक्रे त्रयोदश्यां सप्तम्यां निशि सन्ध्ययोः । तर्पयेत्तिलसंमिश्रं तत्तोयं रुधिरं भवेत् ॥ **पुराणे**–पक्षयोरुभयो राजन् सप्तम्यां निशि सन्ध्ययोः । विद्यापुत्रकलत्रार्थी तिलान्पञ्चसु वर्जयेत् ॥ **भार्गवे** भानुवारे च जन्मर्क्षे च तथा दिने । दूर्वास्नानं न कुर्वीत तिलैः कृष्णैश्च तर्पणम् ॥ अयं निषेधो नित्यस्नानाङ्गतर्पणे, न दर्शादौ । तथा **गार्ग्यः**–उपरागे पितृश्राद्धे पातेऽमायां च संक्रमे ।निषिद्धेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत् ॥ तीर्थे तिथिविशेषे च प्रेतकार्ये तथाब्दिके । निषिद्धेऽपि दिने कुर्यात्तिलैः कृष्णैश्च तर्पणम् ॥ **स्मृत्यन्तरे च**–तिथिवारभयोगनिषेधो य उदाहृतः । ऋषिभिस्तर्पणे नित्ये निमित्ते न तु बाधते ॥ निमित्ते ग्रहणाब्दिकदर्शादिनिमित्ततर्पण इत्यर्थः । अतः शुक्रवारादियोगेऽपि दर्शे तिलैरेव पितृतर्पणं कुर्यान्नाक्षतयुक्तैः, दोषाभावात् । पितॄन् साक्षात्तिलैरेव तर्पयेद्द्विजसत्तमः । इति स्मरणाच्च ॥

## ❀ वस्त्रनिष्पीडननिषेधः ❀

**योगयाज्ञवल्क्यः**—यावद्देवानृषींश्चैव पितॄन् वै यो न तर्पयेत् । तावन्न पीडयेद्वस्त्रं यो न स्नातो भवेन्नरः ॥ निराशाः पितरो यान्ति स्नानवस्त्रे निपीडिते । तस्मान्न पीडयेद्वस्त्रमकृत्वा पितृतर्पणम् ॥ **वृद्धवसिष्ठः**—स्नानार्थमभिगच्छन्तं देवाः पितृगणैः सह । वायुभूतास्तु गच्छन्ति तृषार्ताः सलिलार्थिनः ॥ निराशास्ते निवर्तन्ते वस्त्रनिष्पीडने कृते । अतस्तर्पणानन्तरमेव वस्त्रं निष्पीडयेत् । **पुलस्त्यः**—कृत्वा तर्पणमेवं तु समुत्तीर्य जलाशयात् । पीडयेत्स्नानशाटीं तु शुचौ देशे समन्त्रकम् ॥ अत्र विशेषः स्मृत्यन्तरे दर्शितः—ऊर्जे प्रदक्षिणीकृत्य तृप्यतेति स्थले क्षिपेत् । स्थलं विशोधयेत्पूर्वमपरं च विशोधयेत् ॥ वस्त्रनिष्पीडने चैवं महाशौचे ततः परम् । चतुः संवेष्ट्य वासोन्तं स्नात्वा निष्पीडयेत्स्थले ॥ ये के चास्मत्कुले जाता इति मन्त्रेण मानवः । मन्त्रश्च—ये के चास्मत्कुले जाता अपुत्रा गोत्रजा मृताः । ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥ **वृद्धमनुः**—मानुष्यतर्पणे चैव स्नानवस्त्रनिपीडने । निवीती तु भवेद्विप्रस्तथा मूत्रपुरीषयोः ॥ वस्त्रं त्रिगुणितं यस्तु निष्पीडयति मूढधीः । वृथा स्नानं भवेत्तस्य यच्चैवादशमम्बुनि ॥ अदशं दशाहीनम्, यद्वस्त्रनिष्पीडनं यच्चाम्बुनि निष्पीडनं तेन च स्नानं वृथा भवतीत्यर्थः । **पुराणे**—अपायत्यं निहन्त्येव स्नानेनैकेन मानवः । द्वितीयेन निमज्जेन निर्मलत्वं भवेद् ध्रुवम् ॥ तृतीयेनातितृप्तिः स्यान्निमज्जनफलं त्विदम् ॥

## ❀ संकल्पविधिः ❀

संकल्पे **मनुः**—प्रक्षाल्य पादौ हस्तौ च स्वाचान्तो वाग्यतः शुचिः । तिथिवारादिकं स्मृत्वा सुसंकल्प्य यथाविधि ॥ **भरद्वाजः**—सदर्भहस्तौ जानूर्ध्वौ दक्षिणे दक्षिणोत्तरौ । कृत्वा जानुनि कर्तव्यमेतत्कर्म करोमि यत् ॥ स्वमानसेन स्मरणं तत् सङ्कल्प इति स्मृतः ॥ एवं संकल्प्य विधिना ततः स्नानं समाचरेत् ॥ **अत्रिः**—संकल्पः सूक्तपठनं मार्जनं चाघमर्षणम् । देवर्षितर्पणं चैव स्नानं पञ्चाङ्गमिष्यते ॥

## ❀ स्नानविधिः ❀

**भरद्वाजः**—हिरण्यशृङ्गमित्युक्त्वा जलं समवगाहयेत् । सुमित्रा इत्युदाहृत्य स्वात्मानमभिषेचयेत् ॥ दुर्मित्रा इत्युदाहृत्य मृत्स्थाने जलमुत्सृजेत् । योऽस्मान्द्वेष्टीत्युदाहृत्य तथा तत्र जलं क्षिपेत् ॥ यं च वयं द्विष्म इति पुनस्तत्र जलं क्षिपेत् । एवं त्रिर्मृत्तिकास्थाने जलमञ्जलिनोत्सृजेत् ॥ नमोऽग्नय इति तीर्थं नमस्कुर्यात्ततो बुधः ॥ यदपामित्यमेध्यांशं निरस्येद्दक्षिणे जलम् ॥ अत्याशनादितिद्वाभ्यां त्रिरालोड्य तु पाणिना । चतुरस्रं तीर्थपीठं पाणिनोल्लिख्य वारिषु ॥ आवाहयामि त्वां देवीत्यावाहयेच्च जाह्नवीम् । इमं मे गङ्गे इत्युक्त्वा पुण्यतीर्थानि च स्मरेत् ॥ आदित्याभिमुखो मज्जेदापो अस्मानिति त्र्यृचा । निमज्ज्य चापोहिष्ठाद्यैरब्लिङ्गैर्मार्जयेत्ततः ॥ आपो नारा इति प्रोक्तास्ता एवास्यायनं पुनः । तस्मान्नारायणं देवं स्नानकाले सदा स्मरेत् ॥ ततोऽघमर्षणं कुर्यादृतंचेति त्र्यृचं जपन् । त्रिरष्टौ द्वादश वा वर्तयेदघमर्षणम् ॥ अथ-

मर्षणसूक्तस्य ऋषिरेवाघमर्षणः। तस्य चानुष्टुभं छन्दो भावपृक्तो (वृत्तो) धिदेवता ॥ द्विराचम्याथ विबुधानृषीनथ पितॄन्क्रमात्। स्वस्वतीर्थेन वारिस्थस्तर्पयेद्विधिवद् बुधः॥ सन्तर्पयेच्च तिसृभिर्व्याहृतीभिस्तिलाक्षतैः। केवलैस्तण्डुलैर्देवानृषीन्सतिलतण्डुलैः ॥ पितॄन्साक्षात्तिलैरेव तर्पयेद्द्विजसत्तमः। सतिलैस्तण्डुलैस्तीरे दद्यात्त्रीनुदकाञ्जलीन् ॥ ये केचास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः। ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥ ये केचेत्यम्बराम्भोभिस्तीरे निष्पीडयेत्तिलैः। स्नात्वैवं वाससान्येन शिरोङ्गं परिमार्जयेत् ॥ शिरोवारि शरीराम्बु वस्त्रतोयं यथाक्रमम्। पिबन्ति देवा मुनयः पितरो ब्राह्मणस्य तु ॥ तस्मात्स्नातो नावमृज्यात्स्नानशाट्या न पाणिना। स्नानवस्त्रेण हस्तेन यो द्विजोऽङ्गं प्रमार्जति ॥ वृथा भवति तत्स्नानं पुनः स्नानेन शुध्यति। स्नानं प्लवङ्गमस्येव कृतं विधिविनाकृतम् ॥ वृथा द्विजन्मनस्तस्माद्विधिना स्नानमाचरेत्। शुचि वो हव्यमरुत इत्युक्त्वा शुद्धमम्बरम् ॥ संप्रोक्ष्य देवस्य त्वेति व्याहृत्यादाय भास्करम्। उदुत्यं जातवेदसमित्युक्त्वा दर्शयेत्ततः ॥ आवहन्तीरुदाहृत्य परिधाय द्विराचमेत्। **गोभिलः**—सुराबिन्दुसमं चाम्भः शिखायाः पृष्ठपातितम्। तदेव पुरतोवार्तं गङ्गाम्बुसदृशं भवेत् ॥ **व्यासः**—स्नास्यतो वरुणः कान्तिं जुह्वतोऽग्निः श्रियं हरेत्। भुञ्जतो मृत्युरायुष्यं तस्मान्मौनं चरेत्त्रिषु ॥ **व्याघ्रपादः**—देवांश्चैव ऋषींश्चैव पितॄंश्चैव यो न तर्पयेत्। देवादीनामृणी नित्यं नरकं स व्रजत्यधः ॥ **कार्ष्णाजिनिः**—देवतानामृषीणां च जले दद्याज्जलाञ्जलीन्। स्नाने जपे पितॄणां च नोचेद्दर्भास्तृते स्थले ॥ जलाञ्जलित्रयं दद्याद्ये चान्येसंस्कृता भुवि। असंस्कृतप्रमीतानामेकमेव तटे क्षिपेत् ॥ **यत्त्वापस्तम्बोक्तम्**—शनैरपोऽभ्युपेयादभिघ्नन्नभिमुख आदित्यमुदकमुपस्पृशेदिति, सर्वत्रोदकोपस्पर्शनविधिरिति तत् "यदपां क्रूरमित्यमेध्यांशं दक्षिणतो निरस्येत्" इति स्मृतजलनिरसनपरम्, न पाणिभ्यामभिहननपरम्। अत्र **शंखः**—तुषकेशकरीषभस्मास्थिश्लेष्मनखलोमानि अप्सु न निक्षिपेत्, न पादेन पाणिना वा जलमभिहन्यात्। इति। **आश्वमेधिके**—सर्वदेवमया ह्यापो मन्मयाः पाण्डुनन्दन। तस्मात्तास्तु न हन्तव्या अद्भिः प्रक्षालयेत्स्थलम् ॥ **संग्रहे**—न जलं ताडयेत्पद्भ्यां न नद्यां मलमुत्सृजेत्। न मलं क्षालयेत्तीर्थे ह्यशुद्धो न विशेज्जलम् ॥

## ❀ कपिलस्नानम् ❀

**भरद्वाजः**—प्रातः स्नातुमशक्तश्चेत्कापिलं स्नानमाचरेत्। नाभेरधः प्रविश्याप्सु कटिं प्रक्षाल्य मृज्जलैः ॥ आर्द्रेण कर्पटेनाङ्गमार्जनं कापिलं स्मृतम्। तत्राप्यसामर्थ्ययुतो मन्त्रैः स्नायात्तु पावनैः ॥

## ❀ वस्त्रधारणविधिः ❀

**मात्स्ये**—एवं स्नात्वा ततः पश्चादाचम्य तु विधानतः। उत्थाय वाससी शुक्ले शुष्के तु परिधापयेत् ॥ **व्याघ्रपादः**—ततो वस्त्रद्वयं शुद्धं गृहीत्वा द्विरुपस्पृशेत्। **शाण्डिल्यः**—चतुर्निमज्ज्य विधिवदाचम्यादाय वाससी। खण्डद्वयं शिरोङ्गं च प्रत्येकं परिमार्जयेत् ॥ अन्तराच्छाद्य कौपीनं वाससी परिधापयेत्। उत्तरीयं सदा दध्यात्तद्विना नाचरेत्क्रियाः ॥ **भरद्वाजः**—मार्जयेद्वस्त्रशेषेण नोत्तरीयेण वा शिरः।

स्नातो नाङ्गानि संमृज्यात्स्नानशाट्या न पाणिना ॥ न च निर्धुनुयात्केशान्न तिष्ठन्परिमार्जयेत् । मार्जयेद्वस्त्रखण्डेन नान्यथा मार्जयेत्क्वचित् ॥ यदि प्रमादान्मृज्येत नरकं स व्रजत्यधः। व्यासः—स्नानं कृत्वाऽऽर्द्रवस्त्रं तु ऊर्ध्वमुद्धारयेद्द्विजः । स्नानवस्त्रमधस्ताच्चेत्पुनः स्नानेन शुध्यति ॥ चन्द्रिकायाम्—नोत्तरीयमधः कुर्यान्नोपर्यधस्थ्यमम्बरम् । नान्तर्वासो विना जातु निवसेद्वसनं बुधः ॥ न चानुलिम्पेदस्नात्वा स्नात्वा वासो न निर्धुनेत् । आर्द्र एव तु वासांसि स्नात्वा सेवेत मानवः ॥ उत्तरीयमधोवस्त्रार्थं न कुर्यात् । अधोवस्त्रमपि न जात्युत्तरीयार्थं कुर्यादित्यर्थः । जाबालिः—स्नात्वा निरस्य वस्त्रं तु जंघे शोध्ये मृदम्भसा । अपवित्रीकृते ते तु कौपीनस्रावधारिणा ॥ योगयाज्ञवल्क्यः—स्नात्वैवं वाससी धौते अच्छिन्ने परिधाय वै । प्रक्षाल्योरू मृदाद्भिश्च हस्तौ प्रक्षालयेत्ततः ॥ अच्छिन्ने इति शक्तविषयम् । न जीर्णमलवद्वासा भवेच्च विभवे सति । इत्यादिस्मृतेः ॥

## ❀ वस्त्रनिष्पीडनविधिः ❀

वसिष्ठः—स्नानशाट्यां च दातव्या मृदस्तिस्रो विशुद्धये । उत्तीर्य तां च निष्पीड्य ततः शेषं समाचरेत् ॥ तां स्नानशाटीम्, शेषं सन्ध्यावन्दनादि कर्म । वस्त्रं चतुर्गुणीकृत्य निष्पीडय च जलाद्बहिः । वामप्रकोष्ठे निक्षिप्य द्विराचम्य विशुध्यति ॥ संग्रहे—प्रातःसन्ध्यामुपासीत वस्त्रसंशोधपूर्वकम् । उपास्य मध्यमां सन्ध्यां वस्त्रसंशोधनं परम् ॥ अनिष्पीडय स्नानवस्त्रं सन्ध्याकर्म न चाचरेत् । अन्यथा कुरुते मोहाद्यत्तमप्यकृतं भवेत् ॥ अत्र संवर्तो विशेषमाह—न पीडयेज्जले वस्त्रं पादे न स्थापयेत्तथा । ब्राह्मणद्वितयं चैव वर्जयेद्वस्त्रपीडने ॥ हारीतः—वस्त्रनिष्पीडितं तोयं श्राद्धे तूच्छिष्टभोजनम् । भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत्स्थले ॥ स्नानवस्त्रं ततः पीड्य पुनराचमनं चरेत् । अग्न्यण्डादर्शे—न प्रहृत्य तु पाणिभ्यां शाटीं निष्पीडयेत्स्थले । चतुः संवेष्ट्य वासोऽन्तं तर्पणान्ते समन्त्रकम् ॥ निष्पीडयेत्, धौतं परिधाय स्नानवस्त्रं समन्त्रकम् न पीडयेत्, केवलं पीडयेदित्यर्थः ॥

## ❀ स्नानप्रशंसा ❀

विष्णुः—स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि । पवित्राणां तथा जप्ये दाने च विधिचोदिते ॥ दक्षः—स्नानमूलाः क्रियाः सर्वाः सन्ध्योपासनमेव च । तस्मात्सर्वप्रयत्नेन स्नानं कुर्यात्समाहितः॥प्रातरुत्थाय यो विप्रः प्रातःस्नायी सदा भवेत्। सप्तजन्मकृतं पापं त्रिभिर्वर्षैर्व्यपोहति ॥ शौनकः—प्रातरुत्थाय यो विप्रः प्रातःस्नायी सदा भवेत् । सर्वपापविनिर्मुक्तः परं ब्रह्माधिगच्छति ॥ व्यासदक्षौ—ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु । ब्रह्मलोकमवाप्नोति न चेहाजायते पुनः ॥

## ❀ अथोर्ध्वपुण्ड्रविधिः ❀

इदं श्रुतिस्मृतिशतसिद्धम् । अत्र तावन्महोपनिषदि श्रुतिः धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं सांख्ययोगाधिगम्यम् । ध्यात्वा विमुच्येत नरः समस्तैः संसारपाशैरिह चेति विष्णुम् ॥ कठशाखायाम्—धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं

ध्यायति यो महात्मा । स्वरेण मन्त्रेण सदा हृदिस्थं परात्परं यन्महतो महान्तम् ॥ अथ ऽणि—धृतोर्ध्वपुण्ड्रः कृतचक्रलाञ्छनो नारायणं पूजयति स्म भक्त्या । अर्घ्यादिभिः पौरुषसूक्तमन्त्रैः स प्राप्नुयाद्विष्णुपदं महात्मा ॥ अथ तत्रैव हरेः पादाकृतिमात्मनो हिताय मध्येछिद्रमूर्ध्वपुण्ड्रं यो धारयति स परस्य प्रियो भवति, स पुण्यभाग्भवति, स मुक्तिभाग्भवतीति । एवं सस्थानविशेषविधानात्पुण्ड्रान्तरनिषेधः । तस्य च ध्यानपूजादिकर्माङ्गत्वावगमात्सर्वकर्मसु सर्वैरूर्ध्वपुण्ड्रमेव धार्यम् । वेदविहितत्वादिदमेव वैदिकम् । पुण्ड्रान्तरन्तु तन्त्रसिद्धत्वात्तान्त्रिकम् । अतो वैदिकैर्वैदिकमेव कार्यम् । इदं चोपबृंहणशतसिद्धम् । अत्र ब्रह्मांडपुराणे ब्रह्माणम्प्रति भगवानाहेत्यारभ्य स्मृतिचन्द्रिकायामुदाहृतवचनान्यत्र लिख्यन्ते—ऊर्ध्वपुंड्रप्रमाणानि द्रव्याण्यंगुलिभेदतः । वर्णानि मन्त्रदेशांश्च प्रवक्ष्यामि फलानि च ॥ पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः । सिन्धुतीरेऽथ वल्मीके तुलसीमूलमाश्रिते ॥ मृद एतास्तु संग्राह्या वर्जयेदन्यमृत्तिकाः ॥ श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत् ॥ श्रीकरं पीतमित्याहुः श्वेतं वैष्णवमुच्यते ॥ अंगुष्ठः पुष्टिदः प्रोक्तो मध्यमायुष्करी भवेत् ॥ अनामिकान्नदा नित्यं मुक्तिदा च प्रदेशिनी । एतैरंगुलिभेदैस्तु कारयेन्न नखैः स्पृशेत् ॥ दशांगुलप्रमाणं तु उत्तमोत्तममुच्यते । नवांगुलं मध्यमं स्यादष्टांगुलमतः परम् ॥ सप्तषट्पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं भवेत् । ललाटे केशवं विद्यान्नारायणमथोदरे ॥ माधवं हृदि विन्यस्य गोविन्दं कण्ठकूबरे । उदरे दक्षिणे पार्श्वे विष्णुरित्यभिधीयते ॥ तत्पार्श्वे बाहुमध्ये तु संस्मरेन्मधुसूदनम् । त्रिविक्रमं कर्णदेशे वामकुक्षौ तु वामनम् ॥ श्रीधरं बाहुके वामे हृषीकेशं तु कण्ठके । पृष्ठे तु पद्मनाभं च त्रिके दामोदरं स्मरेत् ॥ द्वादशैतानि नामानि वासुदेवेति मूर्धनि । पूजाकाले च होमे च सायं प्रातः समाहितः ॥ नामान्युच्चार्य विधिना धारयेदूर्ध्वपुण्ड्रकम् । अशुचिर्वाप्यनाचारो मनसा पापमाचरन् ॥ शुचिरेव भवेन्नित्यमूर्ध्वपुंड्रांकितो नरः । ऊर्ध्वपुंड्रधरो मर्त्यो म्रियते यत्र कुत्रचित् ॥ श्वपाकोऽपि विमानस्थो मम लोके महीयते । सत्यव्रतोऽपि—ऊर्ध्वपुण्ड्रो मृदा शुभ्रो ललाटे यस्य दृश्यते । चण्डालोऽपि विशुद्धात्मा पूज्य एव न संशयः ॥ जाह्नवीतीरसम्भूतां मृदं मूर्ध्नां बिभर्ति यः । बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम् ॥ इति । अत्र मृदेकद्रव्यग्रहणविधानाद्द्रव्यान्तरनिषेधः, नहि द्रव्यान्तरस्य पर्वताग्रादिदेशविशेषकथनं श्यामत्वादिकं वा सम्भवति; न च केशवादिस्मरणमस्ति आचाराभावात्, न हि गिरोललाटादिद्वादशस्थानेषु द्रव्यान्तरेण पुण्ड्रान्तरधारणं विप्रैरन्यैर्वा क्रियते, नह्यस्त्यस्ति अदर्शनादविगीतशिष्टाचाराभावाच्च, नचैवं द्रव्यान्तरं पुण्ड्रान्तरं वा चन्द्रिकादिमहाग्रन्थेषु आह्निकविहितं स्मृतं वा, "पूजाकाले च होमे च" इत्यादिपूर्ध्वपुण्ड्रस्यैव कर्माङ्गत्वं सुस्पष्टम् । श्वेतं वैष्णवमिति श्वेतमृद एव सात्त्विकत्वं सुव्यक्तम्, विष्णोरेव शुद्धसत्त्वस्वरूपात् । "अथ यो ह खलु वा अस्य" इति मैत्रायणीयादिषु तथा श्रुतेः । नरस्य पाकादिग्रहणात्सर्वेषामूर्ध्वपुण्ड्राधिकारः सिद्धः । अतो नित्यमेवोर्ध्वपुण्ड्रधारणम्, अधारणे प्रत्यवायस्मृतेः । तथा च वक्ष्यते । क्वचिद्द्रव्यान्तरेण पुंड्रधारणं काम्यमेव । अतः सात्त्विकैर्वैदिकैः सात्त्विकं वैदिकं नित्यमूर्ध्वपुण्ड्रमेव धार्यम्, न तामसं तान्त्रिकं

पुंड्रान्तरम् । तथा **विष्णुधर्मोत्तरे**–सात्विकस्तूत्तमो धर्मो राजसो मध्यमः स्मृतः । तामसस्त्वधमो ज्ञेयस्तस्मात्सात्विकमाचरेत् ॥ अतस्तामसतन्त्रोक्तं त्याज्यमेव । तथा **स्मृतिचन्द्रिकायाम्**–एतेभ्योऽपि यदन्यत्स्यात्किंचिद्धर्माभिधायिकम् । तद्दूरतरतो विद्धि मोहस्तत्राश्रयो मतः ॥ एतेभ्यः धर्मस्थानेभ्यः, मोहः विपरीतज्ञानम् । **मनुश्च**–या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ अत्र तमोनिष्ठा हीति हेतूक्त्या निष्फलत्वस्मरणात् तामसतन्त्रं त्याज्यमिति सिद्धम्, वेदविरुद्धत्वात् । सर्वत्राविरुद्धांशो हि प्रमाणम् । " आम्नायैरविरुद्धाः प्रमाणम् " इति स्मृतेः । वेदे पुनरूर्ध्वपुण्ड्रमेव विहितम्, तामसतन्त्रे तु त्रिपुण्ड्रमेव । अतो विरोधः सुस्पष्टः । अत एव हि **श्रीवराहे**–तामसतन्त्रं स्वयमेव रुद्रो निन्दति। यद्वेदबाह्यं कर्म स्यात्पापुदिश्योपसेव्यते । तद्रौद्रमिति विख्यातं कानिष्ठगतिदं नृणाम् ॥ यद्धीनकर्मसंयुक्तं केवलं तामसं च यत् । तद्दुर्गतिप्रदं नृणामिह लोके परत्र च ॥ इति । तत्खलु ऊर्ध्वपुण्ड्रमेव सर्वत्र विधीयते । अत्र **ब्रह्माण्डे**–मदाराधनकाले च सदा यज्ञादिकर्मणि । अवश्यं धारयेदेतदूर्ध्वपुण्ड्रं द्विजोत्तमः ॥ **मरीचिः**–चतुरंगुलमूर्ध्वमं द्व्यंगुलं विस्तृतं मृदा । द्विजः पुण्ड्रमृजुं सौम्यं सान्तरालं तु धारयेत् ॥ **बौधायनः**–होमपूजादिसमये सायं प्रातः समाहितः । ऊर्ध्वपुण्ड्रधरो मर्त्यो भवेच्छुद्धो न चान्यथा ॥ **अग्निवेश्यगृह्ये**–त्रिपुण्ड्रं ब्राह्मणो विद्वान् लीलयापि न धारयेत् । धारयेत्प्रयतः सम्यगूर्ध्वपुण्ड्रं तु नित्यशः ॥ प्रयोजनार्थं पुण्ड्रान्तरधारणनिषेधपरस्तुशब्दः, नित्यग्रहणादाश्रमान्तरपरिग्रहोऽपि । तथा **ब्रह्माण्डे**–गृहस्थो ब्रह्मचारी च वानप्रस्थस्तथा यतिः । अवश्यं धारयेत्पुण्ड्रं पुण्यमूर्ध्वं सुशोभनम् ॥ ऊर्ध्वपुण्ड्रं मृदा धार्यं विप्रेण ब्रह्मवादिना । उद्धृतासीति मन्त्रेण वैष्णवेन विशेषतः ॥ **नारदीये** चैतन्निरुक्तम्–ऊर्ध्वं गत्वा यस्येच्छा तस्योर्ध्वं पुण्ड्रमुच्यते ॥ ऊर्ध्वं गत्वा तु देवत्वं संप्राप्नोति न संशयः । ऊर्ध्वं नयति यत्पुण्ड्रं प्राणिनः पापकारिणः ॥ तस्याख्या ह्यूर्ध्वपुण्ड्रेति तस्मात्तद्धारयेद्द्विजः । ऊर्ध्वपुण्ड्रं मृदा शुभ्रं यो धत्ते नित्यमात्मवान् ॥ तस्य प्रसादं कुरुते विष्णुर्लोकमनस्ततः। **वृद्धमनुः**–ऊर्ध्वपुण्ड्रं मृदा धार्यं यतीनां च विशेषतः । भस्मचन्दनगन्धादीन् वर्जयेद्यावदायुषम् ॥ तथा **ब्रह्मरात्रे पारमेष्ठ्ये** व्यवस्थोक्ता । चन्दनागुरुभिश्चैव कर्तव्यं क्षत्रियैर्बुधैः ॥ वैश्यैस्तु बिल्वमूलेन शूद्रैर्मृत्या सतोयया । विप्रैः श्वेतमृदा कार्यमूर्ध्वपुण्ड्रं यथाविधि ॥ मृद्व्यतिरिक्तस्य द्रव्यस्यासात्त्विकत्वाद्विप्रैर्न धार्यमित्यर्थः । तथा **ब्रह्मरात्रे**–चन्दनं प्राणिगन्धं च श्रीपत्रमगरुं तथा । राजसं द्रव्यमेवैतद्वदन्ति ब्रह्मवादिनः ॥ पञ्चगव्यं च बिल्वं च श्रीपत्रं भस्मतोयकम् । तामसं द्रव्यमेवैतत्सात्त्विकाः पञ्च मृत्तिकाः॥ चन्दनं प्राणिगन्धं च श्रीपत्रमगरुं तथा । शूद्रेणैव सदा धार्यं भस्मतोयस्मण च ॥ इति । एवमपि सर्ववर्णस्य वैष्णवस्य मृदोर्ध्वपुण्ड्रमेव धार्यम् । तथा **ब्रह्माण्डे भगवानाह**–सर्ववर्णेषु मद्भक्ताः कुर्वीरन्नूर्ध्वपुण्ड्रकम् । ब्राह्मणाश्च विशेषेण जपहोमपरायणाः ॥ अतः सात्त्विकानां सात्त्विकी पञ्चमृत्तिकैव धार्या । तथा **पारमेष्ठ्ये**–श्वेतमृत्तिकया वापि श्यामया पीतयापि वा । ऊर्ध्वपुण्ड्रं द्विजैः कार्यं वैष्णवैश्च विशेषतः ॥ श्वेताभावे

श्यामपीतयोर्विधिः। पञ्चमृत्तिकोक्ता ब्रह्माण्डे—सिन्धुतीरेथ वल्मीके तुलस्याधो जलाशये । पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः ॥ अन्येष्वपि च तीर्थेषु नलिनीमूलकेषु च । स्थानेष्वेतेषु गृह्णीयात्कुर्यान्नान्यत्र मानवः ॥ इति सामान्येन तदलाभे प्रदेशान्तरमुक्त्वा तामाह ब्रह्माण्डे पञ्चमृत्तिकां भगवान्—पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः । सिन्धुतीरेथ वल्मीके तुलसीमूलमाश्रिते ॥ मृद एतास्तु संग्राह्या वर्ज्याश्चान्यत्र मृत्तिका । अत्र पञ्चस्वपि मम क्षेत्र इत्यन्वयः । नारदीये—मृद्द्रव्यं प्रथमं श्रेष्ठं तत्र कारणमुच्यते । मृत्तिकायाः प्रधानत्वं वक्ति तत्र यतः श्रुतिः॥ तस्मात्तु मृत्तिका ग्राह्याः सर्वद्रव्येषु नित्यशः॥ श्रुतिः—उद्धृतासि वराहेणेत्यादिका ॥ तत्रैव—ब्राह्मणानां तु मृत्प्रोक्ता क्षत्रियाणां तु चन्दनम् । वैश्यानां बिल्वमूलं तु शूद्राणां भस्म चोच्यते ॥ तदेवम्—अथ द्रव्यं प्रवक्ष्येहमूर्ध्वपुण्ड्रस्य पद्मज । मृच्चन्दनजलान्याहुस्तथा भस्माग्निहोत्रजम् ॥ इति ब्रह्माण्डादिवचनं व्यवस्थितविषयं मृदलाभविषयं वा, न सर्वविषयम्, नच वा क्रियांगम्, कल्पसूत्रकारादिभिरग्निहोत्रहोमादिविधायकसूत्रेष्वग्निहोत्रभस्मधारणस्याननुशिष्टत्वात् । यत्पुनरथर्वशिरसि अग्निरित्यादिना भस्म विमृज्याङ्गानि संस्पृशेदित्यनेन भस्मग्रहणमुक्तम्, तत्तु व्रतमेतत्पाशुपतमिति तत्र विहितपाशुपतव्रताङ्गमिति प्रकरणे स्पष्टम् । अतः सौत्रामण्यां सुराग्रहणवन्नियतविषयत्वान्नान्यस्य न चान्यत्र वा तत्प्रसङ्गः। अतश्चाग्नेयं भस्मना स्नानमिति च पाशुपतविषयमेव, जटिलेन वारुणस्नानायोगात् । यद्वा शरीरासामर्थ्यादिनिबन्धनेनैव गौणस्नानविधानान्नान्यस्य तत्प्रसक्तिः, नहि कांस्यशुद्धिहेतुत्वेनोक्तस्य भस्मनस्ताम्रादिशुद्धिहेतुत्वमपि। अतः तत्स्पर्शेनान्यस्य स्नानमेव यथाह—शंखः—दीपाग्निं दीपतैलं च भस्म चास्थि रजस्वलाम् । एतानि ब्राह्मणः स्पृष्ट्वा लोकायतिकनास्तिकान् ॥ विकर्मस्थान् द्विजाञ्छूद्रान् सवासा जलमाविशेत् । वर्जयेदित्यनुवृत्तौ याज्ञवल्क्यश्च—केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् । इति । अतएव हि तत्स्पृष्टिन्यायेन तत्स्पर्शे स्नानमुक्तम् विज्ञानेश्वरादौ—शैवान् पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान् । विकर्मस्थान् द्विजाञ्छूद्रान् सवासा जलमाविशेत्॥ अत्रादित्यपुराणे गौतमवचनम्—त्रिपुंड्रधारिणो नित्यं भस्मोद्धूलनतत्पराः । भविष्यथ त्रयीबाह्या मिथ्याज्ञानप्रलापिनः ॥ श्रीवाराहे च—गोवध्याकारणं मह्यं यावत्पश्यति योगवित् । ऋषीणां मायया सर्वमिति संचिन्त्य तत्र वै ॥ शशाप ताञ्जटाभस्ममिथ्याव्रतधरांस्तथा । यदपि शातातपीयम्—मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा । भस्मच्छन्नो भस्मशय्यां शयानो रुद्राध्यायी मुच्यते सर्वपापैः॥ इति । तदपि ब्रह्महादेः प्रायश्चित्तव्रतविशेषविधिपरत्वान्न सार्वत्रिकम्, नहि अवकीर्णिप्रायश्चित्तत्वेन विहितगर्दभालम्भोन्यस्य प्रसज्यते, प्रत्युत गर्दभस्पर्शे प्रायश्चित्तविधानात् । अतः मृदैवोर्ध्वपुंड्रं धार्यमिति सिद्धम्, अधारणे प्रत्यवायस्मरणात् । तथा ब्रह्माण्डे—श्रौतस्मार्तक्रियाः सर्वा ह्यूर्ध्वपुंड्रमकुर्वतः । जायन्ते निष्फला ब्रह्मन् बाधिताश्च भवन्ति ताः ॥ ब्रह्मरात्रे—उपवीतं शिखाबन्धमूर्ध्वपुण्ड्रं विना कृतम् । यागो दानं जपो होमः स्वाध्यायः पितृतर्पणम् ॥ भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् । यच्छरीरं मनुष्याणामूर्ध्वपुण्ड्रं विना भवेत् ॥ तं दृष्ट्वा गगने सूर्यो निरीक्ष्यः साधुभिः सदा । इति । शौनकः—

सर्वे भवन्ति विफला ऊर्ध्वपुण्ड्रविनाकृताः ॥ द्रष्टव्यं नैव तत्कार्यं श्मशानसदृशं स्मृतम् ॥ **देवलः**-ऊर्ध्वपुण्ड्रं विना यस्तु वर्तते पुरुषाधमः। वेदवेदान्तविद्वापि स वै पुरुषतस्करः ॥ **वसिष्ठः**-रुद्रार्चनं त्रिपुण्ड्रं च यत्पुराणेषु गीयते । क्षत्रविट्शूद्रजातीनां नेतरेषां तदुच्यते ॥ ऊर्ध्वपुण्ड्रं विना यस्य शरीरं भवति द्विज । तं दृष्ट्वा गगने सूर्यो निरीक्ष्यः साधुभिः सदा ॥ इति श्मशानतस्करसाम्यश्रवणात्सूर्यदर्शनरूपं प्रायश्चित्तमित्यर्थः । ननु, कांस्यपात्रे हविर्दृष्ट्वा कंठे दृष्ट्वा च मालिकाम् ॥ ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः ॥ इति निषेधात्कथं श्राद्धे तदिति चेत्, मैवं बालिश वादीः, वैश्यविषयत्वात्तस्य । तथा **अग्निवेश्यसूत्रे**-ब्राह्मणस्योर्ध्वपुण्ड्रं स्यात्क्षत्रियस्यार्धचन्द्रकम् । वैश्यस्य वर्तुलाकारं शूद्रस्यैव त्रिपुण्ड्रकम् ॥ **पारमेष्ठ्ये** च-बालेन्दुवत्क्षत्रियाणां वैश्यानां वर्तुलाकृति । त्रिपुण्ड्रं शूद्रजातीनां विधिरेष सनातनः ॥ **दक्षः**-विप्राणामूर्ध्वपुण्ड्रं स्यात्तदेव च महीभृताम् । वैश्यानां तिलकं धार्यं शूद्राणां वै त्रिपुण्ड्रकम् ॥ ललाटे तिलकमिति संग्रहवचनमिव किं त्वया पूर्ववचनं न विचारितं-वर्जयेत्तिलकं फाले श्राद्धकर्मणि सर्वदा । तिर्यग्वाप्यूर्ध्वपुण्ड्रं वा धारयेच्छ्राद्धकर्मणि ॥ अतो वैश्योपि श्राद्धे तिर्यग्वाप्यूर्ध्वपुण्ड्रं वा धारयेन्न तिलकमित्येवार्थः । श्राद्धे तूर्ध्वपुण्ड्रधारणं स्मृत्यर्थसारे स्पष्टमेवोपदिष्टम् । श्वोभूते नित्यकर्माणि नद्यादौ विमले जले । कृत्वा श्राद्धे मृदा शुभ्राण्यूर्ध्वपुण्ड्राणि धारयेत् ॥ इति । अन्यथा "विप्रस्य विफलं भवेत्, भस्मीभवति तत्सर्वं, जायन्ते विफला श्रहान्" इत्यादिभिः प्रत्यवायो दुर्वारः स्यात् । **ब्रह्मरात्रे**-नाचरेद्वामहस्तेन न नखैरपि धारयेत् । आत्मनैवात्ममोक्षेषु नेतरेण कदाचन ॥ **स्कान्दे**-ऊर्ध्वपुण्ड्रं द्विजः कुर्याद्दण्डाकारं सुशोभनम् । मध्ये छिद्रं वैष्णवस्तु नमोन्तैः केशवादिभिः ॥ अनेनैव वचनेन द्विजव्यतिरिक्तविषयं पुण्ड्रान्तरधारणमिति सुव्यक्तम् । **ब्रह्माण्डे** च-निरन्तरालं यः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः । स हि तत्र स्थितं विष्णुं श्रियं चैव व्यपोहति ॥ **स्कान्दे** च-ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा मध्ये छिद्रं प्रयत्नतः। वत्स्यामि स्कन्द तन्मध्ये उमयाहं श्रिया हरिः॥ **मरीचिः**-अच्छिद्रमूर्ध्वपुण्ड्रं तु यः करोति विमूढधीः । स पर्यायेण यातीमान् नरकानेकविंशतिम् ॥ अत्र **ब्रह्मरात्रे विशेषः**-ऋजुं सुपार्श्वमूर्ध्वाग्रं कुर्यादत्यच्छमध्यमम् । पार्श्वयोर्घनविन्यासमूर्ध्वपुण्ड्रमिहोच्यते ॥ अत्यच्छेत्यन्तरालाविरोधारात्रमात्रस्याप्यतिमार्जननिर्बन्धो न कार्य इति तात्पर्यम् । मध्येच्छान् पार्श्वतः स्फीतानूर्ध्वपुण्ड्रांस्तु धारयेत् । इत्यादिष्वप्येवमेव अर्थो ग्राह्यः । **नारदीये**-दानहोमजपाद्याश्च सर्वाः पुण्यक्रियास्तथा । विफलीस्युरिति विप्राणामूर्ध्वपुण्ड्रं विना कृताः ॥ **ब्रह्माण्डे**-शिखोपवीतवद्धार्यमूर्ध्वपुण्ड्रं द्विजन्मनाम् । विनाकृताश्चेद्विफलाः क्रियाः सर्वा यथाक्रमम् ॥ यो न धारयते विप्रो मामकं चिह्नमीदृशम् । तं त्यजामि दुरात्मानं मदीयाज्ञातिलंघिनम् ॥ धृतोर्ध्वपुण्ड्रं विधिवत्तस्य नामानि द्वादश । नमोन्तान्यर्ध्वं कुर्यान्नामान्युक्त्वा यथाक्रमम् ॥ **ब्रह्मरात्रे**-ऊर्ध्वपुण्ड्राणि कुर्वीत केशवाद्यैर्यथाक्रमम् । नासिकामूलमारभ्य ललाटे प्रथमं न्यसेत् ॥ **पारमेश्वरे**-एवं सदैव विप्राश्च क्षत्रिया वैश्यजातयः । मृदैव वा चन्दनेन कल्पितैरूर्ध्वपुण्ड्रकैः ॥ द्वादशी-

कचतुर्भिर्वा भूषिताः स्युः सदा द्विजाः । भ्रुवोरधस्तादारभ्य केशान्तं धारयेद्बुधः ॥ ब्रह्मांडे-सान्तरालमृजुं सौम्यं सुपार्श्वं सुमनोहरम् । यः करोत्यूर्ध्वपुण्ड्रं स ममातीव प्रियो भवेत् ॥ यावज्जीवमिदं पुण्यमूर्ध्वपुण्ड्रं दधाति यः । जन्मन्यनन्तरे मुक्तिं सद्यः प्राप्नोति दुर्लभाम् ॥ यः करोत्यूर्ध्वपुण्ड्रं तु सन्ध्यावन्दनकर्मसु । तस्याहं सुलभो ब्रह्मन्नेकस्मिन्नेव जन्मनि ॥

## ❀ श्रीचूर्णविधिः ❀

**श्रीविष्णुधर्मोत्तरे**-अभिषिक्तं तु यच्चूर्णं विष्णुबिम्बे तु यो नरः । हारिद्रं धारयेन्नित्यं सोश्वमेधफलं लभेत् ॥ **पाद्मे**-वासुदेवाङ्गसंस्पृष्टैर्निशाचूर्णैस्तु पद्मज । यः करोत्यूर्ध्वपुण्ड्रं स विष्णुलोके महीयते ॥

## ❀ तुलसीमणिपद्माक्षमणिमालिकाधारणविधिः ❀

**नारदीये**-कण्ठे तु धारयेद्यस्तु तुलसीं सततं नरः । तत्काष्ठं वापि राजेन्द्र तस्य नास्त्युपपातकम् ॥ **पुराणे**-शान्तये पुष्टये मुक्त्यै तुलसीकाष्ठजो मणिः । सर्वसिद्धिप्रदः पाद्मो मणिर्धार्यः श्रियै बुधैः ॥ **श्रीविष्णुमन्दिरे**-धारयन्ति पवित्राणि ये भक्ताः श्रद्धयान्विताः । तेपि निर्धूतपाप्मानो मोदन्ते दिवि देववत् ॥ पद्माक्षमालां ग्रीवायां लम्भयेद्वैष्णवः शुचिः । अकृत्यमपि कुर्वाणो भुञ्जानो वा यतस्ततः ॥ निर्धूय सर्वपापानि देहान्तरकृतान्यपि । श्रीमत्पवित्रधरणात्तानि नश्यंति तत्क्षणात् ॥

## ❀ अथ संध्योपासनविधिः ❀

**योगयाज्ञवल्क्यः**-यावन्तोस्यां पृथिव्यां तु विकर्मस्था द्विजातयः । तेषां हि पावनार्थाय संध्या सृष्टा स्वयंभुवा ॥ **आश्वमेधिके**-तेषां हि पावनार्थाय नित्यमेव युधिष्ठिर । उभे सन्ध्येधितिष्ठामि ह्यस्कन्नं तद्व्रतं मम ॥ **मनुः**-नोपतिष्ठेत यः पूर्वामुपास्ते न च पश्चिमाम् । स शूद्रवद्बहिष्कार्यः सर्वस्मात्साधुकर्मणः ॥ **पितामहः**-अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम् । संध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः ॥ सायं प्रातः सदा संध्यां ये विप्रा नह्युपासते । कामं तान्धार्मिको राजा शूद्रकर्मसु योजयेत् ॥ स हन्ति सूर्यं संध्यायां नोपास्तिं कुरुते तु यः । ये हिंसन्ति सदा सूर्यं मोक्षद्वारमनुत्तमम् ॥ कथं मोक्षस्य संप्राप्तिर्भवेत्तेषां द्विजन्मनाम् । **दक्षः**-संध्याहीनोशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलमश्नुते ॥ **स्मृत्यर्थसारे**-कामान्मोहात्तथा लोभात्संध्यां नातिक्रमेद्द्विजः । संध्यातिक्रमणाद्विप्रो ब्राह्मण्यात्पतते यतः ॥ **भरद्वाजः**-ऋग्यजुःसामवेदानां रूपत्रयमिदं परम । तस्माद्द्विजः सदा संध्यात्रितयोपास्तिमाचरेत् ॥ **योगयाज्ञवल्क्यः**-ब्रह्मणोपास्यते संध्या विष्णुना शंकरेण च । कस्मान्नोपासयेद्देवीं श्रेयस्कामो द्विजोत्तमः ॥ **पितामहः**-नाक्षत्रं ज्योतिरारभ्य सूर्यस्योदयदर्शनात् । प्रातःसंध्येति तां प्राहुः श्रुतयो मुनिसत्तमाः ॥ **छन्दोगश्रुतौ**-तस्माद्ब्राह्मणोहोरात्रसंयोगे संध्यामुपास्ते सज्योतिष्या ज्योतिषो दर्शनात् इति । **रहस्याम्नायब्राह्मणे**-आसूर्योदयात्पूर्वोताराशामुग्र-रत्वपरोताराशामुग्र आनक्षत्रोदयात् इति । **दक्षः**-अहोरात्रस्य यः संधिः सूर्यनक्ष-

प्रवर्जितः । सा तु संध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः ॥ **भरद्वाजः**–प्रारभ्या-तारकाज्योतिराभानूदयदर्शनात् । प्रातःसंध्येत्यभिहिता स्वाध्यायैश्च महर्षिभिः ॥ सूर्यस्यास्तमयात्पूर्वमारभ्यातारकोदयात् । सायंसंध्येति सा मध्यमेतयोर्मध्यमा मता ॥ **पितामहः**–प्रातःसंध्यां सनक्षत्रामुपासीत यथाविधि । सादित्यां पश्चिमां संध्याम-र्धास्तमितभास्कराम् ॥ **स्मृत्यन्तरे**–उत्तमा तु सनक्षत्रा मध्यमा लुप्ततारका । अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता ॥ एतेषां व्यवस्थामाह **दक्षः**–रात्र्यन्तयामनाडी द्वे संध्यादिः काल उच्यते । दर्शनाद्रविरेखायास्तदन्तो मुनिभिः स्मृतः॥ रविरेखाया दर्शनादुपलक्षितः कालः संध्यान्त इत्यर्थः । **श्रीविष्णुपुराणे**–संध्या मुहूर्तमात्रा वै ह्रासवृद्धी न कारणम् । इति । तदेवम्, भानूदयात् घटिकाद्वयात्मकः संध्याकाल इति श्रुतिस्मृतिशतसिद्धत्वात् ॥ तदुक्त या एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्र्या अभिमन्त्रिताप ऊर्ध्वं विक्षिपन्ति । इति । विशिष्टविधिपरे श्रुतिवाक्ये संध्यायामेवार्घ्यदानश्रुतेः । " ऊर्ध्वं त्रिसंध्ययोः क्षिपेत् " इति स्मृतेश्च, उदयात्प्रा-गेव अर्घ्यं देयमिति सिद्धम् । अत एव ह्युदयात्परमर्घ्यदायिनं शिष्टा गर्हन्ते । सतश्च–द्विपदी ह्युदयादर्वाक् महरार्धोदयोपरि । संध्याकालः स विज्ञेयो ह्यन्यथा लङ्घनं स्मृतम् ॥ न प्रातर्न प्रदोषाच्च संध्याकालोऽतिपद्यते । मुख्यकल्पोऽनुकल्पश्च सर्वस्मिन् कर्मणि स्मृतः ॥ इत्यादिकं बहुश्रुतिस्मृतिविरुद्धत्वादनादरणीयम् । यद्वा तद्गौणकालकथनं सहस्रात्त्र्यभिप्रायेणोपस्थानकालपरम्, नार्घ्यदानकालपरम् । एवं च सति–उद्यन्तमस्तयन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्र-मश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति । इति । अथोपतिष्ठेदादित्यमुदयन्तं दिवाकरम् । इत्यादिश्रुतिस्मृतिभ्य उदयोपस्थानमेव मुख्यम्, उदयात्परं तु गौण-मिति विवेकः । किंच, आपत्सु गौणाभ्यनुज्ञानेपि राष्ट्रक्षोभजलालाभाशक्त्यो ह्यत्रापत्, तदभावे सर्वदा तदनुष्ठाने संध्यातिक्रमदोषो दुर्वार इत्यलम् । अत्र **श्रुतिः**–ब्रह्म-वादिनो वदन्ति, कस्माद्ब्राह्मणोहोरात्रे संयोगे संध्यामुपास्ते, कस्माद्ब्राह्मणः सायमासी-नः संध्यामुपास्ते, कस्मात्प्रातस्तिष्ठन् का संध्या कश्च संध्याकालः, किंच संध्यायाः संध्यात्वम् देवाश्चासुराश्चास्पर्धन्त, तेऽसुरा आदित्यमभिद्रवन् स आदित्यो बिभेतारय हृदयं रूपेणातिष्ठत्स प्रजापतिमुपाधावत्तस्य प्रजापतिरेतद्भेषजमपश्यद्यदृतं च सत्यं च ब्रह्म चोंकारं च, त्रिपदां गायत्रीं ब्रह्मणो मुखमपश्यत्, तस्माद्ब्राह्मणोहोरात्रसंयोगे संध्यामुपास्ते, सज्योतिषो ज्योतिषो दर्शनात्सोऽस्य संध्याकालः सा संध्या तत्संध्या-याः संध्यात्वं यत्साममासीनः संध्यामुपास्ते तया वीरस्थानं जयति, यत् प्रातस्तिष्ठन् तया स्वर्गलोकं जयति, अथ यदपः प्रायुंक्ते ता विप्रुषो वज्रीभवन्ति ता विप्रुषो वज्री-भूत्वा असुरानपाघ्नन्ति । इति । अत्र **योगयाज्ञवल्क्यः**–पूर्वा संध्या तु गायत्री सावित्री मध्यमा स्मृता । या भवेत्पश्चिमा संध्या सा विज्ञेया सरस्वती ॥ **व्यासः**–गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने । सरस्वती च सायाह्ने सैव संध्यात्रये स्मृता॥ प्रतिग्रहादन्नदोषात्पातकादुपपातकात् । गायत्री प्रोच्यते तस्माद्गायन्तं त्रायते यतः ॥ सवितृद्योतनाच्चैव सावित्री परिकीर्तिता । जगतः प्रसवित्री सा वाग्रूपत्वात्स-

रस्वती ॥ उपारते संधिवेलायां निशाया दिवसस्य च । तामेव संध्यां तस्माच्च प्रवदन्ति मनीषिणः ॥ **योगयाज्ञवल्क्यः**–प्रातःकाले तु गायत्री सायंकाले सरस्वती । मध्यंदिने तु सावित्री उपास्या नामभेदतः ॥ गायत्री तु भवेद्रक्ता सावित्री शुक्लविग्रहा । सरस्वती कृष्णरूपा उपास्या वर्णभेदतः ॥ गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी । सरस्वती विष्णुरूपा उपास्या रूपभेदतः ॥ उदये ब्रह्मरूपं तु मध्याह्ने तु महेश्वरम् । सायाह्ने विष्णुरूपं तु त्रिरूपं चैवमुच्यते ॥ न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह । साहमस्मीत्युपासीत विधिना येन केन चित् ॥ गायत्रीं चिन्तयेद्यस्तु हृत्पद्मे समुपस्थिताम् । सर्वाधर्मविनिर्मुक्तः स याति परमां गतिम् ॥ इति ॥

## ❀ अथ प्रातःसंध्याकर्मविधिः ❀

अत्र दक्षः–ब्राह्मे मुहूर्ते उत्थाय कृतशौचविधिर्द्विजः । प्रातःसंध्यामुपासीत दन्तधावनपूर्वकम् ॥ भरद्वाजः–उत्थाय पूर्वं संध्यायाः कृत्वा चावश्यकादिकम् । स्नानान्तं विधिवत्सर्वं संध्याकर्म समाचरेत् ॥ सेवेत पूर्वं प्राक्संध्यां मध्यसंध्यां ततः परम् । तत्पश्चात्पाश्चिमां संध्यां यमेन सततं द्विजः ॥ यमेन नियमेन । ततः संकल्पयेत्प्रातः संध्योपास्तिं करोम्यहम् । इति स्वचेतःस्मरणं यत्तत्संकल्प उच्यते ॥ **पद्मपादे**–पादौ हस्तौ च संक्षाल्याचम्य बद्धशिखः शुचिः । प्राणानायम्य संकल्प्य संध्योपास्तिं समाचरेत् ॥ प्रोक्ष्याब्लिङ्गैर्व्याहृतिभिः परिषिच्य समन्त्रकम् । पीत्वाचम्य दधिक्राद्यैः प्रोक्ष्याद्भिः परिषिच्य च ॥ ॐ पूर्वया च व्याहृत्या गायत्र्या चाभिमन्त्रितम् । रवेरभिमुखस्तिष्ठन्नुत्क्षिपेत्सलिलाञ्जलिम् ॥ परिषिच्य व्याहृतिभिः परिक्रम्य प्रदक्षिणम् । तर्पयेदुपविश्याद्भिः केशवादीन् द्विजोत्तमः ॥ **स्मृत्यर्थसारे**–आपोहिष्ठेत्यृचां सम्यगुल्लेख्यं नतु वेत्ति यः । न तस्य विद्यते संध्या यथा शूद्रस्तथैव सः ॥ आपो हिष्ठेत्यृचामेकमुल्लेख्यं त्रिषु कारयेत । चतुर्थे कारयेद्यस्तु ब्रह्महत्यां स विन्दति ॥ उल्लेख्यं मार्जनम् । तच्चतुर्विधम् । मूर्ध्नि ब्रह्ममुखं स्पृष्ट्वा बिन्दुना देवतीर्थतः । चतुर्थं मार्जने यस्स्याच्चदुल्लेख्यं प्रचक्षते ॥ ब्रह्ममुखमाह **मनुः**–ॐकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः । त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम् ॥ अनेन प्रथमं पाणिना स्पृष्ट्वाथ मार्जनं कार्यम् । तथा **नारायणः**–स्पृष्ट्वा चाभिद्रुता तोयं मूर्ध्नि ब्रह्ममुखेन च । आपो हिष्ठेति मन्त्रेण दर्भैर्मार्जनमाचरेत् ॥ अत्र **हारीतः**–मार्जनार्चनबलिकर्महोमभोजनदानानि देवतीर्थेन कुर्यात् । इति । चतुर्विधमार्जनमाह **कात्यायनः**–शिरसि मार्जनं कुर्यात्सकुशोदकबिन्दुभिः । प्रणवो भूर्भुवः स्वश्च गायत्री च तृतीयका ॥ अब्दैवत्यत्र्यृचं चैव चतुर्थमिति मार्जनम् । प्रणवेन प्रथमम्, भूर्भुवः स्वरिति द्वितीयम्, गायत्र्या च तृतीयम्, आपो हिष्ठेति त्र्यृचेन चतुर्थमिति मार्जनक्रमः । त्र्यृचे विशेषमाह **शौनकः**–नवप्रणवयुक्तेन आपो हिष्ठेत्र्यृचेन च । संवत्सरकृतं पापं मार्जनान्ते विनश्यति ॥ **व्यासः**–आपो हिष्ठत्र्यृचे कुर्यान्मार्जनं तु कुशोदकैः । प्रतिप्रणवसंयुक्तं क्षिपेद्वारि पदे पदे ॥ विप्रुषोऽष्टौ क्षिपेदूर्ध्वमधो यस्य क्षयाय च । अधो अधःशरीरमित्यर्थः । रजस्तमोमोहजातान् जाग्रत्स्वप्नसुषुप्तिजान् । वाङ्मनःकायजान् दोषान् नवि-

तात्रवभिर्देहेत् ॥ नवभिरिति नियमात् त्र्यृचत्रिके प्रत्यृचं मार्जनं कार्यम् न चतुर्थम् । चतुर्थं कारयेद्यस्तु ब्रह्महत्यां स विन्दति । इति प्रत्यवायस्मृतेः । सत', आपो हिष्ठेत्यृचामेकमुल्लेख्यं त्रिपु कारयेत् । इति प्रतिपादमेकमेव मार्जनं कार्यमित्युक्तं भवति । **ब्रह्मा**—ऋगन्ते मार्जनं कुर्यात्पादान्ते वा समाहितः । त्र्यृचस्यान्तेथ वा कुर्याच्छिष्टानां मतमीदृशम् ॥ पादान्तमार्जनमेव शिष्टाचारः बहुप्रमाणानुगुण्यात् । तथा **देवलः**—अष्टाक्षरैर्नवपदैः पादान्ते मार्जनं भवेत् । तन्मध्ये मार्जनं कुर्याद्ब्राह्मं तेजो विनश्यति ॥ तथा **योगयाज्ञवल्क्यः**—आचमनं स्वकीयमार्गेण कृत्वा ऋषिच्छन्दोदेवतास्मरणपूर्वकमापो हिष्ठेत्त्यृचस्यादितः सप्तभिः पादैरूर्ध्वं सप्त विप्रुष उत्क्षिप्याष्टमेनैकां विप्रुषमधःशरीरे निक्षिप्य नवमेनैकामूर्ध्वमुत्क्षिपेत् ॥ इति । अधःशरीरमित्यनेन, विप्रुषोष्टौ क्षिपेदूर्ध्वमधो यस्य क्षयाय च । इत्यत्राधःशब्दो व्याख्यातः । **योगयाज्ञवल्क्यस्तु** मार्जने मन्त्रान्तराण्यप्याह—ॐकारो व्याहृतीः सप्त गायत्री शिरसा तथा । आपो हिष्ठेत्यृचं तिस्रो द्रुपदा चाघमर्षणम् ॥ उदित्यं चित्रं तच्चक्षुस्तेजोसीति यथाक्रमम् । गायत्र्याश्च तुरीयं च संध्यामेतैः समाचरेत् ॥ **बौधायनश्च**—अथातः संध्योपासनविधिं व्याख्यास्यामस्तीर्थं गत्वा प्रयतोभिषिक्तः प्रक्षालितपाणिपादोप आचम्य, अग्निश्च मा मन्युश्चेति सायमपः पीत्वा, सूर्यश्च मा मन्युश्चेति प्रातः सपवित्रेण पाणिना सुरभिमत्याब्लिङ्गैर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरन्यैश्च पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवति । इति । सुरभिमती दधिक्राव्ण इत्यृक् । अब्लिङ्गा आपो हिष्ठेत्याद्यास्तिस्रः । अत्र मंत्राचमनात् प्रागपि अब्लिङ्गैर्मार्जनं कार्यम्, बहुस्मृतिसिद्धत्वादविगीतशिष्टाचाराच्च । त्र्यृचेनैव मार्जनं कार्यम्, तावतैव शास्त्रसिद्धेः । तथा **भरद्वाजः**—आपो हिष्ठादिभिर्मन्त्रैस्त्रिभिः संमार्जयेच्छिरः । सिन्धुद्वीप· ऋषिश्छन्दो गायत्र्यापो हि देवताः ॥ मार्जने विनियोगस्तु सूर्यश्चेति जलं पिबेत् । अस्यानुवाकस्याग्निऋषिश्छन्दो गायत्रमंशुमान् ॥ देवता विनियोगोपां पानेथ समुपस्पृशेत् । आत्मानं प्रोक्षयेत पश्चाद्दधिक्राव्ण इति त्र्यृचा ॥ आपो हिष्ठादितिसृभिर्ऋग्भिश्च सकुशैर्जलैः । दधिक्राव्ण इत्यस्य वामदेव ऋषिः स्मृतः ॥ छन्दोनुष्टुप् विश्वेदेवा देवताः प्रोक्षणे स्मृताः । ततोपसव्यं व्याहृत्या परिषिच्य समस्तया ॥ पश्चादुभाभ्यां हस्ताभ्यामादायापः समाहितः । अब्देवतास्तु सप्तर्चो गायत्री द्वे अनुष्टुभौ ॥ **पितामहः**—आपो हिष्ठादिमन्त्रस्य सिन्धुद्वीप ऋषिः स्मृतः । छन्दो गायत्रमापस्तु देवताः प्रोक्षणे च सः ॥ एवं ब्रह्म योगयाज्ञवल्क्येपि तामाह, नारायणशौनकव्यासभृगुयाज्ञवल्क्यस्मृत्यर्थसारादिवचनेषु त्र्यृचेनैव मार्जनविधानात्, तेनैव संध्यासु मार्जनमिति निश्चीयते । **स्मृत्यर्थसारे**—भूमिष्ठमुदकं स्पृष्ट्वा प्रसव्येन करेण च । मार्जनान्याचरेद्विद्वान् संध्याकर्मसु सर्वदा ॥ यत्तु **हारीतवचनम्**—ब्राह्मं स्नानं तथा दानं देवर्षिपितृतर्पणम् । जलमध्ये तु कुर्वाणः शुष्कवस्त्रोतिदुष्यति॥ इति तज्जान्वधोजलविषयम्, जानुमात्रजले दोषाभावात् । तथा **चन्द्रिकायाम्**—जानुभ्यामुपरिष्टात्तु शुष्कवासाः स्थितो जले । संध्यामाचमनं कुर्वन् शुद्धः स्यादशु-

चिरत्वधः ॥ जानुमात्रे तदूर्ध्वं वा जले तिष्ठन् शुचिर्भवेत् । इति । संग्रहे–ब्राह्मस्नाने च सूर्यार्घ्यं जलोत्सर्जनतर्पणे । जलेऽग्निहोमे शुष्केण जले कुर्वन्न दुष्यति ॥ ततोऽशुचिस्थलशङ्कायामसौकर्ये च जानुदघ्ने जले स्थित्वा संध्याकर्मानुष्ठानमविरुद्धम् । यत्त्विदमापस्तम्बवचनम्–वामहस्ते जलं कृत्वा ये तु संध्यामुपासते । सा संध्या वृषली ज्ञेया ह्यसुरास्तेन तर्पिताः ॥ इति तन्मृन्मयादिपात्रविषयम् । नद्यां तीर्थे ह्रदे वापि भाजने कांस्यसंभवे । औदुम्बरेऽथ सौवर्णे राजते दारुसंभवे ॥ कृत्वा तु वामहस्ते वा संध्योपास्तिं समाचरेत् । इति ब्रह्मस्मरणात् । ब्रह्मा–धाराच्युतेन तोयेन संध्योपास्तिर्विगर्हिता । पितरो न प्रशंसन्ति न प्रशंसन्ति देवताः ॥ अतो मार्जनजलबिन्दुर्यथा क्षितितले न च्युतो भवति, तथा शिरस्येव मार्जनं यत्नतः कुर्यादिति भावः। तदपि ब्रह्मैवाह–मन्त्रपूर्वं जलं यस्मादापो हिष्ठादिमन्त्रितम् । पतत्यशुचिदेशेषु तस्मात्तत्परिवर्जयेत् ॥ भरद्वाजः–ततः प्रदक्षिणीकृत्य ह्यद्भिः संप्रोक्षिते शुचौ । उपविश्य द्विराचम्य ग्रहादींस्तर्पयेत्ततः ॥ ब्रह्मा–कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् । आदित्याभिमुखस्तिष्ठन्नूर्ध्वं त्रिः संध्ययोः क्षिपेत् ॥ हारीतः–तिष्ठन् पादौ समौ कृत्वा जलेनाञ्जलिपूरणम् । गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥ संग्रहे–गोशृङ्गमात्रमुद्धृत्य रविं दृष्ट्वा जलाञ्जलिम् । द्वौ पादौ तु समौ कृत्वा पार्ष्णी उद्धृत्य विक्षिपेत् ॥ यमः–एषु वचनेषु सर्वत्र तिष्ठन्नेवार्घ्यं दद्यादिति नियमात्संध्यासु तिष्ठन्नेवार्घ्यं दद्यात्, न प्रह्वो नासीनो वा, वचनाभावात्, बहुवचनविरोधात्, शिष्टाचाराभावाच्च । पितामहः–पाणिना जलमादाय सकृत्कुर्यात्प्रदक्षिणम् । आदित्यादिग्रहांस्तत्र तर्पयेत्सुसमाहितः ॥ पाद्मे–परिषेकं ततः कुर्यात्प्रादक्षिण्यं समाचरेत् । संतर्प्य केशवादींस्तानाचामं तु समाचरेत् ॥ कौर्मे–प्रातर्मन्त्रवदाचम्य प्रोक्ष्य सूर्याय चाञ्जलिम् । दत्त्वा प्रदक्षिणं कृत्वा द्विराचम्य यथाविधि ॥ प्राक्कूलेषु ततः स्थित्वा दर्भेषु सुसमाहितः । प्राणायामत्रयं कृत्वा ध्यायेत्संध्यामिति श्रुतिः॥ अत्र ध्यानम्–मन्त्रार्थचिन्तनाभ्यासो मानसो जप उच्यते। इति स्मरणान्मानसजप एव । ऋषिच्छन्दोदेवताश्च ध्यात्वा मन्त्रार्थमेव च । अनुष्ठानं ततः कुर्यादिति मन्त्रविदां मतम् ॥ देवीमावाह्य गायत्रीं ततो ध्यायेद्द्विजोत्तमः । इति बृहस्पतिभरद्वाजाद्युक्तध्यानं वा । ध्यानप्रकारश्चोपरिष्टात्स्पष्टं वक्ष्यते । दक्षः–अद्भिः संप्रोक्षिते तीरे शुचौ दर्भसमायुते । वाग्यतः प्राङ्मुखस्तिष्ठन् संध्योपासनमारभेत् ॥ सायमस्तमिते संध्यामर्के चानुदिते पराम् । प्रातःसंध्यामिति प्राहुः स्वरूपं संध्ययोरिदम् ॥ दर्भसमायुतेति प्राक्कूलेष्विति विशेषणात् प्रागग्रदर्भयुक्त इत्यर्थः । संध्योपासनं गायत्र्या जपो ध्यानं वा । भरद्वाजः–ततः प्रदक्षिणीकृत्य ह्यद्भिः संप्रोक्षिते शुचौ । देशे च दर्भसंक्लृप्ते वाग्यतः प्राङ्मुखः स्थितः ॥ दर्भान् धारयमाणः सन्नात्मनो ध्यानमारभेत् । अत्र आत्मा विष्णुः, आत्मा वै विष्णुरेव चेति स्मरणात् । तथा जाबालियोगयाज्ञवल्क्यौ–संध्ययोरुभयोः काले ध्यात्वा विष्णुं सनातनम् । निर्मलात्मार्कसंदर्शी गायत्रीमारभेद्बुधः ॥ अतोऽत्रात्मा परमात्मा विष्णुरेव । एवमेव ध्यानाभिप्रायेणैवापस्तम्बेन–संध्ययोश्च बहिर्ग्रामादासनं वाग्यतश्च । इति वाग्यमनं विधीयते, न मौनमात्रम्,

गायत्रीजपपरवचननिचयवैयर्थ्यापत्तेः । अतस्तस्मान्मौनं चरेत् । त्रिष्विस्यादिवल्लौकिकवाक्यनिवृत्तिपरमेव तत्, अन्यथा गायत्रीजपस्नानादिमन्त्राणामपि लोकप्रसक्तेः । **यमः**—संध्यामुपासते ये तु सततं संशितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥ **गोभिलः**—संध्या येन न विज्ञाता संध्या नैव ह्युपासिता । जीवमानो भवेच्छूद्रो मृत एवाभिधीयते ॥ **कौर्मे**—योऽन्यत्र कुरुते यत्नं धर्मकार्ये द्विजोत्तमः । विहाय संध्याप्रणतिं स याति नरकायुतम् ॥ **विष्णुपुराणे**—उपतिष्ठन्ति वै संध्यां ये न पूर्वां न पश्चिमाम् । व्रजन्ति ते दुरात्मानस्तामिस्रं नरकं नृप ॥ तस्मान्नोल्लङ्घनं कार्यं संध्यावन्दनकर्मणः । एतदनार्तविषयम् । तथा **अत्रिः**—नोपतिष्ठन्ति ये संध्यां स्वस्थावस्थास्वपि द्विजाः । हिंसन्ति ते सदा पापा भगवन्तं दिवाकरम् ॥ **योगयाज्ञवल्क्यः**—अनार्तश्चोत्सृजेद्यस्तु स विप्रः शूद्रसंमतः । प्रायश्चीत्ती भवेच्चैव लोके भवति निन्दितः ॥ **मनुः**—उदितेऽभ्युदितः सूर्ये शयानः कामकारतः । अस्ते चैवाभिनिर्मुक्तो जपन्नुपवसेद्दिनम् ॥ **विष्णुः**—सूर्याभ्युदितनिर्मुक्तः सचेलं स्नानमाचरन् । सावित्र्यष्टशतं जप्त्वा शुचिर्भवति नान्यथा ॥ इदं कामकारविषयम् । **संवर्तः**—संध्यामापदि नोपास्ते नाग्निकार्यं यथाविधि । सावित्र्यष्टसहस्रं तु जपेत्स्नात्वा विशुद्ध्यति ॥ **देवलः**—संध्यातिक्रान्ते कृच्छ्रं कुर्यात् । इदमनापद्विषयम् । **श्रीविष्णुपुराणे**—सर्वकालमुपस्थानं संध्ययोः पार्थिवेष्यते । अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥ **संग्रहे**—राष्ट्रक्षोभे नृपाक्षिप्ते भयार्ते शावसूतके । ( रोगार्ते इति केचित्पठन्ति ) सन्ध्यावन्दनविच्छित्तिर्न दोषाय कदाचन ॥ अनापदि **मरीचिः**—सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते । इदं सन्ध्यात्यागविधानं वाचकाभिप्रायम् । तथा **पुलस्त्यः**—सूतके मृतके चैव सन्ध्याकर्म न संत्यजेत् । मनसोच्चारयेन्मन्त्रान्प्राणायाममृते द्विजः ॥ सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत्। न त्यजेत्सूतके चापि त्यजन् गच्छेदधो द्विजः॥ एतदादिवचनार्थसमर्थनं अस्मदुक्ताशौचशतकव्याख्याने स्पष्टं द्रष्टव्यम्। अत्र विशेषमाह **पैठीनसिः**—सूतके सावित्र्याञ्जलिं प्रक्षिप्य सूर्यं ध्यायन् नमस्कुर्यात् । इति। **व्यासोऽपि**—प्रक्षिपेत्सूतकेऽप्यर्घ्यं गायत्रीं [illegible] समुच्चरन् । दत्त्वा प्रदक्षिणं कुर्यात्सूर्यं ध्यायंस्ततो द्विजः॥ अतोऽर्घ्यदानमात्रस्य वाचा मन्त्रोच्चारणम्, मार्जनादौ मनसेति । **श्रीवाराहे**—यस्मिन्काले विशालाक्षि यस्य यत्कर्म चोदितम् । तत्काले कर्म तत्त्यक्त्वा मामुपास्ते नरो यदि॥ न दोषस्तत्र देवेशि भवत्यत्र न संशयः । रथ्यां गतं तु देवेशो ह्यास्थानं चास्थिते सति॥ मध्ये संध्यामनुप्राप्तां विप्रा वेदार्थमोहिताः । सन्ध्योपास्यां प्रकुर्वन्ति नरा विष्णुपराङ्मुखाः ॥ श्वानयोनिशतं प्राप्य चांडालीं योनिमाप्नुयुः॥ **बौधायनः**—तत्र सायमतिक्रमे रात्र्युपवासः, प्रातरतिक्रमे अहरुपवासः । इदमबुद्धिपूर्वं, बुद्धिपूर्वविषये तु । वेदोदितानां नित्यानां कर्मणां समतिक्रमे। स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्॥ इति **मनू**क्तदिनोपवासः कार्यः । यत्त्विदं वचनम्—अर्घ्यप्रदानतः पूर्वमुदयेऽस्तमयेऽपि वा । गायत्र्यष्टशतं जप्यं प्रायश्चित्तं द्विजातिभिः ॥ इति तदुपवासाशक्तविषयम् । ततश्च " सन्ध्यावन्दनहानौ तु, सन्ध्यामापदि नोपास्ते " इति प्रजापतिसंवर्ताद्युक्ताष्टसहस्रजपाश्चिरकालापद्विषय

इति मन्तव्यः । मासातिक्रमे कृच्छ्रादि कार्यम् । कौर्मे–द्विराचम्य शुचिः प्राणा-नायम्याहृय वाग्यतः । प्राङ्मुखः सततं विप्रः सन्ध्यावन्दनमाचरेत् ॥ अत्र **व्यासः**–उषःकाले तु संप्राप्ते कृत्वा चावश्यकादिकम् । स्नायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि ॥ अशक्तावशिरस्कं वा स्नानं तत्र विधीयते । आर्द्रेण वाससा वाङ्गमार्ज-नं कापिलं स्मृतम् । आचम्य मन्त्रवन्नित्यं पुनराचम्य वाग्यतः ॥ संप्रोक्ष्य मन्त्रै-रात्मानं कुशैः सोदकबिन्दुभिः ॥ आपो हिष्ठाव्याहृतिभिः सावित्र्या वारुणैः शुभैः । ओंकारव्याहृतीयुक्तां गायत्रीं वेदमातरम् ॥ जप्त्वा जलाञ्जलीन् दद्याद्भास्करं प्रति तन्मनाः । प्राक्कूलेषु समासीनो दर्भाग्रेषु समाहितः ॥ ध्यात्वार्कमण्डलगतां गायत्रीं वै जपेद्बुधः ॥ ध्याने आसनस्थित्योर्विकल्पः, आचम्य द्विरिति शेषः । तथा **स्मृ-त्यन्तरे**–उषःकाले समुत्थाय स्नानं कृत्वा यथाविधि । ततो वस्त्रद्वयं शुभ्रं परिधाय द्विराचमेत् ॥ ऊर्ध्वपुण्ड्रधरः सम्यक् सन्ध्यां कुर्वीत वैदिकम् । आपो हिष्ठादिभिर्म-न्त्रैर्नवभिः प्रोक्षयेद्द्विजः॥ अग्निश्चेति च मन्त्रेण जलं पीत्वा यथाविधि। सुरभिमत्या च संप्रोक्ष्य ह्यापो हिष्ठादिभिः पुनः॥ सन्ध्यास्वर्घ्यत्रयं दद्यात्तिष्ठन्नेव यथाविधि। परिषिच्य ततः पश्चादाचम्य विधिवद्द्विजः ॥ केशवादींस्तर्पयित्वा वन्दनं तु ततश्चरेत् । द्विर्द्वि-राचमनं कार्यमादावन्ते च कर्मणाम् ॥ द्विजैरिति शेषः। तथा **संग्रहकारः**–प्रत्यङ्मु-खश्चेदाचामेत्पुनराचम्य शुध्यति । दक्षिणाभिमुखस्तद्वत्पुनः स्नानेन शुध्यति ॥ स्नान-स्वादनपानेषु सकृदादौ द्विरन्ततः । जपे चाध्ययनारम्भे द्विरादौ सकृदन्ततः ॥ दाने प्रतिग्रहे होमे सन्ध्यात्रितयवन्दने । बलिकर्मणि चाचामेद्द्विरादौ सकृदन्ततः ॥ भोजने च द्विराचामेदादावन्ते च नित्यशः। तैलाभ्यङ्गेऽशितोद्गारे तथान्ते द्विरुपस्पृशेत् ॥ **अ-खण्डादर्शे**–स्नाने च भोजने पाने सन्ध्ययोरुभयोरपि । आचान्तः पुनराचामेदन्य-त्र तु सकृत्सकृत् ॥ नन्वत्र वारुणैरित्युक्तम्, योगयाज्ञवल्क्यबौधायनाभ्यां च मन्त्रा-न्तरैश्च मार्जनमभिहितम् । सत्यमेवम्, तत्पुनः पापक्षयार्थत्वाभिप्रायम् । कुर्यादेवं मा-र्जनं मन्त्रैः कुर्यात् सकृदुन्मसाम् । इति स्मृतेः । आपो हिष्ठादिऋग्भेदेन मार्जनस्मरणं तु नित्यत्वाभिप्रायमित्यविरोधः ॥

## ❀ अथ प्राणायामविधिः ❀

तत्र **मनुः**–दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः । तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥ **योगयाज्ञवल्क्यः**–य एता व्याहृतीः सप्त संस्मरेत्प्राण-संयमे । उपासितं भवेत्तेन विश्वं भुवनसप्तकम् ॥ **व्यासः**–षोडशाक्षरकं ब्रह्म गाय-त्र्यास्तु शिरः स्मृतम् । सकृदावर्तयन् विप्रः संसारादपि मुच्यते ॥ **संवर्तः**–प्राणाया-मत्रयं कृत्वा सूर्यस्योदयनं प्रति । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ मानसं वाचिकं पापं कायेनैव तु यत्कृतम् । तत्सर्वं नश्यते तूर्णं प्राणायामत्रये कृते ॥ **श्रीवाराहे** मानसादिविवरणम्–परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् । वितथाभि-निवेशश्च मानसं त्रिविधं स्मृतम् ॥ पारुष्यमनृतं चैव पैशुन्यमपि सर्वशः । अनिबद्ध-प्रलापश्च वाचिकं स्याच्चतुर्विधम् ॥ अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारो-पसेवा च कायिकं त्रिविधं स्मृतम् ॥ इति । **योगयाज्ञवल्क्यः**–एवं संमार्जनं

कृत्वा बाह्यशुद्ध्यर्थमात्मनः । ततोऽभ्यन्तरशुद्ध्यर्थं प्राणायामान् समाचरेत् ॥ सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ पठेदिति वचनाद्वाचा वचनीयमिति न भ्रमितव्यम्, जपेन्मनसेति शेषः, इति चन्द्रिकायामुक्तत्वात् । **संवर्तश्च**–प्रणवेन तु संयुक्ता व्याहृतीः सप्त नित्यशः । सावित्रीं शिरसा सार्धं मनसा त्रिः पठेद्द्विजः॥ **भरद्वाजः**–स्मृत्वा तु व्याहृतीः पादौ प्रक्षाल्य प्राङ्मुखो द्विजः । उपविश्य द्विराचम्य प्राणायामान् समाचरेत् ॥ प्रणवव्याहृतीः सप्त गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ सप्तव्याहृतिपूर्वोक्तामाद्यन्तप्रणवां हृदा । जपेद्द्वादशगायत्रीमेकोयं प्राणसंयमः ॥ आद्यन्तयोर्व्याहृतीनां सप्तानां प्रणवैः सह । गायत्रीं शिरसा योज्य जपेत्स स्याज्जपक्रमः॥ अशक्तस्य यदि प्रोक्तः प्राणायामो द्विजन्मनः । बालस्य चेतरेषां च प्रशस्तः प्रक्रमोदितः ॥ अत्र, आयाहित्यनुवाकोत्तरानुवाके सप्तव्याहृतीनामादावेव प्रणवदर्शनात्तथैव शिष्टा जपन्ति । तथा **यमः**–ॐकारपूर्विकाः सप्त जपेत्तु व्याहृतीर्हृदा । शिरसा सह गायत्रीं प्राणायामे परन्तप ॥ अत्यन्ताशक्तविषये **भरद्वाजः**–सप्तैव व्याहृतीरेताः केवला वा द्विजो जपेत् । जपक्रमोयमेवं स्यात्सर्वपापप्रणाशनः ॥ **विश्वामित्रः** प्रकारान्तरमाह–षट्कृत्वस्त्वभ्यसेद्बुद्ध्वा प्राणापानौ समाहितः । प्राणायामोयमेकः स्यात्सर्वपापप्रणाशनः ॥ अभ्यसेत्त्रिकमिति प्रकृतम् । प्रणवो व्याहृतयस्तिस्रः सावित्री चेति त्रिकम् । **कर्मप्रदीपे**–देवार्चने जपे होमे स्वाध्याये श्राद्धकर्मणि । स्नाने दाने तथा ध्याने प्राणायामास्त्रयस्त्रयः ॥ आदावन्ते च गायत्र्याः प्राणायामास्त्रयस्त्रयः । संध्यायामर्घ्यदाने च प्राणायामैक उच्यते ॥ अंगुष्ठानामिकाभ्यां तु तथैव च कनिष्ठया । प्राणायामस्तु कर्तव्यो मध्यमां तर्जनीं विना ॥ तर्जनीमध्ययोर्योगं प्राणायामे तु वर्जयेत् । तर्जनीं मध्यमां स्पृष्ट्वा जपञ्छूद्रसमो भवेत् ॥ **बृहस्पतिः**–बद्धासनं नियम्यासून् स्मृत्वा ऋष्यादिकं तथा । सन्निमीलितदृङ् मौनी प्राणायामं समभ्यसेत् ॥ ऋष्यादिकमाह **भरद्वाजः**–प्रणवस्य ऋषिर्ब्रह्मा परमात्मा च देवता । छन्दस्तु देवी गायत्री विनियोगः क्रियावशः ॥ देवताजपकाले तु त्रयीहोमे हुताशनः । ध्यानकाले परं ब्रह्म विश्वेदेवास्ततोन्यदा ॥ अत्र **व्यासः**–प्रणवस्य ऋषिर्ब्रह्मा गायत्री छन्द उच्यते । देवोऽग्निः सर्वकर्मादौ विनियोगः प्रकीर्तितः ॥ तथा । प्रणवस्य ऋषिर्ब्रह्मा देवता च श्रुतित्रयम् । छन्दस्तु देवी गायत्री विनियोगोऽसुसंयमे ॥ इत्यादिषु श्रुत्यग्न्यादिदेवताभेदव्यवस्था पूर्वोदाहृतभरद्वाजवचने द्रष्टव्या । तथा **पितामहश्च**–प्रणवस्य ऋषिर्ब्रह्मा देवताग्निस्त्रयी तु वा । छन्दस्तु देवी गायत्री वेदादौ विनियुज्यते ॥ जपकाले त्रयी देवो होमकाले हुताशनः । ध्यानकाले परं ब्रह्म विश्वेदेवास्ततोन्यदा ॥ अत्र " ऐतदात्म्यमिदं सर्वम्, तत्सत्यम्, स आत्मा " इति सर्वस्य विष्ण्वात्मकत्वश्रुतेः । " यस्य सर्वाणि भूतानि शरीरम् " इति सर्वभूतस्य नारायणशरीरत्वश्रुतेः । शरीरवाचिशब्दानां शरीरवाचित्वादग्ने नयनादिव्युत्पत्त्या च " वेदैश्च सर्वैरहमेव वेद्यः, नताः स्मः सर्ववचसां प्रतिष्ठा यत्र शाश्वती " इत्यादिश्रुतिस्मृतिभ्यश्च वेदाग्न्यादिशब्दवाच्यः परमात्मैक एवेति न विरोधः । अत्र

ब्रह्मा—अत्रिर्भृगुश्च कुत्सश्च वसिष्ठो गौतमस्तथा । काश्यपश्चाङ्गिराश्चैव ऋषयः स्युर्यथाक्रमम् ॥ गायत्र्युष्णिगनुष्टुप् च बृहती पंक्तिरेव च । त्रिष्टुप् च जगती चैव च्छन्दांस्येतानि सप्त वै ॥ अग्निर्वायुस्तथार्कश्च वागीशो वरुणस्तथा । इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः ॥ ब्राह्मी स्वाहा भवानी च तथा नित्या विलासिनी । प्रभावती च लोला च सप्त व्याहृतिशक्तयः ॥ श्वेतं श्यामं च पीतं च पिशङ्गं नीललोहितम् । नीलं कनकवर्णं च वर्णान्येतान्यनुक्रमात् ॥ प्रणवस्यैतयोर्वर्णः शुद्धस्फटिकसंनिभः । तत्त्वमेषां त्रयाणां तु सर्वतत्त्वमिति स्मृतम् ॥ इत्येवमुक्त्वा नत्वा च प्राणायामान् समाचरेत् । एतयोः गायत्रीशिरसोः । विश्वामित्रस्तु गायत्र्या ऋषिश्छन्दः स्वयं स्मृतम् । सविता देवता चैव ब्रह्मा शिरऋषिः स्मृतः ॥ अनुष्टुप् चैव छन्दः स्यात् परमात्मा हि देवता । प्राणायामप्रयोगे तु विनियोग उदाहृतः ॥ न्यासमाह स एव—पादयोर्जङ्घयोर्जान्वोरुरस्तथैव जठरेऽपि च । कण्ठे मुखे तथा मूर्ध्नि क्रमेण व्याहृतीर्न्यसेत् ॥ हृदि तत्सवितुर्न्यस्य न्यसेन्मूर्ध्नि वरेणियम् । भर्गो देवस्येति कण्ठे शिखायां तु ततो न्यसेत् ॥ धीमहीति न्यसेद्वर्म धियो यो नश्च नेत्रयोः । प्रचोदयादिति पदमस्त्रार्थं विनियुज्यते ॥ शिरस्तस्यास्तु सर्वाङ्गे प्राणायामपरो न्यसेत् । विन्यस्यैवं ततः कृत्वा मुद्रां ध्यात्वा क्रमेण तु ॥ रेचकादिक्रमेणैव प्राणायामान् समाचरेत् । पद्ममुद्रा सौरभेयी शङ्खमुद्रावराहकौ ॥ वासुदेवात्मसंवित्त्व सप्त मुद्राः प्रकीर्तिताः । प्रणवध्यानम्—विष्णुं भास्वत्किरीटाङ्गदवलयगलाकल्पहारोज्ज्वलाङ्गं श्रोणीभूषासुवक्षोमणिमुकुटमहाकुण्डलैर्मण्डिताङ्गम् । हस्तोद्यच्छङ्खचक्राम्बुजगदममलं पीतकौशेयवासं विद्योतद्भासमुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि ॥ सप्तव्याहृतिध्यानम्—स्वस्वोक्तवर्णतनवो रूपयौवनसंयुताः । क्षौमवस्त्रपरीधानाः सर्वाभरणभूषिताः ॥ दिव्यचन्दनलिप्ताङ्गा दिव्यमाल्यैरलंकृताः । सितोपवीतहृदयाः सपवित्रचतुष्कराः ॥ उन्निद्रवदनाम्भोजप्रभामण्डलमण्डिताः । जटाकलापपूर्णेन्दुप्रभापूरितदिङ्मुखाः ॥ अभयाक्षस्रगप्पात्रवरहस्तसरोरुहाः । एवं होमजपारम्भे ध्येया व्याहृतयो द्विजैः ॥ गायत्रीध्यानम्—मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुकलानिबद्धमुकुटां तत्वार्थवर्णात्मिकाम् । गायत्रीं वरदाभयांकुशकशां शुभ्रं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहंतीं भजे ॥ गायत्रीशिरोध्यानम्—अम्भोजासनसंस्थितं सरसिजं शङ्खं रथाङ्गं गदां बिभ्राणं वरपीतवस्त्रमतुलं भास्वत्किरीटांगदम् । श्रीवत्सोरसमुत्पलाभमखिलैर्भूषागणैर्भूषितं वन्दे पद्मनिवासिनीसहचरं विष्णुं सुरैर्वन्दितम् ॥ संग्रहेणाह **योगयाज्ञवल्क्यः**—व्याहृतीनां तु सर्वासां प्रजापति ऋषिः स्मृतः । छंदस्तु देवी गायत्री परमात्मा च देवता ॥ उत्तरस्य तु भागस्य भूर्भुवः सुवरोमिति । अस्य प्रजापति देवं केचिदाहुर्मनीषिणः ॥ यमः—उपास्य संध्यां पूर्वां तु शुचौ देशे जलोक्षिते । दर्भास्तृते द्विजस्तिष्ठन् प्राणायामत्रियां चरेत् ॥ **अम्बष्ठादर्शे**—प्रातस्तिष्ठन् प्राणायामेन शुध्यति, सायमासीनः प्राणायामेन शुध्यति, अतोत्र प्राणायामास्तिष्ठतैव कर्तव्याः ॥ **नारदीये** च—रेचकः पूरकश्चैव कुम्भकः शून्यकस्तथा । एवं चतुर्विधः प्रोक्तः प्राणायामो मनीषिभिः ॥ प्राणो वायुः शरीरस्थ आयामस्तस्य निग्रहः ।

प्राणायाम इति प्रोक्तो द्विविधः प्रोच्यते हि सः ॥ अगर्भश्च सगर्भश्च द्वितीयस्तु तयोर्वरः । अपि ध्यानं विना गर्भः सगर्भस्तत्समन्वितः ॥ वामेन रेचयेद्वायुं रेचनाद्रेचकः स्मृतः । पूरयेद्दक्षिणेनैव पूरणात्पूरकः स्मृतः ॥ स्वदेहे पूरितं वायुं निगृह्य न विमुञ्चति । संपूर्णकुम्भवत्तिष्ठेत्कुम्भकः स हि विश्रुतः ॥ न गृह्णाति न त्यजति वायुमेतं बहिः स्थितम् । ज्ञेयं तच्छून्यकं नाम प्राणायामो यथास्थितम् ॥ यद्यद्रूपं महाविष्णोस्तत्तद्ध्यायेत्तु महात्मनः । तेन ध्यानेन तुष्टात्मा हरिर्मोक्षं ददाति वै ॥ **योगयाज्ञवल्क्यः**–पूरकः कुम्भको रेच्यः प्राणायामस्त्रिलक्षणः । नासिकाकृष्ट उच्छ्रासाध्मातः पूरक उच्यते ॥ कुम्भको निश्चलश्वासो रेच्यमानस्तु रेचकः । कुम्भकेन जपं कुर्यात्प्राणायामस्य लक्षणम् ॥ शनैर्नासापुटे वायुमुत्सृजेन्न तु वेगतः । न कम्पयेच्छरीरं तु स योगी परमो मतः ॥ इडया वायुमारोप्य बाह्यं द्वादशमात्रकम् । पूरयित्वोदरं तेन नासाग्रनयनद्वयः ॥ ध्यायन्विरेचयेत्पश्चान्मन्दं पिङ्गलया पुनः । प्रथमविरेचनापेक्षया पुनःशब्दः । इडा वामनाडी, पिङ्गला दक्षिणनाडी । **अत्रिः**–आकेशाग्रान्नखाग्राच्च निरोधः शक्यते बुधैः । निरोधाज्जायते वायुर्वायोरग्निश्च जायते ॥ अग्नेरापश्च जायन्ते ततोऽन्तः शुध्यते त्रिभिः । दक्षिणघ्राणरन्ध्रेण रेचयेत्प्रथमं द्विजः ॥ प्राणायामेष वामेन नासारन्ध्रेण पूरयेत् । तं वायुं धारयेच्छक्त्यं दक्षिणेनाथ रेचयेत् ॥ **व्यासः**–नाभिपद्मस्थितं ध्यायेच्च रक्तं पूरकेण तु । नीलोत्पलाभं हृत्पद्मे कुम्भकेन जनार्दनम् ॥ ललाटस्थं शिवं श्वेतं रेचकेनाभिचिन्तयेत् । **भरद्वाजः**– समाहितमनाः प्राणानायम्यैव सदाकृतिम् । दशकृत्वो जपित्वैवं प्रागायत्रीं ततो जपेत् ॥ जपक्रमोऽयमेव स्यात्सर्वपापप्रणाशनः । सदाकृतिम् कुम्भकजपोक्तरूपाम् । प्राणायामत्रयानन्तरं सप्तव्याहृतियुक्तां गायत्रीं शिरसा सह दशवारं जपित्वा, पश्चाद्गायत्रीमावाह्य जपेदित्यर्थः । स्मृत्यन्तरे च–सप्तव्याहृतिसंयुक्तां गायत्रीं शिरसा सह । दशवारं जपित्वैव गायत्रीं च ततो जपेत् ॥ **भरद्वाजः**–आयात्वित्यनुवाकेन हृदये वार्कमण्डले । देवीमावाह्य गायत्रीं ततो ध्यायेद्विजोत्तमः ॥ **पितामहः**–आयात्वित्यनुवाकस्य वामदेव ऋषिः स्मृतः । अनुष्टुप् जगती छन्दो गायत्री देवता स्मृता ॥ अनेन चानुवाकेन त्वावाह्य तु यथाविधि । गायत्रीं विमलां देवीं हृदि वा सूर्यमण्डले ॥ ध्यानयोगेन संपश्येद्वर्णरूपसमन्विताम् । अत्र भेदमाह **भरद्वाजः**–वामदेव ऋषिश्छन्दोऽनुष्टुप् सावित्रि देवता । आवाहने विनियोगो देव्या अस्या यथाक्रमम् ॥ अत्र–न्यस्यायायातु वरदेत्यनुवाकेन मण्डले । भानोरावाहयेद्देवीं संध्यां गायत्रियाह्वयाम् ॥ इति ऋष्यादिन्यासान्ते भरद्वाजेन गायत्र्यावाहनमुक्तम् । विन्यस्यैवं जपेद्यस्तु गायत्रीं वेदमातरम् । इति व्यासेन न्यासानन्तरं जप उक्तः, एवंसति यथोपदेशमनुष्ठेयम् । **संवर्तः**–प्राणानायम्य चावाह्य स्मृत्वर्ष्यादि ततो न्यसेत् । मुद्राः प्रदर्श्य ध्यात्वाथ जपेन्मन्त्रमयं क्रमः ॥ **बृहस्पतिः**–ऋषिश्छन्दो देवताश्च ध्यात्वा मन्त्रार्थमेव च । अनुष्ठानं ततः कुर्यादिति मन्त्रविदां मतम् ॥ अत्र **भरद्वाजः**–ततः प्रदक्षिणीकृत्य प्रोक्षितेऽद्भिः शुचिस्थले । दर्भेषु वाग्यतासितस्तत्र प्राङ्मुखो दर्भपाणिकः ॥ त्रिः प्राणसंयमं कुर्यादृष्यादीनथ संस्मरेत् । गायत्र्यास्तु

समस्ताया ऋषिश्छन्दोऽधिदेवताः ॥ स्मृत्वा प्रत्यक्षरं पश्चाद्व्याहृतीनथ संस्मरेत् । **पितामहः**–सविता देवता यस्या मुखमग्निस्त्रिपाच या । विश्वामित्र ऋषिश्छन्दो गायत्री सा विशिष्यते ॥ **भरद्वाजः**–पूर्वोक्तेषु चतुर्थार्णं बीजमस्या उदाहृतम् । चतुर्विंशत्यक्षरान्तं सदीर्घं शक्तिरुच्यते ॥ **विश्वामित्रः**–आदित्यमण्डलस्थं तत्परं ब्रह्माधिदैवतम् । छन्दोनिचृत्स्याद्गायत्री मया दृष्टा सनातनी ॥ अत्र पक्षे ण्यमित्येकाक्षरं स्यात्, "ऊनाधिकेनैकेन निचृद्भुरिजौ" इति छन्दोविचितौ दर्शनात्सा त्रयोविंशत्यक्षरा स्यात् । एवंसति "छन्दो गायत्री, चतुर्विंशत्यक्षरा गायत्री" इत्यादिचतुर्विंशत्यक्षरपरवचननिचयवैयर्थ्यं स्यात् । अत एव शिष्टा देवी गायत्री छन्द इत्येवं स्मरन्ति । केचिन्मंदाः पुनः प्रणवगायत्र्यादीनां देवी गायत्रं छन्द इति वदन्ति, तन्न साधीयः। "छन्दस्तु देवी गायत्री छन्दसां गायत्री देवी गायत्रीत्येतानि च्छन्दांसि" इत्यादिस्मरणविरोधात्, स्त्रीलिङ्गनपुंसकलिङ्गयोरनन्वयाच्च । अतः सर्वत्र गायत्री छन्द इत्येव स्मर्तव्यम् । स्मृतिषु तु पद्यसौकर्याय गायत्रं छन्द इत्युच्यते । **भरद्वाजः**–विश्वामित्र ऋषिश्छन्दो गायत्री देवता रविः । सावित्र्यास्तु समाख्यातो विनियोगोपनायने ॥ अत्र, सवितृपरमात्मपरब्रह्मशब्दानां पर्यायत्वान्न देवताभेदभ्रमः कार्यः, विष्णोर्नामसहस्रं मे इत्युपक्रम्य, सविता रविलोचन इति व्यासस्मृतेः। प्रसौति सकलां चेष्टां प्रसूते सकलं जगत् । अवतेर्गतिकान्त्यर्थात्तरतेर्दानकर्मणः ॥ गतो ह्यवति सर्वत्र षड्भिः कान्तो गुणैः सह । भोगापवर्गयोर्दाता सवितेति निरुच्यते ॥ इत्यहिर्बुध्न्यस्मरणाच्च । षूङ् प्राणिप्रसवे, अव रक्षणे, इण् गतौ, तॄ प्लवनतरणयोः, इत्येतेभ्यो धातुभ्यः सवितृशब्दनिष्पत्तेः उक्तार्थसिद्धिरित्यर्थः । नहि सूर्यस्य जगत्कारणत्वादिकम्, अन्तः प्रविश्य चोदयितृत्वं वा सम्भवति । स यश्चायं पुरुषे, यश्चासावादित्ये । इत्यादित्यमण्डलान्तर्वर्तिन एव अन्तर्यामित्वश्रुतेः । य आत्मनि तिष्ठन् आत्मनोऽन्तरः य आत्मानमन्तरो यमयति । इति तस्यैव नियन्तृत्वश्रुतेः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । भ्रामयन् सर्वभूतानि ॥ इति गीतत्वाच्च । तथा **श्रीवाराहे** भुवं प्रति शेषः–तथापि सर्वलोकानामण्डानां मादृशामपि । भर्ता कर्ता नियन्ता च साक्षान्नारायणो हरिः ॥ अतोऽत्र सविता विष्णुरेव, तथा स एव परमात्मा च । तथा **पराशरः**–परमात्मा च सर्वेषामाधारः परमेश्वरः । विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥ **गीतायाम्**–उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । तथा परं ब्रह्म च विष्णुरेव । अत्र **महोपनिषदि**–नारायणपरं ब्रह्म तत्त्वं नारायणः परः । इति । **श्रीवाराहे**–विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते। वेदसिद्धान्तमार्गेषु तं न जानन्ति मोहिताः॥ **पराशरः**–नारायणः परं ब्रह्म पन्नगाशनवाहनः । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥ इति च । अतो वेदेषु देवतान्तरपारम्यादिपरं वाक्यं पूर्वपक्षाभिप्रायमिति सिद्धम् । **स्कान्दे** च–बन्धको भवपाशेन भवपाशाच्च मोचकः । कैवल्यदः परं ब्रह्म विष्णुरेव न संशयः ॥ इत्यलम् । पुनश्चैवमत्र मन्त्रव्याख्याने स्पष्टीकरिष्यते ॥

## ❀ न्यासक्रमः ❀

इदानीं षडङ्गन्यास उच्यते, तत्र भरद्वाजः—स्वस्वोक्तविग्रहानेतान् सर्वान् स्मृत्वा प्रणम्य च । सम्यगुक्तप्रकारेण न्यासत्रयमथाचरेत् ॥ प्रथमं तु करन्यासो देहन्यास अनन्तरम् । अङ्गन्यासस्ततः प्रोक्त एतन्न्यासत्रयं क्रमात् ॥ तत्र तावदादौ अस्त्रमन्त्रेण करशुद्धिः । ततो गायत्र्या व्यापकं कृत्वा, करन्यासपूर्वकमङ्गन्यासं कुर्यात् । अत्र भरद्वाजः—प्रकोष्ठान्तं बहिः पाण्योस्तलयोस्तलपृष्ठयोः । तलयोर्मध्यमे विप्रः केवलं प्रणवं न्यसेत् ॥ व्यासः—भूरंगुष्ठद्वये न्यस्य भुवस्तर्जनिकाद्वये । ज्येष्ठांगुलिद्वये धीमान् स्वःपदं विनियोजयेत् ॥ अनामिकाद्वये धीमान् न्यसेत्तत्पदमग्रतः । कनिष्ठिकाद्वये भर्गः पाण्योर्मध्ये धियः पदम् ॥ ततस्तेनैव व्यापकं कृत्वा अङ्गन्यासं कुर्यात् ॥ करन्यासविधिं कृत्वा अङ्गन्यासं समाचरेत् । भूःपदं हृदि विन्यस्य भुवः शिरसि विन्यसेत् ॥ (ॐ भूर्हृदि च विन्यस्य भुवः शिरसि विन्यसेदिति क्वचित्) शिखायां स्वःपदं न्यस्य कवचे तत्पदं न्यसेत् । अक्ष्णोर्भर्गपदं न्यस्य न्यसेद्दिक्षु धियःपदम् ॥ भरद्वाजः—हृन्मस्तकशिखागात्रनेत्रप्रहरणानि षट् । अङ्गान्यमूनीत्युक्तानि वच्मि षट्पल्लवानि च ॥ तिस्रो व्याहृतयो मन्त्रे षड्वर्णा हृदयादयः । चतुर्थ्यन्ताः पल्लवान्ता एतेङ्गमनवः स्मृताः ॥ हृन्मन्त्रं हृदये कान्ते शिरोमन्त्रं शिखामनुम् । शिखायां कवचं देहे दृक्फालेषु च दृङ्मनुम् ॥ पार्श्वयोर्दशदिक्ष्वस्त्रमन्त्रं कुर्याद्यथाक्रमम् । तत्तदुक्तक्रमेणैव प्रणवाद्यांश्च विन्यसेत् ॥ अंगुलीभिश्चतसृभिर्द्वयोर्हृदयशीर्षयोः । मुष्टिकांगुष्ठशिरसा पश्चिमे तस्य वर्मणः ॥ बहिः कराभ्यां दृक्फालमध्ये मध्यांगुलित्रिभिः । अंगुष्ठतर्जन्यग्राभ्यां सशब्दं दिक्षु पार्श्वयोः ॥ षडङ्गन्यासमित्युक्तमिदमेतत्प्रकारतः । एवं विन्यस्य गायत्रीमावाह्य च यथाविधि ॥ ध्यात्वोपचारं सकलं कृत्वाथो जपमारभेत् । एवं षडङ्गन्यासमुक्त्वा, तदनन्तरं जपविधानान्नित्यजपे पुनरेतावदेव कार्यमिति गम्यते । फलाधिक्यापेक्षायां शक्तस्य अक्षरन्यासादयः कार्याः । चन्द्रिकायाम्—अंगुष्ठे चैव गोविन्दं तर्जन्यां तु महीधरम् । मध्यमायां हृषीकेशमनामायां त्रिविक्रमम् ॥ कनिष्ठायां न्यसेद्विष्णुं करमध्ये तु माधवम् । यत्कृतं च हुतं जप्तं दत्तमिष्टं विशेषतः ॥ हस्तन्यासप्रभावेण सर्वं भवति चाक्षयम् । एवं सर्वस्मृतिषु न्यासविधाने अंगुष्ठतर्जन्यग्राभ्यां सशब्दं दिक्षु न्यासविधानात् स एवास्त्रविन्यासे कार्यः। हस्तताडनं तु विचिन्त्यम् । अथास्याः प्रत्यक्षरमृष्याधिकमुच्यते । अत्र अगस्त्यः—प्रह्लादः अत्रिः वसिष्ठः शुकः कण्वः पराशरः विश्वामित्रः कपिलः शौनकः याज्ञवल्क्यः भरद्वाजः जमदग्निः गौतमः मुद्गलः वेदव्यासः रोमशः अगस्त्यः कौशिकः वत्सः पुलस्त्यः मङ्कणः दुर्वासाः नारदः काश्यपः, इत्याद्या ऋषयः । गायत्री उष्णिक् अनुष्टुप् बृहती पंक्तिः त्रिष्टुप् जगती कान्तिः महती सत्या आस्तारपंक्तिः विराट् विष्टारपंक्तिः अक्षरपंक्तिः कात्यायनी ज्योतिष्मती त्रिष्टुप् जगती सर्वच्छन्दः महाछन्दः भूरिति च्छन्दः भुवरिति च्छन्दः सुवरिति च्छन्दः देवी गायत्री, इत्येतानि छन्दांसि । अग्निः प्रजापतिः सोमः ईशानः आदितिः बृहस्पतिः इन्द्रः अर्यमा भगः सविता त्वष्टा पूषा इन्द्राग्नी वायुः वामदेवः

मित्रावरुणौ धाता विश्वेदेवाः विष्णुः वसवः रुद्राः कुबेरः अश्विनौ ब्रह्मा इत्येता देवताः। भरद्वाजः—चतुर्विंशत्यक्षराणामृषयः परिकीर्तिताः। चतुर्विंशतिरेतानि च्छन्दांसीह यथाक्रमात्॥ प्रोक्तानि गायत्र्यादीनि तदादीनां पृथक् पृथक् । एषां यथाक्रमेणैताश्चतुर्विंशतिसंख्यकाः॥ अक्षराणां तदादीनां समाख्याता हि देवताः। पृथिवी आपः तेजः वायुः आकाशं गन्धः रसः रूपं स्पर्शः शब्दः उपस्थं पायुः पादः पाणिः वाक् घ्राणं जिह्वा चक्षुः त्वक् श्रोत्रं मनः बुद्धिः अहंकारः अव्यक्तम्, इत्येतानि तत्त्वानि । चतुर्विंशतिवर्णानां तदादीनां यथाक्रमम् । तत्त्वान्यमूनि प्रोक्तानि प्रतिवर्णं पृथक् पृथक् ॥ प्रह्लादिनी, प्रभा, नित्या, विश्वभद्रा, विलासिनी, प्रभावती, जया, शान्ता, कान्ता, दुर्गा, सरस्वती, विद्यारूपा, विशाला, ईशा, व्यापिनी, विमला, तमोपहारिणी, सूक्ष्मा, विश्वयोनिः, जयावहा, पद्मालया, परा, शोभा, भद्ररूपा, इत्येताः शक्तयः । चतुर्विंशतिरेतेषामक्षराणां पृथक् पृथक् । यथाक्रमात्समाख्याताः शक्तयः सर्वकामदाः ॥ चम्पकं सुमनः पीतमतसीप्रसवासितम् । अतसीप्रसवश्यामिन्द्रनीलमणिप्रभम् ॥ कृपीटयोनिदीप्ताभं ज्वलद्वह्निसमप्रभम् । विद्युज्ज्वलितसंकाशं तारकाधिपसन्निभम्॥ सजलाभ्रघनश्यामं रक्तगोरोचमेचकम्। मालतीपुष्पधवलं शुद्धजाम्बूनदप्रभम् ॥ कुन्दप्रसूनकसितं स्फुरच्छोणमणिप्रभम् ॥ पूर्णेन्दुशङ्खधवलं पाण्डुरं शक्रगोपमम् ॥ गोरक्तसदृशं भानोरुदयद्युतिसन्निभम् । गोरोचनाप्रभापीतं नीलोत्पलदलासितम् ॥ शङ्खकुन्देन्दुधवलं वर्णातीतं तदन्तिमम् । चतुर्विंशतिवर्णानां वर्णाः प्रोक्ता यथाक्रमम् ॥ संग्रहे च—क्रमाच्चम्पकपुष्पाभमतसीसूनसन्निभम् । विद्रुमस्फटिकाकारं पद्मपुष्पसमप्रभम् ॥ तरुणादित्यसंकाशं शङ्खकुन्देन्दुसन्निभम् । प्रवालपद्मपत्राभं पद्मरागसमप्रभम् ॥ वज्रनीलमणिप्रख्यं मौक्तिकं कुंकुमप्रभम् । अञ्जनाभं च गाङ्गेयं वैडूर्यक्षौद्रसन्निभम् ॥ हारिद्रं कृष्णदूर्वाभं रविकान्तिसमप्रभम् । शुकपिच्छसमाकारं क्रमेण परिकल्पयेत् ॥ इति सप्तव्याहृतिवदत्रापि भरद्वाजेन ऋष्यादिभेद उक्तः स पुनर्युगान्तरविषय इति मन्तव्यम् । गायत्रीकल्पे तु प्रतिपादमपि ऋष्यादिकमुक्तम् । विश्वामित्र ऋषिः, गायत्री छन्द इत्येतत्पादत्रयेपि समानम्, ब्रह्मविष्णुरुद्राः क्रमाद्देवताः, अक्षराणां तु सर्वेषां प्रजापतिः ऋषिः, गायत्री छन्दः, सविता देवता इति । अथ न्यासः । अस्त्रमन्त्रेण करशुद्धिं गायत्र्या व्यापकं च कृत्वा, करन्यासं पूर्वं कुर्यात् । भूर्भुवद्वये न्यस्येति व्यासोक्तक्रमेण षडङ्गन्यासान्तं कृत्वा पादादिन्यासं कुर्यात् । शिरसि प्रथमं पादं द्वितीयं नाभिमध्यतः । तृतीयं पादयोर्न्यस्य सर्वं सर्वाङ्गतो न्यसेत् ॥ अथ पादादिमूर्धान्तं पदन्यासस्तु कथ्यते । पादयोस्तत्पदं न्यस्य सवितुर्जङ्घयोर्न्यसेत् ॥ जानुद्वये वरेणीयं भर्ग इत्यूरुदेशतः । देवस्य गुह्ये विन्यस्य नाभ्यां धीमहि विन्यसेत् ॥ धिय इति हृदि न्यस्य कण्ठे य इति विन्यसेत् । न इति न्यस्य वदने न्यसेन्मूर्ध्नि प्रचोदयात् ॥ एवं स्पष्टं पदन्यासविधानं समुदाहृतम् । मन्त्रेणानेन सर्वेण सोंकारेणाथ विग्रहम् ॥ कराभ्यां संस्पृशेद्धीमान् मूर्द्धादिचरणावधि । एतत्संहननन्यासं वज्रसंहननोपमम् ॥ कृत्वा षडङ्गविन्यासं षट्कर्माणि समाचरेत् । अयं सृष्टिन्यासः। मूर्धभ्रूमध्यनेत्रेषु वक्त्रे हन्नाभिगुह्यके । ऊरु-

जानुपदे चैव पदानि क्रमशो न्यसेत् ॥ विपर्ययेणायमेव संहारन्यासः । पदादिनाभ्यन्तं मूर्धादिहृदयान्तं स्थितिन्यासः । अथाक्षरन्यासः । उभयांगुष्ठयोः स्वस्वतर्जन्या प्रणवं न्यसेत् । अष्टानामंगुलीनां तु चतुर्विंशतिपर्वसु ॥ चतुर्विंशत्यक्षराणि तर्जन्यादिक्रमान्न्यसेत् । **नारदः**—आदितो वामतर्जन्याः कृत्वा दक्षिणतर्जनीम् । न्यास उत्पत्तिसंज्ञोयं संहाराख्यो विपर्ययः ॥ तर्जन्यादिकनिष्ठान्तमुभयोरपि हस्तयोः । स्थितिर्नाम भवेन्न्यासो नानाभोगसुखावहः ॥ संहारः स्यान्मुमुक्षूणामुत्पत्तिर्ब्रह्मचारिणाम् । गृहस्थानां तु सर्वेषां स्थितिरेव विधीयते ॥ **अगस्त्यः**—अंगुष्ठगुल्फजङ्घासु जानूर्वोर्गुह्यके तथा । वृषणे कटिदेशे च नाभौ चोदरमध्यतः ॥ स्तनयोर्हृदये कण्ठे वक्त्रे तालुनि घोणके । चक्षुषोश्च भ्रुवोर्मध्ये ललाटे पूर्ववक्त्रके ॥ दक्षिणे चोत्तरे वक्त्रे पश्चिमे मूर्ध्नि च क्रमात् । न्यासप्रकारांश्च स एवाह—ॐ ( तत् ) ब्रह्मादिन्यै चम्पकनिभायै नमः । ॐ ( सम् ) प्रभायै अतसीपुष्पसन्निभायै नमः । ॐ ( विम् ) नित्यायै पिङ्गलवर्णायै नमः । ॐ ( तुम् ) विश्वभद्रायै इन्द्रनीलनिभायै नमः । ॐ ( वॆम् ) विलासिन्यै वह्निरूपायै नमः । ॐ ( रेम् ) प्रभावत्यै नीलवर्णायै नमः । ॐ ( णीम् ) जयायै विद्युत्प्रभायै नमः । ॐ ( यम् ) शान्तायै रक्तवर्णायै नमः । ॐ( भम् ) कान्तायै जलदवर्णायै नमः । ॐ ( र्गोम् ) दुर्गायै रक्तगौरायै नमः । ॐ ( देम् ) सरस्वत्यै मरकतनिभायै नमः । ॐ ( वम् ) विद्यारूपायै जातिपुष्पनिभायै नमः । ॐ ( स्यम् ) विशालायै स्वर्णप्रभायै नमः । ॐ ( धीम् ) ईशायै कुन्दप्रभायै नमः । ॐ (मम्) व्यापिन्यै पद्मरागनिभायै नमः। ॐ (हिम्) विमलायै शङ्खनिभायै नमः। ॐ ( धिम् ) तमोपहारिण्यै पाण्डुरनिभायै नमः । ॐ ( योम् ) सूक्ष्मायै इन्द्रगोपनिभायै नमः । ॐ ( योम् ) विश्वयोन्यै क्षीरनिभायै नमः । ॐ ( नः ) जयावहायै आदित्योदयसन्निभायै नमः । ॐ ( प्रम् ) पद्मालयायै नीलोत्पलनिभायै नमः। ॐ ( चोम् ) परायै गोरोचनाभायै नमः । ॐ ( दम् ) शोभायै कुन्देन्दुशङ्खनिभायै नमः । ॐ ( यात् ) भद्ररूपायै स्फटिकनिभायै नमः। (ॐ ( योम् ) सूक्ष्मायै शक्रगोपनिभायै नमः। ॐ ( योम् ) विश्वयोन्यै गोरक्तसदृशायै नमः। इति पाठान्तरम् । ) **ब्रह्मप्रोक्ते**—मूर्धादिपादपर्यंतमुत्पत्तिन्यास उच्यते । पादादिमूर्धपर्यन्तं संहारन्यास उच्यते ॥ पादादिकुक्षिपर्यन्तं शिरःप्रभृति वक्षसि । कर्तव्यः कामिभिर्न्यासो गृहस्थैः स्थितिसंज्ञकः॥ चतुर्विंशत्यक्षराणि तदादीनि स्वविग्रहे । चतुर्विंशतिदेशेषु प्रोक्तेष्वेषु प्रविन्यसेत् ॥ पातघ्नमुपपातघ्नं महापातकनाशनम् । पितृमातृवधाघघ्नं पूर्वजन्माघनाशनम् ॥ विष्णुलोकप्रदं चैव ब्रह्मलोकप्रदं तथा । सर्वसिद्धिप्रदं नित्यं ध्यात्वैनां वेदमातरम् ॥ **अगस्त्यः**—तत्वन्यासमथो वक्ष्ये साधकानां हिताय वै । यत्कृत्वा साधको गच्छेन्निर्वाणं पदमव्ययम् ॥ ॐकारमादावुच्चार्य मन्त्रबीजमनन्तरम् । ततस्तत्वं नमोन्तं च जपं न्यासं समाचरेत्॥ तद्यथा—ॐ ( तत् ) पृथिव्यात्मने नमः, ॐ ( सम् ) अबात्मने नमः, ॐ ( विम् ) तेजआत्मने नमः, ॐ ( तुम् ) वाय्वात्मने नमः, ॐ ( वॆम् ) आकाशात्मने नमः, ॐ ( रेम् ) गन्धतन्मात्रात्मने नमः, ॐ ( णीम् ) रसतन्मात्रात्मने नमः, ॐ (यम्) रूपतन्मात्रात्मने नमः, ॐ (भम्) स्पर्शतन्मात्रात्मने नमः, ॐ

( गोम् ) शब्दतन्मात्रात्मने नमः, ॐ ( देम् ) उपस्थात्मने नमः, ॐम् ( वम् ) वाय्वात्मने नमः, ॐ ( स्यम् ) पादात्मने नमः, ॐ ( धीम ) पाण्यात्मने नमः, ॐ ( मम् ) वागात्मने नमः, ॐ ( हिम् ) घ्राणात्मने नमः, ॐ ( धिम् ) जिह्वात्मने नमः, ॐ ( योम् ) चक्षुरात्मने नमः, ॐ ( योम ) त्वगात्मने नमः, ॐ ( नः ) श्रोत्रात्मने नमः. ॐ ( प्रम ) मनआत्मने नमः, ॐ ( चोम् ) बुद्ध्यात्मने नमः, ॐ ( दम् ) अहंकारात्मने नमः, ॐ ( यात् ) अव्यक्तात्मने नमः, इति तत्तत्स्थानेषु क्रमान्न्यसेत् । स्थानानि च स एवाह–अंघ्योर्जान्वोश्च हृदये मुखे मूर्ध्नि च नामयोः । जिह्वाक्षित्वक्चक्षुःश्रोत्रलिङ्गपाण्यंघ्रिपाणिषु ॥ मुखे घ्राणे च जिह्वायां त्वक्चक्षुःश्रोत्रहस्तु च । ह्येव विन्यसेदूर्ध्वं तत्त्वन्यास इति स्मृतः ॥ एवं विन्यस्य सावित्रीं ध्यात्वा सम्यक् प्रयत्नतः । यं यं पश्यति चक्षुर्भ्यां यं यं स्पृशति पाणिना ॥ यं यं वा भाषते वाचा सर्वे पूता भवन्ति ते ॥

## ❀ गायत्रीकवचम् ❀

अथ गायत्रीकवचम् । ॐमिति हृदये, भूरिति मुखे, भुवरिति शिरसि, सुवरिति सर्वाङ्गे । एवं विन्यस्य गायत्रीं ततो मुद्राः प्रदर्शयेत् । योनिमुद्रा सौरभेयी शङ्खमुद्रा तथैव च ॥ मुरसमुद्रा च विज्ञेयाः प्रधानाः परिकीर्तिताः । अथातो दर्शयेन्मुद्राः संमुखं संपुटं तथा ॥ ततो विततविस्तीर्णे द्विमुखं त्रिमुखं तथा । चतुर्मुखं पञ्चमुखं षण्मुखाधोमुखे ततः ॥ व्यापकाञ्जलिकाख्ये च शकटं तदनन्तरम् । यमपाशं च ग्रथितं ततः स्यात्सन्मुखोन्मुखम् ॥ प्रलम्बमुष्टिकामीनस्ततः कूर्मवराहकौ । सिंहाक्रान्तं महाक्रान्तं ततो मुद्गरपल्लवौ ॥ एतासां लक्षणं स एवाह–संमुखं संहतौ हस्तावुत्तानौ कुञ्चितांगुली । कुञ्चिता ईषद्वक्रा अग्रांगुलयो ययोरेषा, संमुखं नाम मुद्रा । सम्पुटं पद्मकोशाभौ करावन्योन्यसंहतौ । विततं संहतौ हस्तावुत्तानावायतांगुली ॥ आयताः प्रसारिताः अंगुलयो ययोरेषा, विततं नाम मुद्रा । विस्तीर्णं संहतौ पाणी मिथो मुक्तांगुलिद्वयौ । अन्योन्यं मुक्तमंगुलिद्वयं ययोस्तौ पाणी परस्परं संहतौ, विस्तीर्णं नाम मुद्रा । संमुखासक्तयोः पाण्योः कनिष्ठाद्वययोगतः । शेषांगुलीनां वैरल्ये द्विमुखत्रिमुखादयः ॥ मिथः संमुखासक्तयोः पाण्योः कनिष्ठाद्वययोगेन शेषांगुलिवैरल्ये अंगुष्ठद्वयमारभ्यानामिकान्तं यावद्द्विमुखादिमुद्रा भवन्ति । शेषांगुलीनां वैरल्ये पूर्वयोगविनाशनम् । तिर्यक्संयुज्यमानाग्रौ संयुक्तांगुलिमण्डलौ ॥ हस्तौ षण्मुखमित्युक्तं मुद्रा मुद्राविशारदैः । पूर्वयोगः कनिष्ठाद्वययोगः, तद्विनाशः इतरांगुलीनां संयोगात्तिर्यक् संयुज्यमानमग्रं ययोस्तौ, संयुक्तमंगुलीमण्डलं च ययोस्तौ हस्तौ, षण्मुखं नाम मुद्रा । आकुञ्चिताग्रौ संयुक्तौ न्युब्जौ हस्तावधोमुखम् । ईषद्वक्राग्रौ सक्रान्तौ न्युब्जौ हस्तौ अधोमुखम् ॥ नाम मुद्रा । उत्तानौ तादृशावेव व्यापकाञ्जलिकं करौ । तादृशौ संयुक्तौ उक्तलक्षणौ करौ, व्यापकाञ्जलिकं नाम मुद्रा । अधोमुखं बद्धमुष्टी मुक्ताग्रांगुष्ठकौ करौ । शकटं नाम कथितम् ॥ मुक्ताग्रांगुष्ठौ ययोस्तत्तलक्षणयोस्तौ करौ, शकटं नाम मुद्रा । बद्धमुष्टिकयोः पाण्योरुत्ताना वामतर्जनी । कुञ्चिताग्रान्यया युक्ता तर्जन्या न्युब्जवक्रया ॥ बद्धमुष्टिकयोरुपर्यधोभागेनावस्थितयोः पाण्योर्या

उत्तानाकुञ्चिताग्रा वामतर्जनी सा अन्यया दक्षिणतर्जन्या न्युब्जवक्रया युक्ता, यमपाशं नाम मुद्रा । उत्तानसंधिसंलीनबद्धांगुलितलौ करौ । संमुखौ घटितौ दीर्घांगुष्ठौ ग्रथितं मतम् ॥ उत्तानानि संधिसंलीनानि बद्धान्यंगुलितलानि ययोस्तौ पाणी, तथोक्तौ तावन्योन्यसंमुखौ घटितौ दीर्घांगुष्ठौ ययोस्तौ, ग्रथितं नाम मुद्रा । संचितोर्ध्वांगुलिर्वामस्तादृशा दक्षिणेन तु । अधोमुखेन संयुक्तः सन्मुखोन्मुखमुच्यते ॥ संचिताः संबद्धा ऊर्ध्वांगुलयो यस्य स तथोक्तः तादृशा दक्षिणेनाधोमुखेन करेण संयुक्तः, सन्मुखोन्मुखं नाम मुद्रा । उत्ताने त्युन्नते कोटी विलम्बः कथितः करौ । उत्ताने उन्नते कोटी ययोस्तौ, विलम्बो नाम मुद्रा । ( प्रलम्ब इति केचित्पठन्ति ) । मुष्टी चान्योन्यसंयुक्तावुत्तानौ मुष्टिको भवेत् । अन्योन्यसंयुक्तौ उत्तानौ, मुष्टिको नाम मुद्रा । मीनः स संमुखीभूतौ युक्तानामकनिष्ठिकौ । ऊर्ध्वसंयुक्तवक्राग्रौ शेषांगुलितलौ करौ ॥ युक्ते संबद्धे अनामिकाकनिष्ठिके, तावन्योन्यसंमुखीभूतौ ततोर्ध्वसंयुक्तानि वक्राणि शेषांगुलितलानि ययोस्तौ, मीनो नाम मुद्रा । अधोमुखः करो वामस्तादृशा दक्षिणेन तु । पृष्ठदेशसमाक्रान्तः कूर्मो नाम विधीयते ॥ अधोमुखो न्युब्जो वामहस्तः तादृशा दक्षिणकरेण पृष्ठदेशे युक्तः, कूर्मो नाम मुद्रा । ऊर्ध्वमध्यो वामभुजः कक्षाभ्याशाश्रये करे । वराहः कथ्यते—॥ कक्षसमीपाश्रये करे उक्तलक्षणो वामभुजः, वराहो नाम मुद्रा ।—सिंहाक्रान्तं कर्णाश्रितौ करौ ॥ कर्णद्वयाश्रितौ आयतांगुलिकौ करौ, सिंहाक्रान्तं नाम मुद्रा । किंचिदाकुञ्चिताग्रौ तु महाक्रान्तमतः परम् ॥ तावेव कुञ्चिताग्रौ, महाक्रान्तं नाम मुद्रा । ऊर्ध्वं किंचिद्गतौ पाणी मुद्गरो वामतर्जनी । ग्रस्ता दाक्षिणहस्तेन—॥ किंचिदूर्ध्वगतयोः पाण्योः वामतर्जनी दक्षिणहस्तेन गृहीता, मुद्गरो नाम मुद्रा । पल्लवो दक्षिणकरः । अधोमुखस्थितो मूर्ध्नि मुद्राणाम्, इत्युक्तलक्षणो मूर्ध्नि निहितो दक्षिणकरः अधोमुखः, पल्लवो नाम मुद्रा । एवंप्रकारेण मुद्राणां लक्षणमुक्तमित्यर्थः । अत्र **महासंहितायाम्**—न जातु दर्शयेन्मुद्रां महाजनसमागमे । क्षुभ्यन्ति देवतास्तस्य विफलं च कृतं भवेत् ॥ **व्यासः**—कृत्वा चैवेदृशं न्यासमशेषं पापनाशनम् । पश्चात्समाचरेद्ध्यानं वर्णरूपसमन्वितम् ॥ ध्यानस्वरूपमाह **गोभिलः**—प्रातर्गायत्री रविमध्ये स्थिता रक्तवर्णा कुमार्यक्षमालाहस्ता हंसमारूढा ब्रह्मदैवत्या ऋग्वेदमुदाहरन्ती, मध्याह्ने सावित्री रविमध्ये स्थिता श्वेतवर्णा युवतिः शूलहस्ता त्रिनेत्रा वृषभासनमारूढा रुद्रदैवत्या यजुः समुदाहरन्ती, सायं सरस्वती रविमध्ये स्थिता श्यामवर्णा वृद्धा चतुर्भुजा चक्रहस्ता सुपर्णासनमारूढा विष्णुदैवत्या सामवेदमुदाहरन्ती, एवं क्रमेण संध्यात्रये गायत्रीमावाह्य न्यस्य ध्यायेत् । **पितामहः**—गायत्री त्रिपदा ज्ञेया षट्कुक्षिः पञ्चशीर्षका । अग्निवर्णमुखी शुक्ला पुण्डरीकनिभेक्षणा ॥ ऋग्वेदः प्रथमः पादो यजुर्वेदो द्वितीयकः । सामवेदस्तृतीयस्तु चरणः पृथिवी स्मृता ॥ कैलासमलयावूरू अम्बरं त्वम्बुधिः स्मृतः । पूर्वा दिक् प्रथमा कुक्षिर्द्वितीया दक्षिणा मता ॥ पश्चिमा तु तृतीया स्याच्चतुर्थी चोत्तरा स्मृता ॥ ऊर्ध्वा दिक् पञ्चमी कुक्षिरधः षष्ठीति चोच्यते । पुराणं नाभिरित्युक्तं देव्याकारं जगत्स्मृतम् ॥ स्तनौ छन्दांसि हृदयं धर्मशास्त्रमकल्मषम् । बाहवो न्यायशास्त्रं तु कर्णौ सांख्यद्वयं तथा ॥ प्रथमं

शब्दशास्त्रं तु शिरः शिक्षा द्वितीयकम् । कल्पस्तृतीयमित्युक्तं चतुर्थं तु निरुक्तकम् ॥ ज्योतिषामयनं चैव पञ्चमं परमं विदुः । मीमांसालक्षणं तस्याश्रेष्ठा चाथर्वणी श्रुतिः ॥ ब्रह्मा मूर्धा शिखा रुद्रो विष्णुरात्मा हृदि स्थितः । विद्याविद्ये पुरः पश्चाद्वेदान्तो विमलं मनः ॥ सांख्यायनस्य गोत्रैषा सर्वलोकमहेश्वरी । इति । भरद्वाजः–स्नात्वा शुद्धः शुचौ देशे प्रक्षालितपदद्वयः । सपवित्रकरद्वन्द्वः कृतोपस्पर्शनो द्विजः ॥ त्रिः प्राणान् संयमेद्धीमान् रेचकादित्रयेण तु । रेचकः पूरकश्चैव तृतीयः कुम्भकः स्मृतः ॥ ऋषिश्छन्दो देवताश्च विनियोगं च वर्णकान् । तत्त्वानि शक्तिं बीजं च कृत्यं चाथ क्रमात्स्मरेत् ॥ अथ हस्ताङ्गकायेषु कुर्यान्न्यासत्रयं क्रमात् । दिग्बन्धनं ततः कृत्वा ध्यायेद्देवीं प्रसन्नधीः ॥ आयातित्यनुवाकेन हृदये वार्कमण्डले । देवीमावाह्य गायत्रीं ततो ध्यायेद्द्विजोत्तमः ॥ पञ्चवक्त्रा दशभुजा पङ्कभा चरणत्रया । त्रिपञ्चदृष्टियां सा स्याद्गायत्री परमेश्वरी ॥ वेदादिविद्याभूताशाभूधरार्केन्दवो जगत् । ब्रह्मविष्णुशिवाश्चास्याः प्रधानावयवा अमी ॥ ऋग्वेदः पूर्वचरणो यजुर्वेदो द्वितीयकः । सामवेदस्तृतीयस्तु चरणं पृथिवी स्मृता ॥ श्वेताद्रिमलयावूरू वासो रत्नाकरः स्मृतः । अष्टादशपुराणानि नाभिर्देव्याकृतिर्जगत् ॥ गर्भोन्तो मरुद्वक्षश्छन्दसां विचितिस्तनौ । हृदयं धर्मशास्त्राणि बाहवो न्यायविस्तरः ॥ शिरोधरा गिरिपतिः शीर्षाणि च पृथक् पृथक् । पूर्वं शिरः शब्दशास्त्रं शिरः शिक्षा द्वितीयकम् । शिरः कल्पस्तृतीयं च चतुर्थं च निरुक्तकम् ॥ पञ्चमं ज्योतिषं शीर्षं परमं परिकीर्तितम् । सितेतरगतिर्वक्त्रं वदनानीन्दुमण्डलम् ॥ समीरणश्च निःश्वासप्रसरो वासरो दृशः । कृष्णाभ्रपंक्तिरलका दोर्माला तिग्मदीधितिः ॥ रत्नाकल्पो ग्रहव्यूहो मीमांसालक्षणानि च । वेदान्तशास्त्रं विमलं मानसं तदुदीरितम् ॥ ब्रह्मा मूर्धा शिखा रुद्रो विष्णुरात्मा हृदि स्थितः। एतल्लक्षणसम्पन्ना गायत्रीति प्रकीर्तिता ॥ सांख्यायनस्य गोत्रैषा जगद्व्यापिलेश्वरी । एवं ध्यात्वा स्वहृत्पद्मकर्णिकामध्यमस्थले ॥ हैमे सिंहासने देवीं स्थितां ध्यायेत् द्विजोत्तमः । पद्मपीठेथ वाप्यूढे नानारत्नविभूषिते ॥ पद्मासनेथ वा सौम्ये तथा ध्यायेत्स्वचेतसा । पाद्यमाचमनं चार्घ्यं वस्त्रं यज्ञोपवीतकम् ॥ चन्दनं चाक्षतं पुष्पं धूपदीपौ निवेद्यकम् । करानुलेपं ताम्बूलं दत्त्वाथो जपमाचरेत् ॥ प्रदक्षिणप्रणामांश्च यथाशक्त्यथ कारयेत् । स्तुत्वाथ विविधैस्स्तोत्रैर्देवीमुद्वासयेत्ततः ॥ सर्वाण्यमूनि द्रव्याणि प्रोक्तानीहार्चनेधुना । एवं द्विजोत्तमः सम्यक् नियमेन समन्वितः ॥ यो ध्यानेनार्चयेद्देवीं सर्वाभीष्टं लभेत सः । योनेन ध्यानमार्गेण संजपेत द्विजोत्तमः ॥ तिस्रस्त्याश्रित्य वेदाम्बां स साक्षादीश्वरी स्मृतः । वेदाम्बिकां परित्यज्य गायत्रीं ये द्विजाधमाः॥ पठन्ति वेदांस्ते पापा भवेयुर्गर्दभस्वनाः । एतद्ध्यानं तु यः कुर्यात्सद्भक्त्या नियमेन तु ॥ स स्नातः सर्वतीर्थेषु कृतास्तेनाखिलाध्वराः । कृतानि सर्वदानानि भूदानप्रमुखानि च ॥ कृच्छ्रचान्द्रायणादीनि कृतान्युग्रतपांसि च । अन्यानि सर्वधर्माणि यानि पुण्यानि तानि च ॥ यथोदितक्रमेणैव समस्तानि कृतानि वै । द्विजस्य जप्यं ध्येयं च न गायत्र्याः परं परम् ॥ सर्वप्रकाराद्वेदेषु त्रिषु सत्यं न संशयः । प्रायः किं जल्पनैर्व्यर्थैर्भूयो भूयो विमोहनैः ॥ गायत्र्यास्तु परं नास्ति दैवतं

सद्विजन्मनाम्। अत्र **विश्वामित्रः**-देवस्य सवितुस्तस्य धियो यो नः प्रचोदयात्। भर्गो वरेण्यं तद्ब्रह्म धीमहीत्यर्थ उच्यते ॥ **अगस्त्यः**-यो देवः सवितास्माकं धियो धर्मादिगोचराः । प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे ॥ अनयोर्वचनयोर्भर्गशब्दः तेजःपरत्वेन यःशब्दश्च सवितृपरत्वेन च व्याख्यात । तथा **वरदराजीये**-नित्यमन्त्रव्याख्याने च तच्छब्दश्रुतेर्यच्छब्दोध्याहार्यः । सवितुः जगतां प्रसवितुः । सविता वै प्रसवानामीशे, उक्तोऽशिवे प्रसवस्य त्वमेकः । इत्यादिश्रुतेः । वरेण्यम्-वृञ् सम्भक्तौ ण्यप्रत्ययः, सर्वेषां सम्भजनीयम् । भर्गस्तेजः, भञ्जनाद्भर्गः, प्रकाशप्रदानेन जगतो बाह्याभ्यन्तरतमोभञ्जकत्वाद्भर्जनाद्वा, कालात्मकतया सकलकर्मफलपाकहेतुत्वाद्भरणाद्वा, वृष्टिप्रदानेन भूतानां भरणहेतुत्वात् । देवस्य द्योतमानस्य, धीमहि चिन्तयामः, ध्यै चिन्तायाम् । देवस्य सवितुर्वरेण्यं यद्भर्गस्तद्ध्यायामः आदित्यमण्डलान्तरवर्तिनं तेजोमयं पुरुषमनुचिन्तयामः । य एषोन्तरादित्ये हिरण्मयः पुरुषः, अथ य एष एतस्मिन् मण्डलेर्चिषि पुरुषः । इत्यादिश्रुतेः । धियो यो नः सविता अस्माकं, धियः हानोपादानविषयाणि ज्ञानानि, प्रचोदयात् प्रचोदयति-प्रवर्तयति, तत्सवितुस्तद्भर्गश्चिन्तयाम इति । **प्रपञ्चसारे** च-तदिति द्वितीयैकवचनम्, अनेनाखिलवस्तुनः सृष्ट्यादिकारणं तेजोरूपमादित्यमण्डले अभिप्रेयम्, सदानन्दं परब्रह्माभिधीयते ॥ **विश्वामित्रश्च**-आदित्यमण्डलासीनं रुक्माभं पुरुषं परम् । ध्यायन् जपेत्तादित्येषां निष्कामो मुच्यते द्विजः ॥ सप्रभं सत्यमानन्दं हृदये मण्डलेपि च । ध्यायन् जपेत्तादित्येतां निष्कामो मुच्यतेऽचिरात् ॥ स यश्चायं पुरुषे, यश्चासावादित्ये, स एकः इति ॥ ध्यानार्थे इत्यत्र जगत्कारणभूतं परंब्रह्म सर्वान्तर्यामी सूर्यमण्डलवर्ती तेजोमयः पुरुष इति व्याख्यातम् । स तु पुरुषः पुण्डरीकाक्ष एव । य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणीति श्रुतेः । कं जलं पिबतीति कपिः सूर्यः, तेन अस्यते विकास्यते इति कप्यासं, रविकरविकसितमित्यर्थः । तथान्तर्यामी पुरुषो नारायण एव । एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण इति श्रुतेः । एवं च सति सवितृमण्डलान्तर्वर्तिनः पुण्डरीकाक्षस्य सकलजगदाधारं विष्णुसंज्ञं यद्भर्गः तत्तेजश्चिन्तयाम इति सिद्धम् । अत्र **मैत्रावरुणीयश्रुतिः**-एतत्सवितुर्वरेण्यं ध्रुवमचलममृतं भर्गाख्यं विष्णुसंज्ञं सर्वाधारं धाम । इति । **योगयाज्ञवल्क्यश्च**-ईश्वरं पुरुषाख्यं च सत्यधर्माणमच्युतम् । भर्गाख्यं विष्णुसंज्ञं च ध्यात्वामृतमुपाश्नुते ॥ अनेन धीमहीति ध्यानविषयभूतो विष्णुरेवेति सिद्धम् । अत एवागस्त्यसनत्कस्मृतौ ध्येयो विष्णुरेवेति निश्चितम् ॥ आदित्यमण्डले ध्यायेत्परमात्मानमव्ययम् । विष्णुं चतुर्भुजं रक्तपङ्कजासनमध्यगम् ॥ किरीटहारकेयूरनूपुरैरुपशोभितम् । श्रीवत्सवनमालाश्रीतुलसीकौस्तुभोज्ज्वलम् ॥ हरिं पीताम्बरधरं शङ्खचक्रगदाधरम् । प्रसन्नवदनं रत्नकुण्डलैर्मण्डिताननम् ॥ सर्वरत्नसमायुक्तसर्वाभरणभूषितम् । एवं ध्यात्वा जपेन्नित्यं मन्त्रमष्टोत्तरं शतम् ॥ सर्वपापविशुद्धात्मा जितक्रोधो जितेन्द्रियः । संसारार्णवमुत्तीर्य परां सिद्धिमवाप्नुयात् ॥ इति । एवं गायत्र्या देवतात्वेन,

आदित्यमण्डलान्तर्वर्तिनः पुरुषोत्तमस्यैव ध्येयत्वनिर्धारणात्, अन्या देवतान्तरदेवतात्वाशा भिक्षो राज्ञः किरीटाशेव दुराशैव । अत्र भरद्वाजः—अथाहमर्थं गायत्र्याः प्रवक्ष्यामि यथातथम् । द्विजोत्तमानां सद्भक्त्या जपादीनि प्रकुर्वताम् ॥ विश्वासभक्तिजननं मन्त्रार्थज्ञानमुत्तमम् । तस्मादर्थं विजानीयादुक्तेन जपकृत् द्विजः ॥ विश्वासभक्तिभ्यां द्वाभ्यां जपादीनां महत्तरम् । फलं भवेज्जपकृतामिति वेदेषु भाषितम् ॥ पदानि दश मन्त्रस्य तदादीनि यथाक्रमम् । पदप्रत्ययनिष्पत्तिसुस्पष्टं क्रियतेऽत्र तु ॥ तदिति द्वितीयैकवचनम् । अनेन अखिलजगदुत्पत्तिस्थितिलयकारणभूतं उपनिषदि कथ्यमानं निरुपमं तेजः, सूर्यमण्डलाभिध्येयम् परब्रह्माभिधीयते । सवितुरिति षष्ठ्येकवचनम्, षूञ् प्राणिप्रसवे इत्यस्य धातोरेतद्रूपम्. सर्वभूतजातस्य प्रसवितुरित्यर्थः । वरेण्यम् वरणीयं प्रार्थनीयम्, नियमादिभिरपहतकल्मषैः संततं ध्येयम् । भर्गः भञ्जो आमर्दने, भृज् भञ्जने, इत्येतयोर्धात्वोः,भजतां पापभञ्जनहेतुभूतमित्यर्थः । भा दीप्तौ, इत्येतस्य धातोर्वा भर्गस्तेज इत्यर्थः । देवस्य वृष्टिदानादिगुणयुक्तस्य, निरतिशयस्येत्यर्थः, दिव्यतेजःप्रकाशत्वात् । धीमहि ध्यै चिन्तायाम्, निगमनिरुक्तविद्यारूपेण चक्षुषा, योसावादित्ये हिरण्मयः पुरुषोहमिति चिन्तयामः । धिय इति द्वितीयाबहुवचनम्, य इति छान्दसत्वाल्लिङ्गव्यत्ययः । यत्सवितुर्देवस्य वरेण्यं श्रेष्ठमस्माभिरभिध्यातम्, भर्गो भजतां पापभंजनहेतुभूतम्, नः अस्माकम्, धियः बुद्धीः, श्रेयस्करेषु कर्मसु, प्रचोदयात् प्रेरयेदित्यर्थः । एषा जप्ता तु गायत्री सर्वपापप्रणाशिनी । विज्ञातव्या प्रयत्नेन द्विजैः सर्वशुभेप्सुभिः ॥ जपस्यानन्तरं व्याख्या स्मर्तव्याहरहर्द्विजैः । स्मरणात्सर्वपापानि प्रणश्यन्ति न संशयः ॥ अत्र सवितृशब्दं निराहाहिर्बुध्न्यः प्रसौति सकलां चेष्टामित्यादि ॥ लौहित्यनीलकण्ठेन च निरुक्तं मन्त्रदीपिकायाम्—तच्छब्देन भर्गो विशेष्यते, भर्ग इति तेजःपदार्थकं सवितृसंबधि । देवस्य सवितुस्तेजो वरेण्यं भर्गसंज्ञितम् । ध्यायेमहीतिशब्दोक्तो धीमहीत्यर्थ उच्यते ॥ यः शब्दश्च यदित्यर्थे लिङ्गव्यत्ययतो भवेत् । इति । एवं सवितृशब्दस्य जगत्कारणभूतपरमात्मपरत्वनिश्चयात्, भर्गशब्दस्य तेजोवाचित्वनिर्धारणात्, विश्वामित्रागस्त्यादिस्मृतिषु प्रपञ्चसारे मन्त्रव्याख्यानेषु च भर्गशब्दस्य बहुधार्थप्रतिपादनेपि रुद्रपरत्वानाघ्राणात्, इयं गायत्री परमात्मपरैवेति सिद्धम् । अन्यत्र भक्तिवादात् । किंच " ध्यात्वा मन्त्रार्थमेव च । अनुष्ठानं ततः कुर्यात् " इति पितामहवचनात्, " जपस्यानन्तरं व्याख्या स्मर्तव्या " इति भरद्वाजस्मरणाच्च । जपाद्यन्तयोर्गायत्र्यर्थोनुसंधेयः, मनःप्रसादहेतुत्वादातिशयसम्भवाच्च । किंच, ऋष्यादिस्मरणं—ब्रह्मादोत्रिर्वासिष्ठश्चेति पद्यरूपेण न कार्यम्, तत्राव्ययविशेषणबाहुल्यात् । नहि तत्स्मरणं विहितम् । नापि " प्रथममाग्नेयम् " इति गायत्रीहृदयोक्तप्रकारेण, तद्धितान्ताग्नेयादिशब्दानामर्थान्तरपरत्वेन प्रकृत्यर्थदेवतामात्रप्रचित्वाभावात् । अत्र भरद्वाजः—आरम्भे सर्वमन्त्राणामृषिं छन्दोधिदैवतम् । विनियोगं शक्तिबीजे स्मृत्वाथो जपमाचरेत् ॥ अत्र ब्राह्मणम्—यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण जपति याजयति वा-ऽध्यापयति वा स स्थाणुत्वमृच्छति गर्ते वा पद्यते प्रवामीयते पापीयान् भवति यात-

यामान्यस्य छन्दांसि भवन्ति, अथ यो वेदमन्त्रे स श्रेयान् भवति सर्वमायुरेत्य यातयामान्यस्य छन्दांसि भवन्ति, तस्मादेव मन्त्रे मन्त्रे विद्यादिति ॥ किंच । करयोर्देहे चाक्षराणि न्यस्य पदन्यासं कृत्वा, षडङ्गानि न्यसेत् । इति भरद्वाजः । षडङ्गन्यासपादन्यासपदन्यासानन्तरमक्षरन्यासः ॥ इति पितामहादयः प्राहुः । करन्यासे च, आदितो वामतर्जन्या इति कश्चित्क्रमः । आरभ्य दक्षिणांगुष्ठादासव्यांगुष्ठमूलतः । उत्पत्तिरङ्गमन्त्राणां विपर्यासेन संहृतिः ॥ आकनिष्ठांगुलेः पाण्योरंगुष्ठादिरनुष्ठितः । भवेदेषोऽङ्गमन्त्राणां स्थितिर्नामममहोदयः ॥ इत्युक्तं प्रकारान्तरम् । एवमादिषु यथोपदेशमनुष्ठेयम् । किं चेदं किंचिच्चिन्त्यते । संध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ॥ इति वचनादुदयानन्तरमासीतेति चेन्न, "अग्निकार्यं ततः कुर्यात्" इत्युदयानन्तरकर्तव्यहोमविधिपरत्वात्, उदयानन्तरमासीतेति वचनाभावाच्च । अर्थसिद्धमासनमिति चेन्न, "आसीनः पश्चिमां संध्याम् । जपन्नासीत सावित्रीम् । प्रत्यञ्चौ तारकोदयात्" इत्यादिभिः पश्चिमायामेवासनविधानात्, अन्यत्र स्थितेरर्थसिद्धेर्वचनसिद्धत्वाच्च ॥ अत्र श्रुतिः–प्रातस्तिष्ठन्निति । प्रातरित्युपलक्षणम्, आदित्याभिमुखस्य सदा स्थितिविधानात् । अत्र मनुः–पूर्वां संध्यां जपंस्तिष्ठन् नैशमेनो व्यपोहति । पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम् ॥ **भरद्वाजसंवर्तव्यासाः**–सहस्रपरमां देवीं शतमध्यां दशावराम् । गायत्रीं वै जपेद्विद्वान् प्राङ्मुखः प्रयतः स्थितः ॥ **योगयाज्ञवल्क्यः**–उभाभ्यां हस्ताभ्यां प्रसृताञ्जलिभ्यां प्रणवव्याहृतिपूर्वया त्रिपदया मन्त्रिता आप आदित्याभिमुखस्तिष्ठन्नूर्ध्वं त्रिः संध्ययोः प्रक्षिप्य प्रदक्षिणीकृत्य तत्र प्रातस्तिष्ठन् संध्यामुपासीतेति ॥ **मनुश्च**–उत्थायावश्यकं कृत्वा कृतशौचः समाहितः । पूर्वां संध्यां जपेत्तिष्ठन् स्वकाले चापराह्णिकम् ॥ **अखण्डादर्शे**–वाग्यतः प्राङ्मुखस्तिष्ठन् गायत्र्या जपमाचरेत् । प्राक्कूलेषु ततः स्थित्वेति च ॥ एतेषु वचनेषु, उदयात्पूर्वापरभावविरहात्, प्रातःकालस्थितिपरत्वात्, असति विशेषोपस्थापके सामान्यसंकोचस्यायुक्तत्वाच्च तिष्ठन्नेव गायत्रीं जपेत् । अत्र **स्मृत्यन्तरे** विशेषः–तथा मध्यमसंध्यायामासीनः प्राङ्मुखो जपेत् । स्थितो जपेत्सदा कालमादित्याभिमुखो द्विजः ॥ जपे पुनरादित्याभिमुखश्चेत्, सदाकालम् प्रातर्मध्याह्नेऽन्तरा च सर्वस्मिन् काले, स्थित एव गायत्रीं जपेदित्यर्थः । तस्मात्कुशबृस्यामासीनः कुशोत्तरायां वाक्षमालामादाय देवीं शतकृत्व आवर्तयेत् । सहस्रकृत्वो वा अपरिमितकृत्वो वेति मार्कण्डेयादिवचनम् सूर्याभिमुखत्वविषयम्, अशक्तविषयम्, देवताभिमुख्यविषयं वेत्यविरोध इत्यलम् । **व्यासः**–तुरीयं तु पदं तस्याः परे ब्रह्मणि संस्थितम् । उपस्थाय तुरीयेण जपेत्तां तु समाहितः ॥ गायत्र्यास्तु तुरीयस्य ऋषिर्विमल उच्यते । छन्दस्तुरीयगायत्री परमात्मा तु देवता ॥ **भरद्वाजः**–मार्गे पदानि विस्त्वेव तुरीयं पदमव्ययम् । ब्रह्मणो याति सायुज्यं पदं ज्ञात्वा तुरीयकम् ॥ अत्र तुरीयपदमुपदेशलभ्यमिति न लिख्यते । तस्याष्टवेवाक्षराणि, चत्वारि पदानि, मा प्रापदित्येताभ्यां सह पद्पदानीति षडङ्गानि स्युः । योनिमुद्रा सौरभेयी महायोनिस्तथैव च ॥ सुरभ्यजा लिंगमुद्रा महामुद्रा नमस्क्रिया । ध्यानम्–शुद्धे स सुर-

पूजितारुणनिभं सोमार्कतारागणैः पुन्नागाम्बुजनागपुष्पबकुलैर्न्यस्तैः सुरैरर्चितम् । नित्यं ध्यानसमस्तयोगकरणं कालाग्निरुद्रोपमं तत्संहारकरं नमामि सततं पातालपद्मं मुखम् ॥ प्रथमं तुरीयगायत्रीं जपित्वा तेन गायत्रीमुपस्थाय अभिमुखीकृत्य ततो गायत्रीं जपेत् । प्रातर्मध्याह्ने गायत्रीमासीनो न जपेत्, प्रत्यवायस्मरणात् । तथा **दक्षः**—प्रातर्मध्याह्नकाले च गायत्रीं तु स्थितो जपेत् । आसीनस्तु जपन्विप्रः पंगुतां याति तत्क्षणात् ॥ **यमः**—आसीनस्तु जपन्विप्रो मध्याह्ने प्रातरेव च । पंगुतां याति विप्रेन्द्र जन्मान्तरशतेष्वपि ॥ **गार्ग्यः**—तिष्ठन्नेव जपेद्देवीं गायत्रीं वेदमातरम् । अन्यथा कुरुते यस्तु ब्रह्महत्यां स विन्दति ॥ कालद्वये स्थितो देवीं गायत्रीमभ्यसेद्द्विजः ॥ आसीनस्त्वभ्यसेद्यस्तु स याति नरकं ध्रुवम् ॥ सायमासीन एवं तु जपेद्वै वेदमातरम् ॥

## ❀ जपविधिः ❀

अथ जपविधिः ॥ अत्र **मनुः**—आचम्य प्रयतो नित्यमुभे संध्ये समाहितः । शुचौ देशे जपञ्जप्यमुपासीत यथाविधि ॥ **शङ्खः**—सर्ववर्णपदैर्वाक्यं शुद्धमावर्तयञ्जपेत् । न कम्पयेच्छिरोग्रीवं दन्तान्नैव प्रवेदयेत् ॥ (प्रकाशयेदिति पाठान्तरम्) । तच्च वाक्यं **मनूक्तम्**—एतदक्षरमेतां च जपन् व्याहृतिपूर्वकम् । संध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥ एतदक्षरम् प्रणवः, एताम् गायत्रीम्, तयोरेव प्रकृतत्वात् । **व्यासः**—प्रणवव्याहृतियुतां गायत्रीं तु ततो जपेत् ॥ एवं मनुव्यासाभ्यामुक्तो जपप्रकारो गृहस्थविषय एव । तथा **बोधायनः**—प्रणवो व्याहृतयः सावित्री चेत्येते पञ्च ब्रह्मयज्ञा अहरहर्ब्राह्मणं किल्बिषात्पावयन्त इति ॥ अत्र संख्यानियमेन व्याहृतिमध्ये व्याहृत्यनन्तरं गायत्र्याद्यन्तयोश्च प्रणवप्रयोगो व्यवच्छिद्यते । दीर्घगायत्रीजपे गायत्र्यादौ प्रणवप्रयोगस्तु श्रुतिसिद्धः । अनेन व्याहृत्यनन्तरं प्रणवप्रयोगे, द्विप्रणवत्वेन गृहस्थादिगायत्र्यनन्तर्भावेन निरर्थक एव जपः स्यात्, किंच—त्रिकेणैव जपेन्मन्त्रो जपयज्ञप्रसिद्धये । इति व्यासेन प्रणवो व्याहृतयः सावित्री चेति त्रिकस्यैव जप्यत्वविधानात् ॥ प्रणवं व्याहृतीस्तिस्रो गायत्रीं च जपेत्क्रमात् । इति जपक्रमनियमाच्च । ॐ भूर्हृदि तु विन्यस्य भुवः शिरसि विन्यसेत् । इति न्यासविधायकदक्षवचने प्रथममेव प्रणवप्रयोगाच्च । प्रणवो भूर्भुवः स्वश्च गायत्री च तृतीयका । इति मार्जने तथैव दर्शनाच्च । प्रणवव्याहृतियुताः स्वाहान्ता होमकर्मणि ॥ इति होमे पितामहेनादावेव प्रणवोपदेशाच्च । प्रणवव्याहृतिपूर्वया गायत्र्याभिमन्त्र्यापः ॥ इति भरद्वाजेन अर्घ्यदाने क्रमनियमाच्च, जपादिषु सर्वत्र ब्रह्मचारिगृहस्थयोरेकप्रणवैव गायत्री ग्राह्या । **स्मृतिसारसमुच्चये**—संपुटैका षडोंकारा गायत्री त्रिविधा मता । तत्रैकप्रणवा ग्राह्या गृहस्थैर्जपकर्मणि ॥ संपुटा च षडोंकारा यतीनामूर्ध्वरेतसाम् । गृहस्थवत्तु जप्तव्या गायत्री ब्रह्मचारिभिः ॥ संपुटा एकप्रणवा षडोंकारेति त्रिविधैव गायत्री । तत्र, एकप्रणवैव गृहस्थव्रतिनोः । गृहस्थो ब्रह्मचारी च प्रणवाद्यामिमां जपेत् । अन्ते यः प्रणवं कुर्यान्नासौ सिद्धिमवाप्नुयात् ॥ इति वचनाच्च । सम्पुटमाह—**योगयाज्ञवल्क्यः**—ओंकारं पूर्वमुच्चार्य भूर्भुवः

स्वरस्तथैव च । गायत्रीं प्रणवं चान्ते जप एवमुदाहृतः ॥ एषा संपुटगायत्री सर्वपापप्रणाशिनी । **बोधायनश्च**—उभयतःप्रणवां सव्याहृतिकामिति । **मनुः षडोंकारमाह**—षडोंकारां जपन् विप्रो गायत्रीं मनसा शुचिः । अनेकजन्मजैः पापैर्मुच्यते नात्र संशयः ॥ तिस्रो व्याहृतयः पूर्वं पृथगोंकारसंयुताः । पुनः संहृत्य चोंकारं मन्त्रस्याद्यन्तयोस्तथा ॥ एतया ज्ञातया नित्यं वाङ्मयं विदितं भवेत् । उपासितं भवेत्तेन विश्वं भुवनसप्तकम् ॥ एतया त्रिरूपया गायत्र्या । **नृसिंहपुराणे**—त्रिविधो जपयज्ञः स्यात्तस्य भेदं निबोधत । वाचिकाख्य उपांशुश्च मानसस्त्रिविधः स्मृतः ॥ त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः । यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः । मन्त्रमुच्चारयेद्विद्वान् जपयज्ञः स वाचिकः ॥ शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयन् । किंचिच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः ॥ **श्रीविष्णुधर्मोत्तरे**—धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् । मन्त्रार्थचिन्तनाभ्यासो मानसो जप उच्यते ॥ **वैयाघ्रपादः**—यो भवेदचलज्जिह्वादशनावरणो जपः । स मानसः समाख्यातो जपः श्रुतिविभूषणैः ॥ **व्यासः**—जपस्तु त्रिविधः प्रोक्तः स तूच्चोपांशुमानसः । उच्चादुपांशुरुत्कृष्ट उपांशोरपि मानसः ॥ ओष्ठस्पन्दनमात्रेण यत्तूपांशु तदध्वनि । कृत्वा जिह्वां निर्विकल्पां चिन्तयेत्तद्धि मानसम् ॥ **शौनकः**—कृत्वोत्तानौ करौ प्रातः सायं चाधोमुखौ करौ । मध्ये स्कन्धभुजाभ्यां तु जप एवमुदाहृतः ॥ अंगुलीर्न वियुञ्जीत किंचिदाकुञ्चिते तले । अंगुलीनां वियोगे तु च्छिद्रेषु स्रवते जपः ॥ **स्मृत्यन्तरे**—अधोहस्तस्तु पैशाचो मध्यहस्तस्तु राक्षसः । बद्धहस्तस्तु गान्धर्वं ऊर्ध्वहस्तस्तु दैवतः ॥ अतः स्कन्धभुजयोर्मध्ये करौ कृत्वा जपः कार्य इत्यर्थः । **ब्रह्मा**—मनःप्रहर्षणं शौचं मौनं मन्त्रार्थचिन्तनम् । अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतवः ॥ **भरद्वाजः**—निष्ठीवजृम्भणक्रोधनिद्रालस्यक्षुधामदाः । पतितश्चान्त्यजा लोका दर्शिते जपवैरिणः ॥ **व्यासः**—न चक्रमन्न च हसन् न पार्श्वमवलोकयन् । नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ॥ न पदा पादमाक्रम्य न चैवहि तथा करौ । न चासमाहितमना नच संश्रावयञ्जपेत् ॥ अपाश्रितः स्तम्भादीन् श्रितः । तथा करौ, हस्ते हस्तं कृत्वा न जपेदित्यर्थः । होमः प्रतिग्रहो दानं भोजनाचमने जपः । बहिर्जानु न कार्याणि सांगुष्ठानि सदा चरेत् ॥ **सुमन्तुः**—नार्यो रतिर्नान्यमना नच व्यत्यस्तपत्करः । अपवित्रकरो नग्नः शिरसि प्रावृतोपि वा ॥ प्रलपन्वा जपेद्यावत्तावन्निष्फलतामियात् । खण्डवस्त्रावृतस्यैव वस्त्रार्धालम्बिनस्तथा ॥ उत्तरीयव्यतीतस्य समस्ता निष्फलाः क्रियाः । **नारदश्च**—श्वशूद्रपतितांश्चैव रासभं च रजस्वलाम् । दृष्ट्वा तोयमुपस्पृश्याभाष्य स्नात्वा पुनर्जपेत् ॥ प्रचारे मैथुने होमे प्रस्रावे दन्तधावने । स्नानभोजनजप्येषु मौनं कुर्यात्तथाष्टसु ॥ **चन्द्रिकायाम्**—जपकाले न भाषेत व्रतहोमादिकेषु च । एतेष्वेवावसक्तं तु यद्यागच्छेद्द्विजोत्तमः ॥ अभिवाद्य ततो विप्रं योगक्षेमं च कीर्तयेत् । धावतस्तिष्ठतश्चैव स्वेच्छया कर्म कुर्वतः ॥ संख्यां चैवोपवीतेन जपहोमादि [illegible]

इति गायत्रीव्यतिरिक्तमन्त्रविषयम् । तत्र स्थितेरेव विधानात् । **यत्विदं मानवम्**–आर्द्रवासास्तु यः कुर्याज्जपहोमप्रतिग्रहम् । सर्वं तद्राक्षसं विद्याद्बहिर्जानु च यत्कृतम् ॥ इति । एतत्स्थलविषयम् ॥ यदि स्यात्क्लिन्नवासा वै वारिमध्यगतो जपेत् । अन्यथा तु शुचौ भूम्यां दर्भेषु सुसमाहितः ॥ इति व्याससमरणात् । यत्तु **गोभिलोक्तम्**–मतिमान् न कदाचित्तु गायत्रीमुदके जपेत् । गायत्र्यग्निमुखी प्रोक्ता तस्मादुत्तीर्य तां जपेत् ॥ इदं सर्वदा जले गायत्रीजपनिषेधपरम् । अतो व्यासवचनमापद्विषयम् । **व्यासः**–चण्डालाशुचिपतितान् दृष्ट्वाचम्य पुनर्जपेत् । तैरेव भाषणं कृत्वा स्नात्वाचम्य पुनर्जपेत् ॥ अशुचयः श्वशूद्रोदक्याशौचिप्रभृतयः । **शाण्डिल्यः**–प्रदक्षिणे प्रणामे च पूजायां हवने जपे । न कण्ठावृतवस्त्रः स्याद्दर्शने गुरुदेवयोः ॥ आचार्यमेकभक्तं च भगवन्मंदिरं जलम् । अश्वत्थमग्निमर्कं च पृष्ठीकृत्य जपेन्न तु ॥ (**यमः**–अश्वत्थमग्निमर्कं च सोमं गुरुमथो जलम् । पृष्ठीकृत्य जपन्विप्रो याति स्थावरतां ततः ॥) नाभेरधः स्वकायं तु स्पृष्ट्वा प्रक्षालयेत्करम् । दक्षिणं वा स्पृशेत्कर्णं स्मरेद्वा विष्णुमव्ययम्॥ नाभेरधः स्पर्शनं तु कर्मयुक्तो विवर्जयेत् । इति **मरीचिः** । **योगयाज्ञवल्क्यः**–यदि वाग्यमलोपः स्याज्जपादिषु कथंचन । व्याहरेद्वैष्णवं सूक्तं स्मरेद्वा विष्णुमव्ययम् ॥ **शौनकः**–पूर्वां संध्यां जपंस्तिष्ठेदुपासीनस्तु पश्चिमाम् । न चान्तरा व्याहरेद्वा विरमेद्वा कथंचन ॥ **कौर्मे**–गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं यतः । एकान्ते शुभदे देशे तस्माद्गुप्तं जपेद्बुधः ॥ **अङ्गिराः**–प्रच्छन्नानि च दानानि ज्ञानं च निरहंकृतम् । जप्तानि च सुगुप्तानि तेषां फलमनन्तकम् ॥ **योगयाज्ञवल्क्यः**–गृहे त्वेकगुणं प्रोक्तं नद्यादौ द्विगुणं भवेत् । गवां गोष्ठे दशगुणमग्न्यगारे शताधिकम् ॥ सिद्धक्षेत्रेषु तीर्थेषु देवतानां च सन्निधौ । सहस्रशतकोटिः स्यादनन्तं विष्णुसन्निधौ॥ **नारदः**–असंख्यातात्तु संख्यातः सहस्रगुण उच्यते । संख्यातादपि साहस्र ऊर्ध्वपुण्ड्राङ्कितो जपः ॥ **व्यासः**–दर्भहीना तु या संध्या यच्च दानं विनोदकम् । असंख्यातं तु यज्जप्तं तत्सर्वं स्यान्निरर्थकम्॥ दर्भोदकसंख्यायोगे यत्पूर्णं फलं तन्नास्तीत्यर्थः । **श्रीविष्णुपुराणे**–वासुदेवे मनो यस्य जपहोमार्चनादिषु । तस्यान्तरायो मैत्रेय देवेन्द्रत्वाधिकं फलम् ॥ **नारदः**–जपमालाविधिं वक्ष्ये वर्णानामानुपूर्वशः । कुशग्रन्थिर्जपेद्विप्रः सुवर्णमणिभिर्नृपः ॥ पुत्रजीवफलैर्वैश्यः पद्माक्षैः सर्व एव वा । मोक्षार्थी पञ्चविंशत्या धनार्थी त्रिंशता जपेत् ॥ पुष्ट्यर्थी सप्तविंशत्या पञ्चदश्याभिचारके । जपस्य गणनां प्राहुः पद्माक्षैर्भक्तिवर्धनम्॥ जपेत्तु तुलसीकाष्ठैः फलमक्षय्यमुच्यते । अथांगुलिभिरेवापि जपमन्वहमाचरेत् ॥ **दक्षः**–मण्यन्तरे ग्रन्थ्यभावान्मिथः संघर्षणात्तयोः । तेनैव जपनाशः स्याद्ग्रन्थिं कुर्यात्ततः शुभम् ॥ तर्जन्या न स्पृशेन्मालां नखैश्च न कदाचन । मध्यमायां समास्ज्य त्वंगुष्ठेन विवर्तयेत् ॥ **भरद्वाजः**–अप्रतिष्ठितमाला या सा जपे निष्फला स्मृता । तस्मात्प्रतिष्ठा कर्तव्या जपस्य फलमिच्छता ॥ जपे मोक्षप्रदोंगुष्ठो मध्यायुःपुष्टिवृद्धिदा । समस्ताभीष्टफलदानामिका मारणादिषु ॥ क्षुद्रकर्मसु सर्वेषु तर्जनी तत्फलप्रदा । एतत्सर्वं जपान्तरविषयम् । पर्वभिस्तु जपेद्देवीं नाक्षमालादिभिस्तथा ॥ गायत्र्या वे-

दमातृत्वाद्वेदः पर्वसु गीयते ॥ इति स्मृतेः । अत्र **भरद्वाजः**–प्रणवस्य व्याहृतीनां गायत्र्याश्च जपे भृशम् । श्रेष्ठा कुशाक्षमाला स्यात्समस्तानां जपस्रजाम् ॥ जपसंख्या च विज्ञेया पद्माक्षांगुलिपर्वभिः । मुखमारभ्य पृष्ठान्तं जप्त्वा पश्चात्प्रदक्षिणम् ॥ भ्रामयित्वा पुनर्वक्त्रं आरभ्य जपमाचरेत् । अयमेव समाख्यातो जपमालाजपक्रमः ॥ न वामेन स्पृशेन्मालां करेण ब्राह्मणः क्वचित् । करे कण्ठेथ वांगुष्ठे धारयेन्न कदाचन ॥ अन्याक्षमालयैतानि मन्त्राणि न जपेद्बुधः । नान्येषामन्यमन्त्राणां जपकर्मार्थमर्पयेत् ॥ **ब्रह्मा**–तर्जन्या न स्पृशेत्सूत्रं कम्पयेन्न च धूनयेत् । अंगुष्ठस्य तु मध्यस्थे परिवर्तनमाचरेत् ॥ मध्ययाकर्षणं तस्य सर्वसिद्धिप्रदायकम् । नान्यांगुलिभिराकर्षेन्न नखैश्च तथा स्पृशेत् ॥ उल्लङ्घिते तथा मेरौ पतिते चाक्षसूत्रके । प्राणायामशतं कृत्वा घृतप्राशनमाचरेत् ॥ तर्जनीं वर्जयेद्विप्र आचामेद्दन्तधावने । जपे च होमकाले च प्रणायामे विशेषतः ॥ **शङ्खः**–आरभ्यानामिकायास्तु मध्यमे पर्वणि क्रमात् । तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु ॥ अनामामूलमारभ्य प्रादक्षिण्यक्रमेण तु । मध्यमामूलपर्यन्तं जपेद्दशसु पर्वसु ॥ **भरद्वाजः**–मध्यांगुलेर्मध्यरेखां समारभ्य प्रदक्षिणम् । मध्यमामूलपर्यन्तमंगुष्ठेन यथाक्रमम् ॥ स्पृष्टैर्द्वादश संख्या स्यादेकधारेण तत्र वा । वामहस्तेन संख्यातं शतमष्टोत्तरं स्मृतम् ॥ अत्र पक्षत्रये यथोपदेशमनुष्ठेयम् । मध्यमांगुलिमूलेन यत्पर्वद्वितयं भवेत् ॥ तं वै मेरुं विजानीयाज्जपे तन्नातिलङ्घयेत् । **पितामहः**–( पर्वस्वेव जपेद्देवीं पवित्रां वेदमातरम् । नाक्षमालादिभिर्नित्यमित्याह भगवान्मनुः ) ॥ गायत्री त्रिपदा ज्ञेया चतुष्पादा षडक्षरा । जपे तु त्रिपदा प्रोक्ता ह्यर्चने तु चतुष्पदा ॥ एवमुक्तत्वात्प्रतिपदं विच्छिद्य जपः कार्यः । अविच्छेदे तु–अच्छिन्नपादा गायत्री ब्रह्महत्यां प्रयच्छति । भिन्नपादा तु गायत्री ब्रह्महत्यां व्यपोहति ॥ इति मत्स्यवायुस्मृतेः ॥ **चन्द्रिकायाम्**–उष्णीषी कंचुकी नग्नो मुक्तकेशो गलावृतः । अशुचिरपवित्रकरः प्रलपन्न जपेत्क्वचित् ॥ एकवस्त्रो न भुञ्जीत न कुर्याद्देवतार्चनम् । न कुर्यात्पितृकार्याणि दानं होमं जपं तथा ॥ **योगयाज्ञवल्क्यः**–ब्रह्मचार्याहिताग्निश्च शतमष्टोत्तरं जपेत् । वानप्रस्थो यतिश्चैव सहस्रादधिकं जपेत् ॥ तयोरनग्निकत्वेन होमकालातिपत्तेरिति भावः । आहिताग्निग्रहणमेकाग्नेरप्युपलक्षणम्, तस्याप्युदयानन्तरहोमविधानात् । **संवर्तः**–गृहस्थो ब्रह्मचारी च शतमष्टोत्तरं जपेत् । वानप्रस्थो यतिश्चैव जपेदष्टसहस्रकम् ॥ **भरद्वाजः**–अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा । जप्त्वाष्टाविंशतिं वापि बीजशक्तिक्रमाज्जपेत् ॥ अत्र विशेषमाह **योगयाज्ञवल्क्यः**–सहस्रकृत्वः सावित्रीं जपेदव्यग्रमानसः । शतकृत्तोपि वा सम्यक्प्राणायामपरो यदि ॥ सव्याहृतिपूर्वां चेदाद्यन्तप्रणवान्विताम् । मनसा वा जपेच्चैव दशकृत्वो वरः स्मृतः ॥ सहस्रजपवत्साङ्गाष्टोत्तरशतजपवत् सव्याहृतिपूर्वां शिरसा युक्तां गायत्रीं जपेद्यदि, एष दशकृत्वोपि जपो मुख्य इत्यर्थः । एवं संख्याविकल्पः अनेनाभिप्रायेण द्रष्टव्यः, गृहस्थसंन्यासिविषयभेदेन वा, कालशक्त्यपेक्षया वा । **ब्रह्मा**–गायत्र्या न परं जप्यं गायत्र्या न परं तपः । गायत्र्या न परं ध्यानं गायत्र्या न परं हुतम् ॥ **विश्वामित्रः**–त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।

तदित्यृचो स्यात्सावित्र्याः परमेष्ठी प्रजापतिः ॥ तदित्यृचः समो नास्ति मन्त्रो वेदचतुष्टये । सर्वे वेदाश्च यज्ञाश्च दानानि च तपांसि च ॥ समानि कलया प्राहुर्मुनयो न तदित्यृचः । **संवर्तः**–गायत्रीमात्रसारोपि परो विप्रः सुयन्त्रितः । नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥ **ब्रह्मा**–गायत्रीं विस्तराद्दिव्यां यः पठेत शृणोति वा । मुच्यते सर्वपापेभ्यः परं ब्रह्माधिगच्छति ॥ **विश्वामित्रः**–प्रणवे नित्ययुक्तस्य व्याहृतीषु च सप्तसु । त्रिपदायां च गायत्र्यां न भयं विद्यते क्वचित् ॥ वेदाध्ययनहीनोपि श्रद्दधानो जितेन्द्रियः । आचारयुक्तो विप्रस्तु पुण्यां गतिमवाप्नुयात् ॥

## ❀ गायत्रीपुरश्चरणक्रमः ❀

पुरश्चरणक्रममाह भरद्वाजः–अथैतस्याः प्रवक्ष्यामि गायत्र्याः साधनक्रमम् । असाधितं यतन्मन्त्रं प्रयोगे निष्फलं भवेत् ॥ तस्माद्विध्युक्तमार्गेण साधयित्वा द्विजोत्तमः । ततः प्रयोजयेन्मन्त्रमभीष्टफलदं भवेत् ॥ ऋषींश्छंदांसि देवांश्च वर्णतत्वानि यत्नतः । मुद्रांश्च विनियोगं च बीजशक्त्यासनानि च ॥ स्थानं कालं च तद्ध्यानं यथावद्गुरुवक्त्रतः । अधिकृत्य ततो विप्रो मन्त्रमेतत्पुरश्चरेत् ॥ ब्रह्मा मूर्धा शिखा रुद्रो विष्णुर्हृदयसंस्थितः । उपनयने विनियोगो गोत्रं सांख्यायनस्य च ॥ ज्ञात्वैतानि शुचिर्मौनी शुद्धभिक्षाशनः सकृत् । स त्रिकालाप्लवो मन्त्रं जपेद्द्वादशलक्षकम् ॥ कृतादिकलिपर्यन्तं क्रमाल्लक्षत्रयं प्रथम् । युगं प्रत्येवमारोप्य पुरश्चरणमाचरेत् ॥ पापण्डाद्यैर्न संभाष्यं भोज्यं हव्यं मितं सकृत् । पुरश्चरणमेतद्धि गायत्र्याः परिकीर्तितम् ॥ कृत्वैतावत्पुरः पश्चात्ततः कर्माणि साधयेत् । त्रिपदाष्टाक्षरा प्रोक्ता चतुष्पादा षडक्षरा ॥ जपे त्रिपादा यजने चतुष्पादेति कीर्तिता । विप्रः पापक्षयार्थी चेत्प्रातः प्रथमवासरे ॥ स्नात्वाथ नित्यकर्माणि निर्वर्त्य च यथाविधि । ब्रह्मकूर्चं पिबेदह्नि द्वितीये प्रथमोक्तवत् ॥ सर्वं कृत्वाथ भुञ्जीत विशुद्धं यावकाशनम् । पूर्ववत्सकलं कृत्वा तृतीये दिवसे पुनः ॥ भुक्त्वा द्विजोत्तमस्यान्नं गायत्रीजपमाचरेत् । गायत्र्या स्वभिमन्त्र्याम्भः शतवारं जले स्थितः ॥ स्नात्वा पीत्वा शतं जप्त्वा सर्वपापैः प्रमुच्यते । ब्रह्महा मद्यपः स्वर्णस्तेयी च गुरुतल्पगः ॥ गोमातृपितृहा चापि गृह्णन् पृथ्वीं ससागराम् । सदाचार्यमुखात्साङ्गमधीतां तु विधानतः ॥ गायत्रीमयुतं जप्त्वा पापैरेतैः प्रमुच्यते । एतत्प्रायश्चित्तं मासादिकसकृत्कृतरहस्यपापविषयम् ॥ सर्वकामसमृद्ध्यर्थं परं ब्रह्मेयमुच्यते । नित्ये नैमित्तिके काम्ये त्रितयेस्मिन् प्रतिष्ठितम् ॥ इयम् गायत्री । मध्यं दिनेल्पभुङ्मौनी त्रिकालस्नानतत्परः । लक्षत्रयं जपेदेतत्पुरश्चरणसिद्धये ॥ सर्वेषु कायिकेष्वेवं क्रमेण विधिरीरितः । यावत्कर्मसमाप्ति त्रिकालस्नानं न संत्यजेत् ॥ एतदिति । प्रायश्चित्तार्थपुरश्चरणसिद्ध्यर्थमित्यर्थः । **सुमन्तुः**–अपवित्रकरो नग्नः शिरसि प्रावृतोपि वा । प्रलपन्वा जपेद्यावत्तावन्निष्फलमुच्यते ॥ शास्त्रादिषु सुदृष्टापि साङ्गोपाङ्गफलोदया । न प्रसीदति वै विद्या विना सदुपदेशतः ॥ अनिच्छया श्रुतो मन्त्रश्छन्नेनापि च्छलेन वा । पत्रेक्षितो वा व्यर्थः स्यात्तज्जपस्तु त्वनर्थकृत् ॥ **शाण्डिल्यात्रिपितामहाः**–एवं जप्त्वा यथाशक्ति त्युदिते तु दिवाकरे । उत्तमेत्यनुवाकेन त्युद्वास्य तु यथागतम् ॥ उत्तमेत्यनुवाकस्य वामदेव ऋषिः स्मृतः ॥ अनुष्टुप् च तथा च्छन्दो

गायत्री देवता स्मृता ॥ जपित्वा त्रीन्नियम्यासून् गायत्रीमभिवाद्य च । कृत्वा तुरीयोपस्थानं तामुद्वास्योपतिष्ठते ॥ तुरीयोपस्थानम् । एकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यसे नमस्ते तुरीयाय दर्शिताय पदाय । इत्यन्ते तुरीयं पादमुक्त्वा, मा प्रापदिति वदेत् । **पितामहः**—मित्रस्येति त्र्यृचस्याहे विश्वामित्र ऋषिः स्मृतः । भुरिग्गायत्रमादिस्तु त्रिष्टुभाविह पश्चिमौ॥ देवता चैव मित्रः स्यादित्युवाच बृहस्पतिः । एताभिः प्राञ्जलिः सम्यक् विस्पष्टोदितमण्डलम् ॥ भगवन्तं सहस्रांशुमुपतिष्ठेत भास्करम् । ततस्तस्मै नमस्कृत्य चतुःसंध्यादिदेवताः ॥ प्रदक्षिणनमस्कारैर्दिशश्चैवोपतिष्ठते । ( संध्याद्याः पञ्च देवताः ) इति पाठान्तरम् । परमात्मानमात्मानं भावयित्वा द्विजोत्तमः । आत्मानमात्मना ध्यात्वा स्वात्मन्येवोपसंहरेत् ॥ आत्मानम् स्वम्, आत्मना मनसा, आत्मनि परमात्मनि, उपसंहरेत् समर्पयेत् ॥ निवेदयेत चात्मानं विष्णावमलतेजसि । तदात्मा तन्मनाः शान्तस्तद्विष्णोरिति मन्त्रतः ॥ इति व्यासस्मृतेः । परमात्मानमात्मानं भावयित्वा द्विजोत्तम इति विशिष्टाद्वैतपरम् । केवलैक्यपरं किं न स्यात् ? न स्यात्—ब्रह्मदैवत्या रुद्रदैवत्येति भेदव्यपदेशात्, संज्ञाभाप्रभेदेप्यभेद एव त्रिमूर्तीनामिति चेत् । ननु भोः कस्य मते ? न तावच्छैवमते—भेदस्यैव सिद्धान्तितत्वात् । नापि मायिमते—नैयायिकादिभिरभेदनिराकरणात् । प्रतितन्त्रसिद्धान्ते भेद इति चेन्न । भेदस्य प्रतितन्त्रसिद्धान्तसिद्धत्वाद्भेदश्रुतिविरोधाच्च । तर्हि गायत्री रुद्रदैवत्यापि स्यात् मैवम्, सावित्रीत्येव प्रसिद्धेः, नतु ब्राह्मी रौद्रीति— सास्य देवतेत्यणि ङीपि च कृते हि सावित्रीत्युच्यते । सवितुर्दैवतत्वाच्च सावित्री परिकीर्तिता । सविता देवता यस्या मुखमग्निस्त्रिपाच्च या ॥ इत्यादिस्मृतिभ्यः । अतो ब्रह्मरुद्रदैवत्यत्ववादोर्थवाद एव प्रशंसात्मकः ॥ " सावा एषा सर्वदेवत्या " इतिवत् । सविता विष्णुरेवेति निरणायि । अतो विष्णुदैवत्यैव गायत्री । तस्मात् " साहमस्मीत्युपासीत, सोहमिति चिन्तयामः " इत्यादिकं च शरीरात्मभावनिबन्धनमेव । सच शरीरशरीरिभावः, यस्यात्मा शरीरम्—पूः प्राणिनः सर्वगुहाशयस्य—जगत्सर्वं शरीरं ते—आत्मा नारायणः परः—एष सर्वभूतान्तरात्मा—अहमात्मा गुडाकेश सर्वभूताशयस्थितः । इत्यादिप्रमाणशतसिद्धः । एवं, तत्त्वमसि—अहं वै त्वमसि—त्वं वाहमस्मीत्यादिकं च । अयमर्थः । तदात्मकस्त्वमसि, मच्छरीरकस्त्वमसि, त्वदात्मकोहमस्मि, ब्रह्मात्मकोहमस्मीति । एवमेव हि परमात्मभावनया " तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे, अहं मनुरभवम् सूर्यश्चेत्यादि, तं मामायुरमृतमित्युपास्व " इति । सर्वगत्वादनन्तस्य स एवाहमवस्थितः । इत्यादि परमात्मविदोनुसंदधुः । एवं सर्वज्ञो रुद्रोपि " अहमेकः प्रथममासं वर्तामि च भविष्यामि चेत्यादिकमनुसंदधत्सोन्तरादन्तरं प्राविशत् " इति । तदनन्तरवाक्ये स्वान्तरात्मभूतविष्णुभावनयैवमनुसंधानमिति सुस्पष्टम् । न त्वैक्यभावनया वामदेवेन्द्राद्यनुसंधानम्, भेदश्रुतिविरोधात् । श्रुतिषु भेद औपाधिक इति चेन्नैवम् " इमं मानवमावर्तं नावर्तन्ते, सदा पश्यंति सूरयः" । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ ज्ञानेन तु तदज्ञानं येषां

नाशितमात्मनाम् । तेषामादित्यवज्ज्ञानम्–॥ इत्यादिभिर्निःशेषनष्टाविद्यात्मबहुत्वप्रतिपादनात् । अतः "नानात्मानो व्यवस्थातः" इति निश्चीयते । अत्र विशेषो **भरद्वाजेन दर्शितः**–एवं सम्यग्विधानेन जपं सर्वं समाप्य च । समाहितोथ सद्भक्त्या देवीं विप्रोभिवादयेत् ॥ कर्णयुग्मं स्वहस्ताभ्यां स्पृष्ट्वा जानुद्वयादिकम् । चरणांगुष्ठपर्यन्तं संमृज्य तु शनैः शनैः ॥ दक्षश्रोत्रसमं बाहुं दक्षिणं तु प्रसार्य च । बाहूपरि शिरो नम्रमुक्तं तदभिवादनम् ॥ इत्येतद्ब्राह्मणं यत्तन्मन्त्रं स्यादभिवादने । मन्त्रेणानेन गायत्रीं यथावदभिवाद्य च ॥ उत्तमेत्यादिमनुना देवीमुद्वासयेत्ततः । अनुवाकस्य तस्यैव वामदेवाह्वयो मुनिः ॥ छन्दोनुष्टुप् च सावित्री देवतोपस्थितौ विधिः । अथ क्रमान्नमस्कार्याश्चतुःसन्ध्यादिदेवताः ॥ सन्ध्या पुरस्ताद्गायत्री सावित्री च सरस्वती । एताः सन्ध्यादयः प्रोक्ताश्चतस्रो देवताः क्रमात् ॥ स्वस्वनामचतुर्थ्यन्तं प्रणवादिनमोन्तकम् । मन्त्रमासामिह प्रोक्तं प्रणमेत्स्वस्वमन्त्रतः ॥ केचिद्धि मुनयः प्राहुः प्रतिमन्त्रं प्रदक्षिणाम् । कुर्वन् प्रणामं कुर्वीतेत्येताभ्यो भक्तितो द्विजः ॥ मित्रस्येत्यादिभिर्ऋग्भिर्विस्पष्टोदितमण्डलम् । आदित्यं तिसृभिर्देवमुपतिष्ठेत वै द्विजः ॥ आसामृषिर्विश्वामित्रो देवता वै दिवाकरः। भुरिङ्गायत्रमादिस्तु त्रिष्टुभाविह पश्चिमौ ॥ अथोपतिष्ठेदादित्यमुदयन्तं समाहितः । मन्त्रैश्च विविधैः सौरैर्ऋग्यजुःसामसम्भवैः ॥ इत्येवमुक्त्वोपस्थाय ततस्तमभिवादयेत् । अभिवादनमन्त्रेण सद्भक्त्या लोकसाक्षिणम् ॥ स्वगोत्रनामशर्म्माहं भोःपदैरभिवादयेत् । इत्येतद्ब्राह्मणं यत्तन्मन्त्रमर्काभिवादने ॥ सर्वाभ्यो देवताभ्यश्चेत्येतत्प्रणवसम्पुटम् । उक्त्वा नमो नम इति प्रणमेत्सर्वदेवताः॥ कामोकार्षीन्मन्युरकार्षीदित्येतत्पूर्वमन्त्रवत् । उक्त्वा प्रदक्षिणेनैव नमस्कुर्यात्त्रयीतनुम् ॥ प्राची च दक्षिणा चैव प्रतीची चोत्तरोर्ध्वका । अधरा चांतरिक्षं च ह्येताः सप्तोदिता दिशः ॥ सन्ध्यादीनां यथा प्रोक्तं मन्त्रमासां तथैव च । ज्ञात्वा प्रदक्षिणेनैताः प्रणमेत्स्वस्वमन्त्रतः ॥ गायत्र्यसीति नत्वाथ प्रणवव्याहृतिपूर्वया । स्याद्गायत्र्या जलं दद्यादथ वै तद्विसर्जनम् ॥ इदं गायत्रीविसर्जनार्घ्यं पक्षान्तरम्, तच्च जपान्ते कार्यम्, न तु जपमध्ये रवावुदिते ॥ जपमध्योदिते भानौ जपान्तेर्घ्यं प्रदापयेत् । इति यादवप्रकाशीये दर्शनात् ॥ अनध्यादिविषये **भरद्वाजः**–ॐ सूर्याय नमः प्रातः सायमोमग्नये नमः। इत्यनग्निर्ब्रह्मचारी प्रदद्याच्चोदकं ततः॥ दत्त्वोदकं जपेदन्यज्जपान्तेनग्निमद्द्विजः । मरुतां पितॄणां तृप्त्यै क्षयाय सकलैनसाम् ॥ आत्मानं परमात्मानं भावयित्वा द्विजोत्तमः । आत्मानमात्मना ध्यात्वा ह्यात्मन्येवोपसंहरेत् ॥ एवं सन्ध्यामुपास्याथ पितरावग्रजान् गुरून् । त्रिवर्षपूर्वांश्छिष्टांश्च पार्श्वस्थानभिवादयेत् ॥ एवं सन्ध्यां समाप्याथ दृग्भ्यां यं यं प्रपश्यति । यं यं स्पृशति पाणिभ्यां स स सर्वः शुचिर्भवेत् ॥ इत्यत्रादित्योपस्थानादिङ्नमस्कारमात्रं पितामहोक्तम्, पुनश्च किंचिदपि भरद्वाजोक्तम्, तस्माद्यथोपदेशमत्रानुष्ठेयम् । यत्तु **चन्द्रिकायामुक्तम्**–ते तथैव महाबाहो दंशिता रणमूर्धनि । सन्ध्यागतं सहस्रांशुमादित्यमुपतस्थिरे ॥ इति धर्मपुत्रादिभिरुपस्थानमात्रस्य कृतत्वात्तदेव प्रधानमन्यन्मार्जनादिकमङ्गमिति, तन्न साधीयः। जपार्घ्यदानयोरपि "सूतके सावित्र्याञ्जलिं प्रक्षिप्य प्रदक्षिणीकृत्य, सूर्यं ध्यायन्नमस्कु-

र्यात् ॥ प्रक्षिपेत्सूतकेप्यर्घ्यं गायत्रीं तु समुच्चरन् ।" इत्यादिभिः सर्वकर्मपर्युदासके द्विविधाशौचेप्यवश्यकार्यत्वविधानात्, अकरणे "त्यजन् गच्छेदधो द्विजः" इति प्रत्यवायस्मरणाच्च, अर्घ्यदानं जपः उपस्थानमिति त्रयमपि प्रधानमिति सुव्यक्तम् । तद्वचनम् तु क्षत्रियस्य युद्धप्राधान्यदर्शनपरं, धर्मद्वयसन्निपाते शक्यांशस्यावश्यकर्तव्यताप्रदर्शनपरं वा । नहि युद्धे अर्घ्यदानं जपो वा कर्तुं शक्यम् । **स्मृत्यर्थसारे**—सावित्र्यादिक्रियाः सर्वा आदित्याभिमुखश्चरेत् । देवालयसमीपे तु तमेवाभिमुखश्चरेत् ॥ जपस्थानान्न निर्गच्छेद्देवतासन्निधौ क्वचित् । प्रदक्षिणनमस्कारान् न कुर्याद्देवतालये ॥ **हारीतः**—आर्द्रवासा जले कुर्यात्तर्पणाचमने जपम् । उपस्थाने न निर्गच्छेद्वर्जयेच्च प्रदक्षिणम् ॥ **संग्रहे**—लाजाहोमे च सीमन्ते देवतावाहने वरे । अर्घ्ये तिष्ठेदुपस्थाने पडेते भृगुचोदिताः ॥

## ❋ संध्यादिलोपे प्रायश्चित्तम् ❋

**शङ्खः**—संध्यादिनित्यलोपे तु दिनमेकमभोजनम् । दिनद्वये त्रिरात्रं स्यात्कृच्छ्रार्धं तु दिनत्रये ॥ दशाहे कृच्छ्रमेकं स्यादूर्ध्वं चान्द्रायणं भवेत् । चान्द्रायणं पराकं च मासादूर्ध्वं विधीयते ॥ ततोप्येवं प्रकल्प्यं स्याद्व्यासस्य वचनं यथा । इति । **अग्निरिराश्च**—अग्निकार्यपरिभ्रष्टाः संध्योपासनवर्जिताः । वेदं च येनधीयानास्ते सर्वे वृषलाः स्मृताः ॥ गायत्र्यष्टशतं चैव प्राणायामत्रयं तथा । प्रायश्चित्तमिदं प्रोक्तं नियमातिक्रमे सति ॥ **पुलस्त्यः**—अकाले चेत्कृतं कर्म कालं प्राप्य पुनः क्रिया । कालातीतं तु यत्कुर्यादकृतं तद्विनिर्दिशेत् ॥ **संवर्तः**—विधिनापि कृता संध्या कालातीताऽफला भवेत् । अयमेव हि दृष्टान्तो वन्ध्यास्त्रीमैथुनं यथा ॥ **मनुः**—वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः । तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम् ॥

## ❋ अथाभिवादनविधिः ❋

तत्र **भरद्वाजः**—कण्डूय पृष्ठतो मा तु कृत्वा चाश्वत्थवन्दनम् । उपगम्य गुरून् सर्वान् विप्रांश्चैवाभिवादयेत् ॥ **मनुः**—लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा । आददीत यतो ज्ञानं तं पूर्वमभिवादयेत् ॥ अभिवादपरो विप्रो ज्यायांसमभिवादयेत् । असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत् ॥ **विष्णुः**—सभासु चैव सर्वासु यज्ञे राजगृहेषु च । नमस्कारं प्रकुर्वीत ब्राह्मणानभिवादयेत् ॥ विप्रेंघदर्शनात्क्षिप्रं क्षीयन्ते पापराशयः । वन्दनान्मङ्गलावाप्तिः स्पर्शनादच्युतं पदम् ॥ जन्मप्रभृति यत्किंचित् चेतसा धर्ममाचरेत् । तत्सर्वं निष्फलं याति चैकहस्ताभिवादनात् ॥ एतद्विद्वद्विषयम् ॥ **तेनैवोक्तम्**—शिष्याणामाशिषं दद्यात्पादसंग्रहणं गुरोः । स्पृष्ट्वा कर्णौ तु विदुषां मूर्खाणां चैकपाणिना ॥ **आपस्तम्बः**—ऊर्ध्वं प्राणा ह्युत्क्रमन्ति यूनः स्थविर आगते । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ **याज्ञवल्क्यः**—वृद्धान्नातिवदेज्जातु न च संप्रेषयेदपि । नासीनः स्यात्स्थितेष्वेवमायुरस्य न रिष्यति ॥ **मनुः**—अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । चत्वारि सम्यग्वर्धन्ते त्वायुः प्रज्ञा

यशो यलम् ॥ **धर्मसारे**–अपूज्या यत्र पूज्यन्ते पूज्या यत्रावमानिताः । त्रीणि तत्र विवर्धन्ते दुर्भिक्षं मरणं भयम् ॥ **मनुः**–आयुष्मान् भव सौम्येति वाच्यो विप्रोभिवादने । अकारश्चास्य नाम्नोन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥ यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् । नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ अभिवादे कृते यस्तु तं विप्रं नाभिवादयेत् । श्मशाने जायते वृक्षः कङ्कगृध्रनिषेवितः ॥ अभिवादे तु यः पूर्वमाशिषं न प्रयच्छति । यदुष्कृतं भवेदस्य तस्माद्भागं प्रपद्यते ॥ तस्मात्पूर्वाभिभाषी स्याच्चण्डालस्यापि धर्मवित् । सुरां पिबेति वक्तव्यमेवं धर्मो न हीयते ॥ स्वस्तीति ब्राह्मणं ब्रूयादायुष्मानिति भूमिपम् । वर्धतामिति वैश्यं तु शूद्रं तु स्वागतं वदेत ॥ स्वस्तिशब्दार्थमाह **मनुः**–यत्सुखं त्रिषु लोकेषु व्याधिव्यसनवर्जितम् । यस्मिन् सर्वे स्थिताः कामास्तत्स्वस्तीत्यभिसंज्ञितम् ॥ **कात्यायनः**–कदाचित्कवचं भेद्यं नाराचेन शरेण वा । अपि वज्रशताघातैर्ब्राह्मणाशीर्न भिद्यते ॥ **मनुः**–ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥ परपत्नी तु या स्त्री स्यादसंबन्धा च योनितः । तां ब्रूयाद्भगिनीत्येव सुभगे भगिनीति वा ॥ **शातातपः**–अभिवाद्यो नमस्कार्यः शिरसा वन्द्य एवच । ब्राह्मणः क्षत्रियाद्यैस्तु श्रीकामैः सादरं सदा ॥ नाभिवाद्यास्तु विप्रेण क्षत्रियाद्याः कथंचन । ज्ञानकर्मगुणोपेता यद्यप्येव बहुश्रुताः ॥ **शातातपः**–सवर्णेषु सवर्णानां कार्यमेवाभिवादनम् । अभिवाद्योऽसवर्णस्तु ब्राह्मणैर्न कदाचन ॥ **चन्द्रिकायाम्**–क्षत्रवैश्याभिवादे च प्रायश्चित्तं कथं भवेत् । ब्राह्मणानां दशाष्टौ वा अभिवाद्य विशुध्यति ॥ अभिवाद्य द्विजः शूद्रं सचेलस्नानमाचरेत् । ब्राह्मणानां शतं सम्यगभिवाद्य विशुध्यति ॥ अर्चयेत्पुण्डरीकाक्षं देवं वापि त्रिलोचनम् । ब्राह्मणं वा महाभागमभिवाद्य विशुध्यति ॥ उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीम् । अभिवाद्य द्विजो मोहादहोरात्रेण शुध्यति ॥ **मनुः**–दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कलाभृताम् । त्र्यब्दपूर्वं श्रोत्रियाणामल्पेनापि स्वयोनिषु ॥ अयमर्थः, पौरसख्यम्, समानपुरवासिनां विद्याहीनानां दशभिर्वर्षैः सख्यं भवति। ततोधिको ज्यायान्, कलाभृताम् गीतादिविद्याभृताम्, पञ्चाब्दपूर्वैः सखा भवति । श्रोत्रियाणां वेदाध्यायिनाम्, त्र्यब्दपूर्वः सखा भवति। ततोधिको ज्यायान् । स्वयोनिषु भ्रात्रादिषु, अल्पेनापि वयसा पूर्वोभिवाद्यः। एतच्च ब्राह्मणविषयम् ॥ **तेनैवोक्तम्**–ब्राह्मणं दशवर्षं च शतवर्षं च भूमिपम् । पितापुत्रौ विजानीयात्तयोस्तु ब्राह्मणः पिता ॥ विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः । वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥ वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी । एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥ पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च । यत्र स्युः सोत्र मानार्हः शूद्रोपि दशमीं गतः ॥ वर्षशतस्यान्तिमो भागो दशमी, नवतिहायनातीत इत्यर्थः । **मनुः**–न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः । ऋषयश्चक्रिरे धर्मं योनूचानः स नो महान् ॥ न हायनैर्न पलितैरिति मासत्रहस्त्रजीविव्यतिरिक्तविषयम् । **रत्नावल्याम्**–वर्षत्रयाधिकाशीतिं तीर्त्वा मासचतुष्टयम् ।

यो जीवेत्स तु वन्द्यः स्याद्विष्णोरपि सुपूजितः॥ एतत्सवर्णविषयम् । **मनुः**—यस्य देशं न जानाति स्थानं त्रिपुरुषं कुलम् । कन्यादानं नमस्कारं श्राद्धं तस्य विवर्जयेत् ॥

## ❀ नमस्कारक्रमः ❀

**स्मृत्यर्थसारे**—स्वश्रोत्रे पूर्वमालभ्य स्वपद्भ्यां जानुतोऽप्यधः । स्वगुरुं ब्राह्मणः श्रोत्रसमं हस्तं प्रसार्य तु ॥ उरःसमं तु राजन्यो वैश्यो मध्यसमं तथा । नीचैः शूद्रस्ततोऽन्योपि तं प्रत्यभिवदेन्मुदा ॥ **मनुः**—व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः। सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥ ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् । भो इति श्रवणे बाहुं दक्षिणं च प्रसारयेत् ॥ **संग्रहे**—भोः शब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने । नाम्ना स्वरूपभावोहि भोभावी ऋषिभिः स्मृतः ॥ **अत्रिः**—अभिवादे तु सर्वत्र पादस्पर्शनमेव वा । विप्राणां प्राञ्जलिः कार्यो नमस्कारः स उच्यते ॥ **मनुः**—गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत् । न चातिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥ गुरुवत्प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः। असवर्णास्तु संपूज्याः प्रत्युत्थानाभिभाषणैः ॥ **स्मृतिसंग्रहे**—ऋत्विक्पितृव्यश्वशुरमातुलानां यवीयसाम् । प्रवयाः प्रथमं कुर्यात्प्रत्युत्थानाभिभाषणम् ॥ **याज्ञवल्क्यः**—ऋषिविद्वन्नृपवरमातुलश्वशुरर्त्विजः । एतेभ्यः शास्त्रविहिताः स्मृताः कालविभागतः ॥ भ्रातृभार्योपसंग्राह्या सवर्णाऽहन्यहन्यपि । विप्रोष्य तूपसंग्राह्या ज्ञातिसंबन्धियोषितः ॥ **स एव**—अवृद्धा गुरुपत्नी च नोपसंग्रहमर्हति । योषित्पतिसमा साध्वी नमस्कार्या प्रकीर्तिता ॥ कामं तु गुरुपत्नीनां युवतीनां युवा भुवि । विधिवद्वन्दनं कुर्यादसावहमिति ब्रुवन् ॥ **मनुः**—गुरुपत्नी तु युवती नाभिवाद्येह पादयोः । पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥ अभ्यञ्जनं च स्नपनं गात्रोद्वर्तनमेव च । गुरुपत्न्या न कुर्वीत केशानां च प्रसाधनम् ॥ सन्ध्याकालाभिवादे विशेषश्चन्द्रिकायाम्—ज्यायानपि कनीयांसं सन्ध्यायामभिवादयेत् । विना पुत्रं च शिष्यं च दौहित्रं दुहितुः पतिम् ॥ **स्मृतिभास्करे**—सर्वे चापि नमस्कार्याः सर्वावस्थासु सर्वदा । अभिवादो नमस्कारस्तथा प्रत्यभिवादनम् ॥ आशीर्वाच्या नमस्कार्यैर्वयस्यस्तु पुनर्नमेत् । सर्वे चापि नमस्कार्या इति वचनं बहुवचनविरोधाच्च अनादरणीयम् ॥ तथा **मनुः**—एवं सन्ध्यामुपास्याथ पितरावग्रजान् गुरून् । त्रिवर्षपूर्वाञ्छिष्टांश्च पार्श्वस्थानभिवादयेत्॥**दक्षः**—श्रोत्रियं पितरं भ्रातॄन् गुरून् मातामहान् यतीन् । पितामहं मातुलं च ज्यायांसं गुरुपुत्रकम् ॥ एतान् सर्वान् यथाशास्त्रमभिवाद्य पुनर्नमेत् ॥

## ❀ अथ नाम्नानभिधेयाः ❀

**स्मृतिसंग्रहे**—अवाच्यो दीक्षितो नाम्ना यवीयानितरो भवेत् । भोःशब्दपूर्वकं चैनमभिभाषेत धर्मवित् ॥ आचार्यं चैव तत्पुत्रं तद्भार्यां दीक्षितं गुरुम् । पितरं च पितृश्चैवं मातरं मातुलं तथा ॥ हितैषिणं च विद्वांसं श्वशुरं पतिमेव च । न ब्रूयान्नामतो विद्वान् मातुश्च भगिनीं तथा ॥

## ❀ नाभिवाद्याः ❀

**आपस्तम्बः**—समित्पुष्पकुशाद्यम्बुमृदन्नाक्षतपाणिकः । जपं होमं च कुर्वाणो नाभिवाद्यस्तथा द्विजः ॥ पाषण्डं पतितं व्रात्यं महापातकिनं शठम् । नास्तिकं च कृतघ्नं च नाभिवादेत्कथंचन ॥ धावन्तं च प्रमत्तं च मूत्रोच्चारकृतं तथा । भुञ्जानमातुरं नद्धं नाभिवादेद्द्विजोत्तमः ॥ वमन्तं जृम्भमाणं च कुर्वन्तं दन्तधावनम् । अभ्यक्तशिरसं चैव स्नापयन्तं नाभिवादयेत् ॥ कृपाणिकमनाज्ञातमशक्तं रिपुमातुरम् । योगिनं च तपःसक्तं कनिष्ठं नाभिवादयेत् ॥ **अत्रिः**—अश्रोत्रियं कृतघ्नं च ब्रह्मघ्नं स्वर्णहारिणम् । पौनर्भवं देवलकं गर्भसंस्कारवर्जितम् ॥ अन्यांश्च पतितान् विप्रान् नाभिवादेत्कदाचन । एवं सम्यक् समालोक्य शास्त्राणि द्विजसत्तमः ॥ कर्तव्यानि च कर्माणि यः करोति दिने दिने । स याति ब्रह्मणः स्थानं पुनरावृत्तिवर्जितम् ॥ इति ॥

इति श्रीहारीतकुलतिलकस्य श्रीरङ्गनाथार्यपौत्रस्य वैदिकसार्वभौमापरनामधेयस्य श्रीमद्वेङ्कटनाथस्य कृतौ स्मृतिरत्नाकरे प्रातःसंध्यानिर्णयः ।

# अथाभ्युक्षणविधिः ।

अत्र **शाट्यायनः**—ततः सूर्यमुपस्थाय सम्यगाचम्य च स्वयम् । अभ्युक्षणं समादाय संयतात्मा गृहं व्रजेत् ॥ अभ्युक्षणम् प्रोक्षणार्थजलम् । **वृद्धमनुः**—ततः सम्यग्द्विराचम्य ह्यभ्युक्षणमुदाहरेत् । न विनाभ्युक्षणं जातु विधिज्ञः किंचिदाचरेत् ॥ प्रोक्षणरहिते गृह इति शेषः । अत्र विशेषमाह **गार्ग्यः**—सोपानत्कः सदर्भश्च पात्रस्थं सदशोत्तरः ॥ सदशमुत्तरीयं यस्य तथोक्तः । **प्रचेताश्च**—अनुगुप्ता अपो गृह्य प्रचारार्थं गृहं व्रजेत् । सवने प्रोक्षणं कुर्याद्गृहीतेन सदा शुचिः ॥ अनुगुप्ताः केनाप्यदृष्टाः । **गार्ग्यः**—त्रिसंध्यं वाग्यतो वारि गुप्तमाहृत्य शोधयेत् ॥ कालनिर्णयमाह **गोभिलः**—पुरा प्रादुष्करणवेलायाः सायं प्रातरनुगुप्ता अप आहरेत्परिचरणीया इति । **योगयाज्ञवल्क्यः पात्रमाह**—सौवर्णं राजतं ताम्रं मुख्यं पात्रं विदुर्बुधाः । तदलाभे तु मृत्पात्रं स्रवते यन्न धारितम् ॥ **शाट्यायनिः**—अब्जं हिरण्मयं रौप्यं दारवं मृण्मयं दृढम् । ताम्रं पत्रपुटं पुण्यं पात्रमभ्युक्षणाय वै ॥ पुण्यग्रहणान्निषिद्धपात्रनिषेधः ॥ शैवालवालुकादूर्वातृणपर्णायसैरपि । अभ्युक्षणं न गृह्णीयादापस्तम्बोऽब्रवीन्मुनिः ॥ पत्रमत्रैरण्डादि ॥ नालिकाभिन्नपात्रेण कांस्यपात्रेण चैव हि । प्राण्यङ्गफलजेनापि कुर्यान्नाभ्युक्षणं ततः ॥ नालिका वेणुमयी, प्राण्यङ्गम् शङ्खशुक्त्यादि, फलजम् नालिकेरादि । **यमः**—पात्राद्विरहितं तोयमुद्धृतं सव्यपाणिना । न तेन प्रोक्षणं कुर्याद्वस्त्रनिष्पीडनेन च ॥ **शाट्यायनिः**—नाहरेदेकवस्त्रं तु नामतो न च कन्यका । न पाणिना न वस्त्रेण तोयमभ्युक्षणाय वै ॥ **प्रचेताः**—नाहरेदेकजातिस्तु न शिशुर्न च कन्यका । नानुपेतो नैकवस्त्रस्तोयमभ्युक्षणाय वै ॥ एकजातिः शूद्रः ॥

तथा **मनुः**-ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः । चतुर्थ एकजातिस्तु शूद्रोनास्ति तु पञ्चमः ॥ **प्रचेताः**-अभ्युक्षणोदपात्रं तु न तावत्स्थाप्यते कचित् । यावन्नाचमनं दत्तं प्रोक्षिता न गछन्ति याः ॥ **शाट्यायनिः**-प्रोक्षणग्रहणं पात्रं निदधद्गृहमागतः । अकृत्वाचमनं भूमावाचान्तः प्रयतो भवेत् ॥ आचमनमकृत्वा प्रोक्षणपात्रं भूमौ निक्षिपन् आचान्तः शुचिर्भवेदित्यर्थः ॥ **पुलस्त्यः**-तेन द्रव्याण्यशेषाणि प्रोक्ष्याचम्य पुनर्गृहे । ततः कर्माणि कुर्वीत सत्क्रियाश्च द्विजोत्तमः ॥ **गार्ग्यः**-त्रिसंध्यं वाग्यतो वारि गृहमाहृत्य शोधयेत् । होमोपहारभूगेहद्रव्याण्यपरिचारकान् ॥ अभ्युक्षेत्तु प्रयत्नेन प्रातः पर्युषितं गृहम् । मध्याह्ने चैव संध्यायां नच नाभ्युक्षिते यजेत् ॥ **शाट्यायनिः**-नद्यादौ सम्यगाचान्तः संयतो गृहमागतः । उद्धृत्य मणिकात्तोयमथाभ्युक्षणमाचरेत् ॥ गृहे वा समुपस्पृश्य कृत्वा स्वर्णकुशोदकम् । कृत्वाचमनमाचान्तः पुनः प्रोक्षणमाचरेत् ॥ मणिकः उदपात्रम् ॥ स्वर्णं वा कुशं वा उदपात्रे निक्षिप्य तेन प्रोक्षयेत् ॥ **प्रचेताः**-वैश्वानरेण यत्किंचित्कुरुते प्रोक्षणं द्विजः । गङ्गातोयसमं सर्वं वदन्ति ब्रह्मवादिनः ॥ वैश्वानरमन्त्राभ्युक्षणपात्रम् ॥

## ❀ अथ होमविधिः ❀

अत्र **दक्षः**-संध्याकर्मावसाने तु स्वयं होमो विधीयते । स्वयं होमे फलं यत्स्यात्न तदन्येन लभ्यते ॥ हूयमाने तथान्येन फलमर्धं प्रपद्यते । ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोथ विट्पतिः॥ एतैरपि हुतं यत्स्यात्तद्धुतं स्वयमेव तु ॥ विट्पतिः जामाता ॥ **कौर्मे**-ऋत्विक् पुत्रोथ पत्नी वा शिष्यो वाथ सहोदरः । प्राप्यानुज्ञां विशेषेण जुहुयुर्वा यथाविधि ॥ निक्षिप्याग्निं स्वदारेषु परिकल्प्य तथार्त्विजम् । प्रवसेत्कार्यवशाद् विप्रो वृथैव न चिरं वसेत् ॥ इत्युक्तेः । भर्तुर्विप्रवासे ऋत्विगाद्यभावे **गोभिलः**-कामं गृह्येग्नौ पत्नी जुहुयात्सायंप्रातर्होमाविति ॥ **मनुः**-अग्निहोत्रस्य शुश्रूषा संध्योपासनमेव च । कार्यं पत्न्या प्रतिदिनं बलिकर्म च नैत्यिकम् ॥ संध्योपासनमत्र सायंप्रातर्होमः । **विष्णुः**-स्वयमहुत्वा न परं याजयेदिति ॥ **चन्द्रिकायाम्**-असमक्षं तु दम्पत्योर्होतव्यं नर्त्विगादिना । उभयोरसमक्षं तु भवेद्धुतमनर्थकम् ॥ **मनुः**-नैव कन्या न युवतिर्नाल्पविद्यो न बालिशः । होता स्यादग्निहोत्रस्य नार्तो नासंस्कृतोऽशुचिः ॥ अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ **बृहस्पतिः**-सूतके मृतके चैव ह्यशक्तौ श्राद्धभोजने । प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत् ॥

## ❀ होमकालनिर्णयः ❀

होमकालमाह **आपस्तम्बः**-नक्षत्रं दृष्ट्वा प्रदोषे निशायां वा सायम् । उषस्युपोदयं समयाधि (ध्यु) षित उदिते वा प्रातरिति ॥ **मनुः**-उदितेनुदिते चैव समयाधि (ध्यु) षिते तथा । सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥ ग्रहर्क्षयुक्तोनुदितो नक्षत्रार्कविवर्जितः । समयाधि (ध्यु) षितः सार्के उदितस्त्रिषु होमयेत् ॥ **उशनाः**-अर्धमण्डलसंप्राप्ते भानावनुदिते हुतम् । तस्मिन्नस्तंगते होमो भवेदुदितहोमिनः ॥

सायमर्धमण्डलप्राप्तेऽर्केऽनुदितहोमपक्षे हुतं होमः कार्यः । उदितहोमपक्षे तु, तस्मिन्नस्तंगते होम इत्यर्थः । **जाबालिः**—एके उदितहोमाः स्युरन्येऽनुदितहोमिनः । अन्ये भोजनहोमाश्च पक्षहोमास्तथापरे ॥ पक्षहोमा इत्यादि श्रौतहोमविषयम् । **आश्वलायनः**—प्रदोषान्तो होमकालः सायम्, सङ्गवान्तः प्रातरिति ॥ अयं मुख्यकालः । गौणकाल उक्तो **बोधायनीये**—उक्तयोः कालयोः कर्तुमशक्तौ सायमाहुतिम् । रात्रौ कुर्वीत कृत्स्नायां कृत्स्नेऽह्नि प्रातराहुतिम् ॥ **गोभिलः**—अथ यदि गृह्येऽग्नौ सायंप्रातर्होमयोर्दर्शपूर्णमासयोर्वा हव्यं होतारं वा नाधिगच्छेत्, कथं कुर्यात् । सायमाहुतेः प्रातराहुतिर्नात्येति । आप्रातराहुतेः सायमाहुतिर्नात्येति । आमावास्यायाः पौर्णमासी नात्येति । आपौर्णमास्या अमावास्या नात्येतीति ॥ **अखण्डादर्शे**—मुख्यकाले व्यतीते तु रात्रावपि दिनेऽपि वा । प्राणायामविनीतात्मा जुहुयाच्च यथाविधि ॥ **कात्यायनः**—मुख्यकाले यदावश्यं कर्म कर्तुं न शक्यते । गौणकालेऽपि कर्तव्यं गौणोऽप्यत्रेदृशं भवेत् ॥ रात्रौ प्रहरपर्यन्तं दिवाकृत्यानि कारयेत् । ब्रह्मयज्ञं च सौरं च वर्जयित्वा विशेषतः ॥ ब्रह्मयज्ञशब्दः पञ्चयज्ञोपलक्षकः । महतः पञ्चयज्ञांस्तु दिवैवेत्याह गौतमः ॥ इति स्मृतेः । **स्मृत्यर्थसारे**—दिवोदितानि कर्माणि प्रमादादकृतानि वै । शर्वर्याः प्रथमे यामे तानि कुर्यादतन्द्रितः ॥ निशोदितानि कर्माणि प्रमादादकृतानि वै । दिनस्य प्रथमे यामे तानि कुर्यादतन्द्रितः ॥ रात्रेस्तु प्रथमे यामे दिवाकर्माणि कारयेत् । दिवैव पञ्चयज्ञांस्तु रात्रावेतांस्तु वर्जयेत् ॥

## ❀ हविष्यनिर्णयः ❀

**कात्यायनः**—कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम् । व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः ॥ तैलं दधि पयः सोमो यवागूरोदनं घृतम् । तण्डुला मांसमापश्च दश द्रव्याण्यकामतः ॥ हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः । अभावे व्रीहियवयोर्दध्ना वा पयसापि वा ॥ तदभावे यवाग्वा वा जुहुयादुदकेन वा । नीवारा व्रीहयश्चैव गोधूमाः शालयो यवाः ॥ स्वरूपेणापि होतव्याः स्वरूपेणैव वै तिलाः । यथोक्तवस्त्वसंपत्तौ ग्राह्यं तदनुसारि यत् ॥ यवानामिव गोधूमा व्रीहीणामिव शालयः । आज्यं हव्यमनादेशे जुहोतिषु विधीयते ॥ मन्त्रस्य देवतायास्तु प्रजापतिरिति स्थितिः ॥ **मनुः**—मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम् । अक्षारलवणं यच्च प्रकृत्या हविरुच्यते ॥ **बृहस्पतिः**—प्रस्थधान्यं चतुःषष्टेराहुतेः परिकीर्तितम् । तिलानां तु तदर्धं स्यात्तदर्धं स्यात् घृतस्य तु ॥ यज्ञार्थं गोघृतं ग्राह्यं तदलाभे तु माहिषम् । आजं वा तदलाभे तु साक्षात्तैलं ग्रहीष्यते ॥

## ❀ समिन्निर्णयः ❀

**पुराणे**—पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः । शमीरोहितकाश्वत्थास्तदलाभेऽर्कवेतसी ॥ **अखण्डादर्शे**—इध्मांश्चैव प्रकुर्वीत प्रशस्तस्य वनस्पतेः । मुष्टिस्थूलान् समान् दीर्घान् कृमिदोषविवर्जितान् ॥ शीर्णा ह्रस्वाः सुषुपिराः कर्मसिद्धि-

विनाशकाः ॥ **स्मृत्यर्थसारे**—समित्पवित्रं वेदिश्च त्रयः प्रादेशसंमिताः । इध्मस्तु द्विगुणः कार्यस्त्रिगुणः परिधिः स्मृतः ॥ **कात्यायनः**—नांगुष्ठादधिका कार्या समित्स्थूलतया क्वचित् । न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥ प्रादेशान्नाधिका नात्र तथा न स्याद्विशाखिका । न सपर्णा न निर्वीर्या होमेषु च विजानता ॥ **स्मृत्यर्थसारे**—पलाशखदिराश्वत्थबिल्वोदुम्बरजा समित् । अपामार्गश्च दूर्वा च कुशाश्चेत्यपरे विदुः ॥ वनस्पतीनां सर्वेषामिध्मः कार्यो विशेषतः । तत्रैतान्वर्जयेत् वृक्षान् कोविदारबिभीतकान् ॥ कपित्थामलकान् राजवृक्षवंशांस्तथैव च । नीपनिम्बकरंजांश्च तिलकं शाल्मलीमपि ॥ श्लेष्मातकमपि त्यक्त्वा ग्राह्योन्यः सकलद्रुमः । राजेति सप्त तृणराजकाः । ( गुडाकतालहिंतालकेतकाश्च बृहद्वटः । खर्जूरो नारिकेलश्च सप्तैते तृणराजकाः ॥ ) **स्मृत्यन्तरे**—अक्षारवधकार्पासकरवीरकरञ्जकान् । इन्धने तिन्त्रिणीं निम्बं सर्वान्कण्टकिनस्त्यजेत् ॥ कण्टकिनः याज्ञियेभ्योन्ये । **स्कान्दे**—तुलसीकाष्ठयुक्तेऽग्नौ हुतहतामक्षयं फलम् । हविस्तेनैव यत्पक्वं विष्णोरानन्त्यमश्नुते ॥ **आपस्तम्बः**—नाप्रोक्षितमिन्धनमग्नावादध्यात् । **मनुः**—नाग्नेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् । अधस्तान्नोपदध्याच्च न चैनमतिलङ्घयेत् ॥

## ❀ अग्निधमनविधिः ❀

**संवर्तः**—न शूर्पेण धमेदग्निं न वस्त्रेण न पाणिना । मुखेनाग्निं समिन्धीत मुखादग्निरजायत ॥ मुखाग्निधमनं कलौ निषिद्धम् । अत एव **आपस्तम्बः**—नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् । न चैनं लङ्घयेद्विप्रो न हन्याद्व्यजनादिभिः ॥ **चन्द्रिकायाम्**—पिटकेन भवेद्व्याधिः शूर्पेण धननाशनम् । पाणिना मृत्युमाप्नोति ह्यायुः क्षीणं मुखाद्धमेत् ॥ यदीति शेषः । **कात्यायनः**—सुद्रुवा हुते चैव पाणिशूर्पास्यदारुभिः । न कुर्यादग्निधमनं न कुर्याद्व्यजनादिना ॥ **मरीचिः**—नाग्निं मुखेनोपधमेत्, यदि धमेद्धमनिमन्तरेण कृत्वा तृणं काष्ठं वा धमेत् ॥

## ❀ होमस्थानकर्मादिविवरणम् ❀

**दक्षः**—अग्निकर्णे भवेद्रोगो नासिकायां धनक्षयः । चक्षुषोर्निधनं कुर्यात्केशे दारिद्र्यमुद्भवेत् ॥ हुतं शिरसि पापं स्यात्तस्माज्जिह्वासु होमयेत् । यत्र काष्ठं तु तच्छ्रोत्रं यत्र धूमस्तु नासिका ॥ यत्राल्पज्वलनं नेत्रं यत्र भस्मानि तच्छिरः । यत्रैव ज्वलते वह्निर्जिह्वा तत्रैव कीर्तिता ॥ हिरण्या कनका रक्ता कृष्णा चैवाथ सुप्रभा । अतिरक्ता बहुरूपा सप्त जिह्वाः प्रकीर्तिताः ॥ हिरण्या पश्चिमे जिह्वा कनका मध्यमे स्थिता । रक्ता चैवोत्तरे जिह्वा कृष्णा दक्षिणदिक्स्थिता ॥ सुप्रभा चैव पूर्वायामतिरक्ताग्निदिक्स्थिता । बहुरूपा च शार्वायां जिह्वास्थानं प्रकीर्तितम् ॥ विवाहे पश्चिमा जिह्वा जातकर्मणि मध्यमा । उत्तरा चोपनयने पितृकार्ये तु दक्षिणा ॥ सर्वकर्मसु पूर्वायामभिचारेऽग्निदिक्स्थिता । शान्तिकर्मणि शार्वायां स्यान्कर्म समीरितम् ॥ प्रकारान्तरमप्याह **यमः**—आग्नेय्यां तिलहोमः स्यादैशान्यां गृहकर्म च । रक्तायां चरुहोमः स्यात्सुप्रभा सक्तुहोमके ॥ पुष्पं स्याद्बहुरूपायां शेषास्त-

व्याहृतिर्भवेत् । पूर्वदिक् सर्वहोमार्थमिति होमस्य लक्षणम् ॥ तत्तत्स्थानेषु होतव्यं विवाहादिषु कर्मसु । सप्त जिह्वा अविज्ञाय यः कुर्यादग्निसन्निधौ ॥ होमो निष्फलतां याति होता च नरकं व्रजेत् ॥ **चतुर्विंशतिमते**—हतं ज्ञानं क्रियाहीनं हतास्त्वज्ञानिनः क्रियाः । अपश्यन्नंधको दग्धः पश्यन्नपि च पंगुकः ॥

## ❀ होमनियमः, आहुतिप्रमाणादीनि ❀

**दक्षः**—पूर्वं प्रादेशिकां दत्त्वा ततो होमो विधीयते । द्वितीया पृष्ठतो देया ततोऽग्निमुपतिष्ठते ॥ पृष्ठतः होमान्ते, प्रादेशिका समित् । **चन्द्रिकायाम्**—तीर्थायतनसंपूर्णं प्रातरुत्तानपाणिना । द्व्यंगुलं समिधोतीत्य वाग्यतो जुहुयाद्धविः ॥ **गृह्यपरिशिष्टे**—उत्तानेन तु हस्तेन त्व्यंगुष्ठाग्रनिपीडितम् । संहतांगुलपाणिस्तु वाग्यतो जुहुयाद्धविः ॥ **स्मृत्यन्तरे**—पाण्याहुतिर्द्वादशपर्वपूरिका स्रुवाहुतिश्चेत्स्रुवमात्रपूरिका । स्वङ्गारिणि स्वर्चिषि चैव पावके दैवेन तीर्थेन च हूयते हविः ॥ **वृद्धहारीतः**—देवानां तर्पणं होमं बलिकर्म च भोजनम् । अर्चनं मार्जनं कुर्याद्देवतीर्थेन सर्वदा ॥ **विष्णुः**—अप्रबुद्धे सधूमे वा जुहुयाद्यो हुताशने । यजमानो भवेदन्धः सोऽपुत्रेति हि नः श्रुतम् ॥ योनार्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः । मन्दाग्निरामयावी च दरिद्रश्चोपजायते ॥ बहुशुष्केन्धने चाग्नौ सुसमिद्धे हुताशने । विधूमे लेलिहाने च होतव्यं कर्मसिद्धये ॥

## ❀ श्रौतपूर्वत्वादिविधिः ❀

यस्य श्रौताग्निः स्मार्तश्च, स पुनः पूर्वं श्रौतं कुर्यात् । तथाह **भरद्वाजः**—होमं वैतानिकं कृत्वा स्मार्तं कुर्याद्विचक्षणः । स्मृतीनां वेदमूलत्वात्स्मार्तं केचित्पुरा विदुः ॥ **शातातपः**—श्रौतं यत्तत्स्वयं कुर्यादन्योपि स्मार्तमाचरेत् । अशक्तौ श्रौतमप्यन्यः कुर्यादाचारमन्ततः ॥ **प्रजापतिः**—प्रमादात्कुर्वतां कर्म प्रच्यवत्यध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ यदगायि **भगवता**—यत्करोपि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ मदर्पणं यथा भवति तथा कुरुष्वेत्यर्थः । **चन्द्रिकायाम्**—नाहं कर्ता न मे तच्च ब्रह्मैव कुरुते स्वयम् । एतद्ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ **गार्ग्यः**—कृतदारो न वै तिष्ठेत्क्षणमप्यग्निना विना । तिष्ठेत चेद्द्विजो व्रात्यस्त्यक्त्वा तु पतितो भवेत् ॥ **वसिष्ठः**—अश्रोत्रिया अनूचाना अनग्नयः शूद्रकर्माणो भवन्तीति । **संवर्त्तः**—कपालभिन्नपात्रैर्वा आयसेनोमयेन वा । नाग्निप्रणयनं कुर्याद्यजमानभयावहम् ॥ पक्षहोमे **स्मृत्यर्थसारे** विशेषः—एका समित्सकृद्धोमः सकृदेव निमार्जनम् । उपस्थानं सकृत्कुर्याच्चैषा प्रकृतिरुच्यते ॥ **याज्ञवल्क्यः**—कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही । दायकालाहृते वापि श्रौतं वैतानिकाग्निषु ॥ समावृत्तस्य विवाहात् प्राक्कर्त्तव्यमाह **बोधायनः**—समावर्त्तनप्रभृत्याज्येन व्याहृतिभिरेव हूयते आपाणिग्रहणात्, पाणिग्रहणप्रभृति व्रीहिभिर्यवैर्वा हस्तेनैते आहुती जुहोतीति ॥ **आपस्तम्बश्च**—सायं प्रातरत ऊर्ध्वं हस्तेनैते आहुती तण्डुलैर्यवैर्वा जुहुयात्, स्थालीपाकवद्दैवतम्, सौरी पूर्वाहुतिः प्रातरित्येके, उभयतः

परिषेचनं यथा पुरस्तादिति ॥ अत ऊर्ध्वं आग्नेयस्थालीपाकानन्तरं नवनाड्यतिपत्तौ तु परेद्युर्वा सायमारम्भः । हस्तग्रहणाद्दर्वीस्रुगादिनिषेधः । एते अग्नये स्वाहा अग्नये स्विष्टकृते स्वाहेति होमावित्यर्थः । सायमाहुतिरग्नये स्वाहा अग्नये स्विष्टकृते स्वाहेति । स्थालीपाकवत् अग्निर्देवतेत्यर्थः । सौरीति–प्रातराहुतिः सूर्यायस्वाहा अग्नये स्विष्टकृते स्वाहेति । उभयतः परिषेचनमिति । अग्निं परिषिञ्चत्यदितेनुमन्यस्वेति गृह्योक्तक्रमेण प्राग्घोमात्पश्चाच्च परिषेचनं कार्यमित्यर्थः ॥

## ❀ पात्रतोयस्पर्शविधिः ❀

होमे पर्युक्षणे श्राद्धे सन्ध्याकर्मसु मार्जने । आचामे भोजने पात्रं तोयं वामेन संस्पृशेत् ॥ होमादिषु पात्रं सन्ध्यामार्जने तोयं वामहस्तेन स्पृशेदित्यर्थः ॥

## ❀ होमानन्तरकर्तव्यविधिः ❀

वामनपुराणे–होमं च कृत्वालभनं पशूनां ततो बहिर्निर्गमनं प्रशस्तम् । दूर्वाश्च सर्पिर्दधि सोदकुम्भं धेनुं सवत्सामृषभं सुवर्णम् ॥ मृद्गोमयं स्वस्तिकमक्षतानि तिला-न्मधु ब्राह्मणकन्यकाश्च । श्वेतानि पुष्पाणि तथा शमीं च हुताशनं चन्दनमर्क-बिम्बम् ॥ अश्वत्थवृक्षञ्च समालभेत ततश्च कुर्यान्निजजातिधर्मम् ॥ ब्रह्माण्डे–लोके तु मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः । हिरण्यं सर्पिरादित्य आपो राजा तथाष्ट-मः ॥ हरिद्रा लवणं धान्यं राजमार्षं तथा गुडम् । जीरकं फलपुष्पे च मङ्गलाष्टकमु-च्यते ॥ चन्द्रिकायाम्–रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिम् । गुरुमग्निं च सूर्यं च प्रातः पश्येत्सदा बुधः ॥

## ❀ होमकालात्ययप्रायश्चित्तम् ❀

स्मृतिरत्ने–कालातीतानि कर्माणि प्राप्नुवन्त्युत्तराणि च । कालातीतानि कृत्वैव विदध्यादुत्तराणि तु ॥ अकृत्वातीतकर्माणि यः कुर्यादुत्तराणि तु । न च देवान्न च पितॄन्न तद्गच्छति मानुषान् ॥ अनेन वचनद्वयेन प्रातर्वा सायं वा अतीतहोमं कृत्वा तत्तत्कालहोमं कुर्यान्न तन्त्रत इति सिद्धम् । यथाहुः–अग्राभ्यो होमकालेभ्यः प्राक् प्रायश्चित्तपूर्वकम् । पृथक् कुर्याद्गतान् होमान् दद्याद्विप्राय तत्परम् ॥ गतान् अती-तान् । जातुकर्णिः–अतीतकालं जुहुयादग्नौ विप्राय वाप्ययम् । नष्टेग्नौ विधिवद्-धात्कृत्वाधानं पुनः कृतिः ॥ अग्नौ नष्टे त्रयः कृच्छ्राः कर्तव्या वत्सरं प्रति । स्वा-ध्यायजपशीलानां कृच्छ्रमेकं विधीयते ॥ कात्यायनः–यावत्कालमहोमी स्यात्ताव-द्द्रव्याण्यशेषतः । तद्दानं चैव विप्रेभ्यो यथा होमस्तथैव तत् ॥ षष्टिप्रस्थमितं धान्यं त्रिप्रस्थप्रमितं घृतम् । औपासनाग्नौ नष्टे तु वत्सरस्य विधीयते ॥ कालभेदनिब-न्धाग्निविच्छित्तिप्रायश्चित्ततारतम्यमस्मदुक्ते दशनिर्णयग्रन्थे सुस्पष्टं द्रष्टव्यम् । व्या-सः–यदि मासमहोमी स्याद्विप्राय गुणशालिने । पञ्चप्रस्थं प्रदद्यात्तु यावत्तंडुलमे-व च ॥ एवं प्रतिमासं पञ्चप्रस्थपरिगणनया वत्सरस्य षष्टिप्रस्थतण्डुला देयाः स्युः ॥

## ❀ अथ पुनराधाननिमित्तम् ❀

तत्र कात्यायनः–विहायाग्निं सभार्यश्चेत् सीमामुल्लंघ्य गच्छति । होमकालात्य-

पेतस्य पुनराधानमिष्यते ॥ शौनकः—अग्नावनुगते यत्र होमकालद्वयं व्रजेत् । उभयोर्विप्रवासे तु लौकिकोऽग्निर्विधीयते ॥ अनुगते वर्तमाने । एतच्च होमकालद्वयात्यये पुनराधानविधानं समिदात्मसमारूढाग्निविषयम् । धार्यमाणश्चतूरात्रमहूयमानोऽग्निर्लौकिकः संपद्यते । इत्यापस्तम्बेन विशेषस्मरणात् । अत्र विशेषमाह शौनकः—धार्यमाणश्चतुर्वारमहुतोऽग्निस्तु लौकिकः । समिदात्मसमारूढो द्विकालमहुतस्तथा ॥ प्रोषितस्य यदा पत्नी यदि ग्रामान्तरं व्रजेत् । होमकाले यदि प्राप्ता न सा दोषेण युज्यते ॥ यजमानश्च पत्नी च उभौ प्रवसतो यदि । आहोमात्र निवर्तेतां पुनराधानमर्हति ॥ अतो होमकाले अन्यतरसन्निधाने न दोषः । यत्तु " होमद्वयात्यये दर्शपूर्णमासात्यये तथा पुनरेवाग्निमादध्यात्, इति भार्गवशासनमिति " इदं समिदात्मसमारूढविषयम् । नन्वत्र स्थालीपाकद्वयात्ययेऽपि पुनराधानं स्मर्यते, तथाच स्थालीपाक औपासनाङ्गम् ? मैवम्, सप्तपाकयज्ञेषु स्थालीपाकौपासनयोः पृथक्कर्मत्वस्मरणेन अङ्गाङ्गिभावाभावात्, तत्सहपठितेशानबल्याद्यकरणेऽप्याधानप्रसक्तेश्च, स्थालीपाकस्यावश्यकर्तव्यतापरं तद्वचनमिति न विरोधः । अत्र विशेषः—गृहे स्थितायां ज्येष्ठायां कनिष्ठा या बहिः स्थिता । होमकालद्वयेऽप्यत्र नात्र किंचिन्न दुष्यति ॥ गृहस्थितायां ज्येष्ठायां भार्यायां संध्ययोरपि । कनिष्ठानिर्गमाद्ग्रामाद्बहिश्चेन्नात्र दुष्यति ॥ अतः सर्वज्येष्ठानिर्गमे भर्तृविप्रवासे कनिष्ठाया अवस्थानेऽपि संसृष्टाग्निर्दुष्यतीति भावः । स्वेदार्थे वा प्रतापार्थे पादस्पर्शे कृतेनले । अस्पृश्यामेध्यसंस्पर्शे पुनराधानमिष्यते ॥ निक्षिप्याग्निं स्वदारेषु परिकल्प्य तथर्त्विजम् । प्रवसेत्कार्यवान् विप्रो वृथैव न चिरं वसेत् ॥ पैठीनसिश्च—प्रस्खलीकृतधर्मस्य पीड्यमानस्य शत्रुभिः । मासद्वयं प्रवासोऽस्ति परतो नाहिताग्निवत् ॥ अखण्डादर्शे—विच्छिन्नवह्निमाधाय कर्माङ्गं विधिवद्द्विजः । सायमारभ्य जुहुयादाहुतीनां चतुष्टयम् ॥ यदा संधीयते वह्निः प्रायश्चित्तपुरःसरः । तदा सायं विजानीयात्प्रातर्होमं ततः परम् ॥ प्रतिपत्पर्वसंधानं कर्म कर्तृविनाशनम् । संधाय त्रिदिनं हुत्वा स्थालीपाकं समाचरेत् ॥

## ❀ अग्न्यनुगतादिप्रायश्चित्तम् ❀

अत्र आपस्तम्बः—नित्यो धार्योऽनुगतो मन्थ्यः श्रोत्रियागाराद्वाऽग्निराहार्य उपवासश्चान्यतरस्य भार्यायाः पत्युर्वाऽनुगतेऽपि वा उत्तरया जुहुयान्नोपवसेदिति ॥ अत्र व्याख्यानार्थसंग्राहकश्लोकाः स्पष्टार्था लिख्यन्ते । निश्यह्नि वा विनष्टेऽग्नौ सद्यः संधानमिष्यते । तथैवानुगते सद्यः संधेयोऽपहृतेऽपि च ॥ तत्रोपोषणमेव स्यान्नष्टे चापहृतेनले । उपोषणं वानुगतावयाश्चाहुतिरेव वा ॥ भुक्तेः प्रागग्निनाशश्चेत्सद्यः संधाय पावकम् । आहोमकालं नाश्नीयाद्विकालं तत्परं यदि ॥ अनुगतः स्वयमेव निर्वाणः, नष्टः अमेध्याशुचिस्पृष्टः, अपहृतः अन्येन नीतः, तत्परं भुक्तेः परमित्यर्थः ॥

## ❀ आत्मसमारोपणविधिः ❀

कथंचित्कारणाशक्तौ बोधायनः—एकाग्नेस्त्रिविधं समारोपणमात्मन्यरण्योर्वा समित्सु, समिधश्चात्र पालाशाश्वत्थबिल्वोदुम्बरखादिराः, तास्वन्यास्मिन् " अयं ते

योनिः " इति मन्त्रेण समारोपयते अरण्योर्वा । खण्डान्तरे-अपि वा आत्मनि समारोपणं भवति " या ते अग्ने यज्ञिया तनूः " इत्यात्मानि समारोप्य, उपावरोह जातवेदः इति लौकिकाग्नावुपावरोह्य जुहुयात् । अपि वा " अयं ते योनिः " इति समिधि समारोप्य " आजुह्वानः, उद्बुध्यस्वाग्ने " इति द्वाभ्यां लौकिकाग्नौ समिधमभ्याधाय जुहुयादिति ॥ स एव-आत्मारूढो निमज्जेद्वा, वदेद्वा पतितादिभिः । अनृतौ वा स्त्रियं गच्छेदथ वा काममोहितः ॥ वदन्त्येषु निमित्तेषु केचिदग्निविनाशनम् । आपस्तम्बस्य तन्नेष्टमात्मारूढः सदा शुचिः ॥

## ❀ उपघातप्रायश्चित्तम् ❀

तथा खण्डान्तरे-अथाग्नेर्विपर्यासे व्याख्यास्यामो मेध्याशुचिचण्डालशूद्रवायसपतितरजस्वलाश्वभिश्च संस्पर्शे, अरण्योर्विनाशे, पुनरग्निमुपसमिन्ध्यादेव " सर्वेष्वग्न्युपघातेषु " इति स्मरणात् । अग्निं विसृज्यान्येन उपघातप्रायश्चित्तं होमं च कारयेत् " हापयेन्न तु हापयेत् " इति स्मृतेः । किंच भूर्भुवः स्वरिति सर्वप्रायश्चित्तानि । अहुतेष्वग्निषु यजमानोऽश्नीयात्, " यत्ते वयम्, यथाह तत् " इत्याज्याहुती जुहुयात् । समिधौ वा आदध्याज्जपेदित्येके । अनाज्ञातमिति तिस्रो ज्ञाते जुहुयाज्जपेदित्येके । " त्वन्नो अग्ने, सत्वन्नो अग्ने " इति सर्वत्रान्तराये, देवताविपर्यये चैते आहुती जुहोति । यदि सर्वतः सर्वो जुहुयात्तदिदं सर्वप्रायश्चित्तं सर्वत्र क्रियते । इत्यादिप्रायश्चित्तमापस्तम्बोक्तं स्मार्तेपि कर्तव्यम्, अविरोधात् ॥

## ❀ औपासनाग्निद्वयसंसर्गे आत्मसमारोपणविधिः ❀

औपसनाग्निद्वयसंयोगे स्मृत्यन्तरे विशेषः-औपासनाग्निद्वयसङ्गतिश्चेदग्निं समारोपणतो विभज्य । पूर्वस्य होतुर्विविचं च हुत्वा पश्चाच्च होतुः पथिकृच्च सोपि ॥ अस्यार्थः-द्वयोरौपासनाग्न्योः संसर्गे संसृष्टाग्नौ समारोपणार्थं विभज्य, ममायमंशो ममायमंश इति प्रत्येकमभिमानीकृत्य, स्वांशे पूर्वहोता, अग्नये विविचये स्वाहेति हुत्वा प्रायश्चित्ताहुतीर्जुहुयात् । पश्चाद्धोता तु अग्नये पथिकृते स्वाहा अग्नये विविचये स्वाहा इति हुत्वा प्रायश्चित्ताहुतीश्च जुहुयात् । ततस्तावुभौ सहैव समारोपयेतामित्यर्थः । एवं लौकिकाग्निसंपर्के विविचं पाहिपंचकं च जुहुयात् । अत्र बोधायनः-अग्न गृहमेधिनः इत्यारभ्य कृताग्निसंसर्गे च इत्यादिप्रायश्चित्तनिमित्तानि परिगणय्याह, अग्निमुपसमाधाय संपरिस्तीर्य, " पाहि नो अग्न एनसे स्वाहा, पाहि नो विश्ववेदसे स्वाहा, यज्ञं पाहि विभावसो स्वाहा, सर्वं पाहि शतक्रतो स्वाहा, पाहि नो अग्न एकया, पाह्युत द्वितीयया, पाह्यूर्जं तृतीयया, पाहि गीर्भिस्तिसृभिरूर्जांपते, पाहि चतसृभिर्वसो स्वाहा " इति जुहोतीति । स्मृत्यन्तरे-औपासनाग्नौ संसृष्टे समिधौ द्वे प्रतापयेत् । अयं ते योनिर्ऋत्विय इत्येवं युगपत्ततः ॥ अच्छागिरो मतय इति विभज्याग्निं ततः पुनः । अप्रतिष्ठा ततस्तस्मिन् प्रहरेदेकमेव हि ॥ आजुह्वानेति मन्त्रेण प्रायश्चित्तं ततो हुनेत् । अयाश्च व्याहृतीभिश्च घृतं हुत्वा ततः पुनः ॥ अग्निं विभज्य चैकेन स्मार्तकर्म समाचरेत् । संसृष्टाग्नेर्गृहस्थस्य विधिरुक्तो मनीषिभिः ॥ अस्यार्थः-

यस्य द्वे भार्ये, तयोरौपासनाग्निसंसर्गे विधिना कृते पुनरेवं विभज्य तयोरेकस्याः स्मार्तकर्माणि पुंसवनादीनि भर्ता समाचरेत् इति । पक्षान्तरं चोक्तम्–भार्याद्वयं यस्य भवेत्स तस्य संसृष्टवह्नौ सवनं प्रकुर्यात् । तत्रैव सीमन्तमपि प्रशस्तं वदन्ति वह्नेरविभाग इष्टः । अत्र पक्षे **शातातपः**–पत्न्योरेका यदि मृता तां दग्ध्वा स्मार्तवह्निना । आदधीतान्यया सार्धमाधानविधिना गृही ॥

## ❀ द्विभार्याग्निसंसर्गविधिः ❀

अत्र **बोधायनः**–अथ यदि गृहस्थस्तु द्वे भार्ये विन्देत कथं तत्र कुर्यादिति, यस्मिन्काले विन्देतोभावग्नी परिचरेत्, अपराग्निमुपसमाधाय संपरिस्तीर्याज्यं विलाप्य स्रुक्स्रुवौ निष्टप्य स्रुचि चतुर्गृहीतं गृहीत्वा अन्वारब्धायां यजमानो जुहोति "नमस्त ऋषे गद, अव्यधायै त्वा स्वधायै त्वा, मान इन्द्राभितस्त्वदष्टारिष्टा सः, एवाग्न इन्तवेदस्तु स्वाहा" इति । अथ समारोपयत्वयन्ते योनिऋत्वियः इति समिधि समारोपयेत् । पूर्वाग्निमुपसमाधाय, "आजुह्वान, उद्बुध्यस्वाग्ने" इति समिधमाधाय संपरिस्तीर्य, आज्यं विलाप्योत्पूय, स्रुक्स्रुवौ निष्टप्य, संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वा द्वयोर्भार्ययोरन्वारब्धयोः "यो ब्रह्मा ब्रह्मणः" इत्यनेन सूक्तेनैकं चतुर्गृहीतं जुहोति । अष्ट ऋचं जुहोति । प्रसिद्धमाग्निमुखात्कृत्वा, पक्वाज्जुहोति "समित १संकल्पेथाम्" इति । "पुरोनुवाक्यामनूच्य, अग्ने पुरीष्य" इति याज्यया जुहोति । तथाज्याहुतीरुपजुहोति । "पुरीष्यस्त्वमग्ने" इत्यन्तादनुवाकस्य स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानात् । अथाग्रेणाग्निं दर्भस्तम्बेषु हुतशेषं निदधाति । "ब्रह्मजज्ञानम्, पिताविराजाम्" इति द्वाभ्याम्,प्रसिद्धमौपासने पार्वणादि कुर्यात् । सन्तिष्ठत औपासनादितन्त्रमिति ॥

## ❀ ब्रह्मचारिणः कर्तव्यविधिः ❀

**हारीतः**–ब्रह्मचारी यदा त्वग्नौ नादध्यात्समिधः क्वचित् । गृहीयात्तं तदा मृत्पुरादध्यात्समिधस्ततः ॥ **याज्ञवल्क्यः**–संध्यां प्राक्प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् । अग्निकार्यं ततः कुर्यात्संध्ययोरुभयोरपि ॥ **सुमन्तुः**–ब्रह्मचर्यं तपो भैक्षं संध्ययोरग्निकर्म च । स्वाध्यायो गुरुवृत्तिश्च चर्येयं ब्रह्मचारिणः ॥ **याज्ञवल्क्यः**–विहितस्यानुष्ठानान्निन्दितस्य निषेवणात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ इति ॥

## ❀ अथ ब्रह्मयज्ञविधिः ❀

तत्र **श्रुतिः**–ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि ग्रामादच्छदिर्दर्शे उदीच्यां प्रागुदीच्यां वोदित आदित्य इति ॥ उदित आदित्य इति होमानन्तरमित्यर्थः । पश्चाद्वा प्रातराहुतेः ॥ संध्याकर्मावसाने तु स्वयं होमो विधीयते इत्यादि स्मृतेः । अत्र कथंचित्प्रातःकाले ब्रह्मयज्ञासंभवे **कात्यायनः**–यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स उच्यते । अतो वेद एव ब्रह्मयज्ञेध्येतव्यः । **बृहस्पतिः**–स चार्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः । **पैठीनसिः**–स्वशाखाध्ययनं यत्तद्ब्रह्मयज्ञं प्रचक्षते । ब्रह्मयज्ञपरो विप्रो

ब्रह्मलोके महीयते॥ अत्र स्वशाखेति विशेषितत्वादधीतमपि वेदान्तरं ब्रह्मयज्ञे नाध्येतव्यमिति सिद्धम् ॥ वैश्वदेवावसाने वा नान्यदत्र निमित्ततः। वैश्वदेवेति मनुष्ययज्ञान्तोपलक्षणम् । तथा कौर्मे–यदि स्यात्तर्पणादर्वाक् ब्रह्मयज्ञः कृतो नहि । कृत्वा मनुष्ययज्ञं वै ततः स्वाध्यायमारभेत् ॥ शौनकः–प्राणायामैर्दग्धदोषः शुक्लाम्बरधरः शुचिः । यथाविध्यप आचम्य आहरेद्दर्भसंस्तरम् ॥ पवित्रपाणी कृत्वा तु उपस्थे दक्षिणोत्तरौ । अत्र श्रुतिः–दक्षिणत उपवीयोपविश्य हस्ताववनिज्य त्रिराचामेद्द्विः परिमृज्य सकृदुपस्पृश्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्रागासीनो दक्षिणोत्तरौ पाणी कृत्वा सपवित्राओमिति प्रतिपद्यत इति ॥ ब्रह्मयज्ञस्यापि महायज्ञत्वात्, " अथो आहुः । सर्वेषु यज्ञक्रतुष्विति । होष्यन् अप उपस्पृशेत् । विद्युदसि विद्यमे पाप्मानमिति। अथ हुत्वोपस्पृशेत् । वृष्टिरसि वृश्च मे पाप्मानमिति " इति श्रुतेः । अत्रापि विद्युद्वृष्टी भवतः । ब्रह्मयज्ञेन यक्ष्य इति संकल्प्य विधिवत्पाणिपादौ प्रक्षाल्य, त्रिः प्राश्य द्विरुन्मृज्य सकृदुपस्पृश्य, दक्षिणेन पाणिना सव्यं पाणिं पादौ शिरश्च प्रोक्ष्य, शिरश्चक्षुषी नासिके श्रोत्रे हृदयं च विधिवत्स्पृष्ट्वा, दर्भास्तृते शुचौ देशे उपस्थं कृत्वा, प्राङासीनस्त्रिः प्राणानायम्य, सपवित्रौ दक्षिणोत्तरौ करौ कृत्वा, तत्सवितुरिति पच्छोऽर्धर्चशस्ततः सर्वा व्याहृतीर्विहृताः पादादिष्वन्तेषु वा तथार्धर्चयोरुत्तमां कृत्स्नायामिति ब्रह्मोपदेशोक्तक्रमेण सप्रणवमुच्चार्य, हरिरोमिति निर्दिश्य यत्कर्म क्रियते बुधैः । अधीयते वा देवर्षे तद्धि वीर्योत्तरं भवेत ॥ इति वचनाद्धरिरोमित्युच्चार्य, स्वाध्यायमधीयीत । अयं पक्षोनेकशिष्टादृतः । पक्षान्तरं तु ओमिति प्रतिपद्य, भूर्भुवः सुवरिति वाचः सत्यमुक्त्वा, गायत्रीं पादशोऽर्धशः सर्वामिति क्रमादुक्त्वा, अधीयीतेति । " एकामप्यृचं यजुः साम वा सब्रह्मयज्ञः संतिष्ठते, यदृचोधीते पयसः कुल्या अस्य पितॄन् " इति श्रुत्यर्थफलसिद्ध्यर्थं जपित्वा, परिधानीयां त्रिरन्वाहेति श्रुतेः । नमो ब्रह्मण इति परिधानीयां नमो विष्णवे बृहते करोमीत्यन्तं त्रिर्जपेत् । अत्र स्मृतिरत्नावल्याम्–सव्यस्य पाणेरंगुष्ठप्रदेशिन्योस्तु मध्यत । दक्षिणस्यांगुलीर्न्यस्य चतस्रोंगुष्ठवर्जिताः ॥ तथा सव्यकरांगुष्ठं दक्षिणांगुष्ठवेष्टितम् । प्रणवं व्याहृतीश्चैव गायत्री च जपेत्क्रमात् ॥ पच्छोऽर्धर्चश उच्छ्वासाद्वेदादींश्चतुरो जपेत् । शौनकश्च–अभ्यूर्वया व्याहृत्या सावित्रीमन्वाह पच्छोऽर्धर्चशः सर्वामिति । द्यावापृथिव्योः समीक्षमाणः संमील्य वा, यथायुक्तमात्मानं मन्येत, तथा युक्तोधीयीत । विष्णुश्च–ओंकारं व्याहृतीस्तिस्रो गायत्रीं च तदिदृचम् । मनसैताननुस्मृत्य वेदादीन् समुपक्रमेत् ॥ एवं च नित्यप्रश्नमधीत्य नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह, ततो वृष्टिरसीत्युक्त्वाप उपस्पृश्य गृहानेति, ततो यत्किंचित् ददाति सा दक्षिणा । एवं प्रश्नाध्ययनसामर्थ्ये. यथाशक्ति वा वेदं क्रमादधीयीत । अत्र मनुः–आहैव स नखाग्रेभ्यः परमं तप्यते तपः । यः स्रग्व्यपि द्विजोधीते स्वाध्यायं शक्तितोन्वहम् ॥ आनखाग्रेभ्य इत्यन्वयः। हः प्रसिद्धौ। तप्यत एव । स्रग्वीति स्वैराचारं दर्शयति । तथापि योधीतेन्वहं शक्त्येति च । अत्र पक्षे, भूर्भुवः सुवः सत्यं तपः श्रद्धायां जुहोमीत्युक्त्वा. परिधानीयां त्रिर्जपेत. " तैत्ति-

वेदस्य स्वाध्याय उपात्तो भवति " इति स्मृतेः । उपात्तः अधीतः, अयं नित्यः । अग्निकार्यपरिभ्रष्टः पतितः परिकीर्तितः । ब्रह्मयज्ञविहीनश्च ब्रह्महा कीर्तितो बुधैः ॥ इति प्रत्यवायस्मृतेः । " एतत्तं योनूत्सृजत्यभागो वाचि भवत्यभागो नाके " इति श्रुतेश्च । अतोनधीतस्यापि ब्रह्मयज्ञे गायत्री यथाशक्ति जप्तव्या । तथा **मनुः**—अपां समीपे नियतो नैत्यिकं विधिमास्थितः । गायत्रीमप्यधीयीत गत्वारण्यं समाहितः ॥ **श्रीविष्णुधर्मोत्तरे** च—ब्रह्मयज्ञे जपन् सूक्तं पौरुषं चिन्तयन् हरिम् । स सर्वान् जपते वेदान् सांगोपांगान् विधानतः ॥ अतोनधीतोशक्तो वा ब्रह्मयज्ञे पुरुषसूक्तमेव जपेत् । अयं काम्यश्च । तथा **विज्ञानेश्वरे**—यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् । वेद एव द्विजातीनां निःश्रेयसकरः परः ॥ इति ग्रहणाध्ययनफलमुक्त्वा काम्यब्रह्मयज्ञफलमाह—मधुना पयसा चैव देवान् संतर्पयेद्द्विजः । पितॄन्मधुघृताभ्यां च ऋचोधीते हि योन्वहम् ॥ यजूंषि शक्तितोधीते योन्वहं स घृतामृतैः । प्रीणाति देवानाज्येन मधुना च पितॄंस्तथा ॥ स तु सोमघृतैर्देवांस्तर्पयेद्यो-न्वहं पठेत् । सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥ वाको वाक्यं पुराणं च नाराशंसीश्च गाथिकाः । इतिहासांस्तथा विद्यां योधीते शक्तितोन्वहम् ॥ मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् । करोति तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥ ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः । इति । अत्र " यदृचोधीते पयसः कुल्या अस्य " इति श्रुत्यर्थोनुसंधेयः । अतः । वेदाथर्वपुराणानि सेतिहासानि शक्तितः । ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥ इत्यादिवेदव्यतिरिक्तजपः काम्यविषयः । वाको वाक्यम् प्रश्नोत्तररूपं वेदवाक्यम्, पुराणं ब्राह्मादि, चशब्दान्मन्वादि धर्मशास्त्रम्, नाराशंसीः रुद्रदैवत्यमन्त्राः, गाथाः यज्ञगाथेन्द्रगाथाद्याः, इतिहासाः महाभारतादयः, विद्याः—वारुण्याद्याः, एवं व्याख्यातम् । नित्यकाम्यब्रह्मयज्ञसाधारणफलमाह **याज्ञवल्क्यः**—यं यं क्रतुमधीयीत तस्य तस्याप्नुयात्फलम् । त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते ॥ नित्यग्रहणं काम्यस्याप्युपलक्षणमिति व्याख्यातम् । यो यद्यत्क्रतुप्रतिपादकवेदभागमधीयीत स तत्तत्क्रतुफलं त्रिवारकृतवित्तपूर्णभूदानस्य च फलमाप्नोतीति व्याख्यातम् । अत एव हि **मनुः**—वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः । न ह्यस्याहुः परं धर्ममुपधर्मोन्य उच्यते ॥ एवकारेण अन्ययोगव्यवच्छेदः । अत्र **आपस्तम्बः**—नित्यप्रश्नस्य चाविधिना तस्य विधिरकृतप्रातराश उदकान्तं गत्वा, प्रयतः शुचौ देशे अधीयीत यथाध्यायमुत्सृजन्वाचेति । विधिं विना नित्यप्रश्नस्य अध्ययनं न कार्यम् । अयमत्र विधिः । अकृतप्रातराश इत्यादि ॥ अतो भुक्तस्य ब्रह्मयज्ञे नाधिकारः, तथा अस्पृश्याशौचदुष्टस्यापि । अदुष्टस्याप्यमेध्यशवशूद्रान्त्यपतितान्तिके देशे नाध्यायः । अत्र " तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदात्माशुचिर्यद्देशः " इति श्रुत्यर्थोनुसंधेयः । **मनुः**—नैत्यिके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम् । द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः ॥ स्वाध्यायभूमिं चाशुद्धामात्मानमशुचिं द्विजः । यथाध्यायमिति पदक्रमानुषङ्गनिषेधः । वाचेति मानसस्य व्युदासः । उच्चैरध्येतव्यमिति भावः । तदेवं, विशुद्धावनध्ययनेप्यध्ययनं कार्यमेव ।

तथा ब्राह्मणम्–य एवं विद्वान् मेघे वर्षति वियोतमाने स्तनयत्यवस्फूर्जति पवमाने वायावमावास्यायां स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्याय इति। तथा **वाजसनेयिब्राह्मणं** च–ब्रह्मयज्ञो ह वा एष यः स्वाध्यायस्तस्यैते वषट्कारा यत् स्तनयति यद्विद्योतते यदवस्फूर्जति यद्वातो वायति तस्मात्स्तनयति वियोतमानेवस्फूर्जति वाते वा वायत्यधीयीतैव वषट्काराणामच्छम्बट्कारायेति ॥ अच्छम्बट्काराय अव्यर्थत्वाय । अध्ययनाभावे ब्रह्मयज्ञस्य स्तननादयो वषट्कार स्वाहाकारादयो व्यर्थाः स्युरिति भावः। नन्वस्य " अथ यदि वातो वा वायात्स्तनयेद्वा वियोतेत वावस्फूर्जेद्वैकां वर्चमेकं वा युजुरेकं वा सामाभिव्याहरेत् " इति शाखान्तरे वाजसनेयिब्राह्मणवाक्यस्य समाप्त्यश्रवणात्, कथं प्रश्नाध्ययनं ? इति चेन्न । विद्यां प्रत्येवानध्यायः श्रूयते " न कर्मयोगे मन्त्राणाम् " इत्यनध्यायप्रतिषेधात् । विद्यां प्रत्येव वेदाध्ययनं प्रत्येवानध्यायः श्रूयते न पुनर्मन्त्राणाम्, कर्मयोगे ग्रहणधारणाध्ययनविलक्षणत्वात् । अर्थान्तरं हि मन्त्राणां ब्रह्मयज्ञाग्निहोत्रादिकर्मयोगः। अतो नैवात्र दोषः । अन्यथा नित्यत्वव्याघातात् । यथाशक्त्यध्ययनेन तच्चरितार्थमिति चेन्न, नित्यप्रश्नस्मरणव्याकोपापत्तेः, तत्सहपठिताग्निहोत्रमन्त्राणामप्येकदेशाध्ययनप्रसक्तेः " तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदात्माशुचिर्यद्देशः " इति द्वयोरेवानध्यायनिमित्तत्वश्रुतेः, श्रुत्यैव " अमावास्यायां स्वाध्यायमधीयीत " इति नित्यानध्यायेष्वपि अध्ययनविधानाच्च । अतो नित्यप्रश्नाध्यायिनो ह्यनध्यायगन्धो नास्त्येव । अनियतप्रश्नाध्यायिनस्तु–अल्पं जपेदनध्याये पर्वण्यल्पतरं जपेत् । इत्यनध्याये अल्पमेवाध्ययनमेकां वर्चमित्युक्तम् । अतो नित्यत्वात्प्रश्नाध्ययनं नित्यमेव कर्तव्यम् । तथा **मनुः**–नैत्यिके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम् । ब्रह्माहुतीहुतं पुण्यं स्वा यायश्च वषट्कृतम् ॥ **अखण्डादर्शे**–अनध्यायादिवसेष्वप्येवमेव अध्ययनं कर्तव्यम्, नित्यत्वात् । तथा **मनुः**–वेदोपकरणे चैव स्वाध्याये चैव नैत्यिके । नानुरोधोस्त्यनध्याये होममन्त्रेषु चैव हि ॥ **स्मृत्यन्तरे**–नानध्यायोस्ति मन्त्राणां रौद्राणां च विशेषतः । पुरुषसूक्ते पावमाने गृहीतनियमादृते ॥ जपे नित्ये च काम्ये च क्रतौ पारायणेपि च । नानध्यायोस्ति मन्त्राणां होममन्त्रेषु सर्वदा ॥ **उज्ज्वलायां** च–का पुनरसौ स्मृतिः, या ब्रह्मयज्ञेप्यनध्यायमुपदिशति, मानवे तावद्विपर्ययः श्रूयते " नैत्यिके नास्त्यनध्यायः " इति, सामान्येनानध्यायोपदेशस्तु ब्रह्मयज्ञादन्यत्र चरितार्थः। तस्मात्तादृशी स्मृतिर्मृग्येति । तथा **स्मृतिरत्नावल्याम्**–देवतार्चनमन्त्राणा नानध्यायस्सदा स्मृतः । संकल्पितानां मन्त्राणां वैदिकानां महामते ॥ नानध्यायनिरोधोस्ति जपकर्मणि सर्वदा । नित्ये जपे च काम्ये च क्रतौ पारायणे तथा ॥ नानध्यायोस्ति वेदानां ग्रहणे ग्रहणं स्मृतम् । आरब्धे वेदपारायणे, पुरुषसूक्तम्, त्रिसुपर्णम्, पञ्चशान्तिम्, रुद्रैकादशीम्, नित्यमहं जपिष्यामीति संकल्पितवैदिकमन्त्राणां जपे, छन्दःकल्पादिवेदाङ्गेषु, यज्ञमन्त्रेषु, नैमित्तिकविधौ, ब्रह्मयज्ञे च नानध्ययनगन्धोस्तीत्यर्थ । **स्मृतिसारसमुच्चयेपि**–सप्तानां व्याहृतीनां च गायत्र्याः शिरसस्तथा । नित्ये नैमित्तिके काम्ये व्रते यज्ञे तथा क्रतौ ॥ मन्त्रे काम्य-

कार्ये च नानध्यायः सदा स्मृतः ॥ धर्मोद्योते–सौराणां रौद्रमन्त्राणां वैदिकानां च नैत्यिके । जपहोमादिकार्येषु नानध्यायो न काम्यके ॥ इत्यादिबहूनि स्मृत्यन्तरवचनानि सन्ति, तानि विस्तरभयान्न लिख्यन्ते । अतो नित्यप्रश्ने अनध्यायो नास्तीति निश्चीयते । ननु "मनसा चानध्याये विद्युति चाभ्यग्रायां स्तनयित्नावप्रायत्ये प्रेतान्ने नीहारे च" "मानसं परिचक्षते । श्राद्धभोजन एवैके" इति स्मरणान्मनसैवाध्ययनमनध्यायेष्विति चेन्न । "ग्रामे मनसा" इतिवदमावास्यायां मनसा स्वाध्यायमधीयीतेत्यश्रवणात्, मन्वादिवचनेषु मानसत्वानाघ्राणाच्च । "सर्वाह्न सुयुक्तोऽध्ययनादनन्तरोध्याये, तथा गुरुकर्मसु मनसा चानध्याये" इत्युक्तमानसाध्ययनानुवाद एवायं विद्युदादिषु मानसाध्ययनविधानार्थः । किंच, इदं मनसा चानध्याय इति वचनं ब्रह्मयज्ञविषयं न संभवति, श्राद्धभोजन एवेति ज्ञापनात् । नहि भोजनानन्तरं ब्रह्मयज्ञोस्ति, अकृतप्रातराश इति स्मृतेः । अतो भुक्तस्यार्धलोपेन तद्विषयमानसाध्ययनवर्जनस्मरणानुपपत्तौ सर्वाह्नाध्ययनस्य विहितमानसत्वानुवाद एवायं विशेषविधानार्थमिति सुव्यक्तं सुधियामित्यलम् ॥

## ❋ अपत्नीकस्य ब्रह्मयज्ञाद्यनधिकारः ❋

किंच, "अयज्ञो वा एषः, योऽपत्नीकः" "पाणिग्रहणादधिगृहमेधिनो व्रतम्" पञ्चक्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ॥ इत्यादिभिः पञ्चयज्ञानां गृहमेधिविशिष्टत्वावगमात्, अपत्नीकस्यायज्ञार्हत्वश्रुतेश्च, विधुरस्य न ब्रह्मयज्ञादिपञ्चमहायज्ञप्रसङ्गः । ब्रह्मचारिभिस्तु कर्तव्य एव । तथा नारदीये–सायं प्रातरग्निकार्यं यथाकालं जितेन्द्रियः । कुर्यात्प्रतिदिनं वर्णी ब्रह्मयज्ञं च तर्पणम् ॥ तन्त्रत्रयं काठकं च वैश्वदेवमनून् पठेत् । मन्त्रप्रश्नी पुनश्चैवं ब्रह्मयज्ञे क्रमं विदुः ॥

## ❋ अङ्गाध्ययने नानध्यायः ❋

अङ्गाध्ययनविषये स्मृत्यर्थसारे विशेषः–चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितेषु तु । वेदाङ्गन्यायमीमांसाधर्मशास्त्राणि चाभ्यसेत् ॥ अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः । न धर्मशास्त्रेष्वन्येषु पर्वण्येतानि वर्जयेत् ॥ एतद्धर्मशास्त्रादिवर्ज्यत्वस्मरणमभ्यासविषयम् । अभ्यस्तस्य तु–पर्वसु प्रयतो नित्यमुक्तदानफलं लभेत् । इति बृहस्पतिस्मरणान्न दोषः । अत्र मनुः–वेदाभ्यासोन्वहं शक्त्या महायज्ञक्रिया मता । नाशयत्याशु पापानि महापातकजान्यपि ॥ अत्र शिक्षाः–प्रातः पठेन्नित्यमुरस्थितेन स्वरेण शार्दूलरुतोपमेन । मध्यंदिने कण्ठगतेन चैव चक्राह्वसंक्रन्दितसन्निभेन ॥ तारं तु विद्यात्सवने तृतीये शिरोगतं तच्च सदा प्रयोज्यम् । मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरोगतेन ॥ मन्दमेव पठेत्प्रातरुच्चैर्मध्यंदिने पठेत् । उच्चैरेवापराह्णे तु संध्याकाल उपारमेत् ॥ "स वा एष यज्ञः सद्यः प्रतायते सद्यः संतिष्ठते तस्य प्राक् सायमवभृथः" इति श्रुतेः । संध्याकालात्प्रागेव ब्रह्मयज्ञः कर्तव्य इत्यर्थः । सद्यः प्रतायते–न तु यज्ञान्तरवद्वसन्तकालादिनिरीक्षणम् । सद्यः संतिष्ठते–न तु तद्वत्कालान्तरे समाप्तिः । अवभृथः समापनमित्यर्थः ॥

## ❀ तर्पणविधिः ❀

अत्र **योगयाज्ञवल्क्यः**–जपेद्वेदादिमेकाग्रस्तटे बद्धाञ्जलिः शनैः । ब्रह्मयज्ञप्रसिद्ध्यर्थं ब्रह्मविद्यामथापि वा ॥ जप्त्वा वा प्रणवं शक्त्या ततस्तर्पणमाचरेत् । **आश्वमेधिके विष्णुधर्मोत्तरे** च–आदौ वेदं समारभ्य तथोपर्युपरि क्रमात् । यदधीतेन्वहं शक्त्या ब्रह्मयज्ञं प्रचक्षते ॥ **वसिष्ठः**–ऋक्सामाथर्ववेदोक्तान् जपेन्मन्त्रान् यजूंषि च । जपित्वैवं ततः कुर्याद्देवर्षिपितृतर्पणम् ॥ यजुःशाखिनां तु काण्डानुक्रमण्यां काण्डऋषितर्पणमुक्तम् । अथ काण्डऋषीनेतानुदकाञ्जलिभिः शुचिः । अन्वग्रस्तर्पयेन्नित्यं मन्त्रैः पर्वाष्टमीषु च ॥ इति । अत्र **कपर्दिस्वामी**–काण्डर्षितर्पणं नित्यमुपेतेन निवीतिना । वार्यञ्जलिभिरन्यैश्च कार्यं पर्वाष्टमीषु च ॥ तदेवम्, तर्पणं तु द्विजः कुर्यात्प्रत्यहं स्नातकस्ततः । देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम् ॥ ऋषीन् प्रजापतिपुत्रान् संतर्प्य द्विजसत्तमः । ततः परं द्विराचम्य वाग्यतः प्रविशेत् गृहम् ॥ इति शातातपादिभिरुक्तेषु तर्पणेषु स्वशाखाव्यवस्था अनुसंधातव्या ॥

## ❀ वेदाभ्यासविधिः ❀

**दक्षः**–द्वितीये तु तथा भागे वेदाभ्यासो विधीयते । वेदस्वीकरणं पूर्वं विचारोभ्यसनं जपः ॥ तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा । समित्पुष्पकुशादीनां स कालः समुदाहृतः ॥ **याज्ञवल्क्यः**–हुत्वाग्नीन् सूर्यदैवत्यान् जपेन्मन्त्रान् समाहितः । वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ॥ अयं च शास्त्राभ्यासो वेदाविरोधेन कार्यः, अन्यथा दोषश्रवणात् । तथा **मनुः**–योनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ **पराशरः**–यथा दारुमयो हस्ती यथा चर्ममयो मृगः । तथा विप्रोनधीयानस्त्रयस्ते नामधारकाः ॥ **सारसमुच्चये**–अनधीत्य त्रयीं विप्रा ये हि शास्त्रमधीयते । सर्वाभरणनद्धाङ्गा नग्नाः स्त्रिय इव ध्रुवम् ॥ **विष्णुधर्मोत्तरे**–अधीतमपि यो वेदं विमुञ्चति यदा नरः । भ्रूणहा स तु विज्ञेयो वियोनिमधिगच्छति ॥ अतो द्वितीयभागे गृहस्थेन वेदस्याविस्मरणार्थं वेदाभ्यासः कार्यः । अन्यथा "अधीतस्य च नाशनम्, पुरुषवेदो ब्रह्मोज्झम्" इति याज्ञवल्क्यगौतमापस्तम्बादिभिरधीतवेदनाशे दोषस्मरणात् । तथा **संवर्तः**–अधीत्य विधिवत्पूर्वं, मृषिमाचार्यतः शुभात् । अनन्तरं यथाध्यायः कर्तव्यो धीमता ध्रुवम् ॥ ततः क्रममधीयीत स्वरसंस्कारसंयुतम् । पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः ॥ स्वरमात्राविभागज्ञो गच्छेदाचार्यसम्पदम् । **शिक्षायाम्**–योनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ **यमः**–न जातु परशाखोक्तं बुधः कर्म समाचरेत् । आचरन्परशाखोक्तं कर्मारण्डः प्रकीर्तितः ॥ यदाम्नातं स्वशाखायां पारक्यमविरोधि च । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ यस्य यावत्स्वसूत्रोक्तं स्वल्पं वा यदि वा बहु । तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥ स्वसूत्रे विद्यमाने तु परसूत्रेण वर्तते । बोधायनमतं कृत्वा स्वसूत्रफलभाग्भवेत् ॥ शाखिनामपि सर्वेषामभावे स्वप्रयोगिनाम् । आपस्तम्बेन मार्गेण कर्तव्यं मनुरब्रवीत् ॥ श्रुति-

स्मृती तु विप्राणां चक्षुषी द्वे विनिर्मिते । काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्तितः॥ अधीत्य चतुरो वेदान् सषडङ्गपदक्रमान् । स्मृतिहीना न शोभन्ते चन्द्रहीनेव शर्वरी ॥ अधीत्य विधिवद्विप्रो वेदार्थं न विचारयेत् । स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते॥ वेदशास्त्रार्थतत्त्वज्ञो यत्र यत्राश्रमे वसेत् । स्वर्गलोकमवाप्नोति नरकं च न गच्छति ॥ धर्म्यं यशस्यमायुष्यं पुण्यं स्वर्ग्यं तथैव च । धारणाद्धर्मशास्त्रस्य ब्रह्मलोकमवाप्नुयात् ॥ श्रुतिहीनमधीतं यन्नेहामुत्र चं तद्भवेत् । श्रुतं तु केवलमपि समुद्धाराय कल्पते ॥ समुचितं स्तोकमपि श्रुताधीतं विशिष्यते । ज्ञानं कर्म च संयुक्तं मुक्त्यर्थं कल्पितं यथा ॥ अधीतं श्रुतिसंयुक्तं तथा श्रेष्ठं न केवलम् । **पराशरः**–स्वरमात्राविहीनं तु पदाक्षरविवर्जितम् । न्यूनातिरिक्तं यत्किंचिदाभिर्गोभिरुदीरयेत् ॥ प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ इति वचनात्सर्वेषां कर्मणामन्ते प्रायश्चित्तार्थं श्रीकृष्णस्मरणमेव कर्तव्यम् ॥

## ❀ समित्पुष्पाद्याहरणविधिः ❀

तत्र **संवर्तः**–समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत् । शूद्राहृतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः ॥ **श्रीविष्णुमन्दिरे**–अरण्याद्वा गृहाद्वापि विक्रीतान्यापणस्थलात् । अयाचितानि पुष्पाणि लब्धान्यर्हाणि नार्चने ॥ त्याज्यं पर्युषितं जन्तुदूषितं पादलङ्घितम् । म्लानं स्पृष्टं तथास्पृश्यैर्नीतं च प्रतिलोमजैः ॥ **तुलसीमाहात्म्ये**–उत्तमं स्वार्जितं पुष्पं मध्यमं वन्यमुच्यते । अधमं तु क्रयक्रीतं पारक्यमधमाधमम् ॥ हस्तानीतं पटानीतं स्वयं पतितमेव वा । देवारामोद्भवं पुष्पं गृहदेवाय नार्चयेत् ॥ अयने ह्युपरागे च भौमभार्गवभानुषु । नाहरेत्तुलसीपत्रं गृहदेवार्चने बुधः ॥ **आश्वमेधिके**–अर्कपुष्पाणि चान्यानि ह्यर्कपत्रस्थितानि च । निर्गन्धानि च पुष्पाणि सर्वाण्येतानि वर्जयेत् ॥ **स्मृत्यन्तरे**–आरवारे च शुक्रे च मन्वादिषु युगादिषु । नाहरेत्तुलसीपत्रं मध्याह्नात्परतस्तथा ॥ संक्रान्त्यां पक्षयोरन्ते द्वादश्यां निशि सन्ध्ययोः । तुलसीं ये विचिन्वन्ति ते कृन्तन्ति हरेः शिरः ॥ तथा **अन्यत्र**–भृगवर्काङ्गारके वारे द्वादश्यां पश्चपर्वसु । नाहरेत्तुलसीपत्रं नन्दायां श्रवणेऽपि च ॥ **महाभारते**–तुलसीपत्रमादाय मद्भक्तो यत्र गच्छति । तमेवानुगमिष्यामि यथा गौर्वत्सलाभकम् ॥ तुलस्याऽनुदिनं देवं योऽर्चयेद्गरुडध्वजम् । जन्ममृत्युजराद्युःखैर्मुक्तो मुक्तिमवाप्नुयात् ॥ **माघमाहात्म्ये**–मणिकाञ्चनपुष्पाणि मुक्तावैडूर्यकानि च । तुलसीपत्रदानस्य कलां नार्हन्ति षोडशीम् ॥ **तुलसीस्तवे**–सुमंजरीदलैर्युक्तैः कोमलैस्तुलसीदलैः । ये कुर्वन्ति हरेः पूजां ते कृतार्थाः कलौ युगे ॥ शुष्कं पर्युषितं वार्द्रं काष्ठं वा तुलसीदलम् । अर्चने वासुदेवस्य लक्षकोटिगुणं भवेत् ॥ तुलसीग्रहणं शस्तं विष्णोरर्चनहेतवे । वर्ज्यं पर्युषितं पुष्पं न वर्ज्यं तुलसीदलम् ॥ **देवलस्मृतौ**–वर्ज्यं पर्युषितं तोयं न वर्ज्यं जाह्नवीजलम् । अन्यत्पर्युषितं वर्ज्यं न वर्ज्यं पद्मपुष्पकम् ॥ **श्रीभगवानाह पाद्मे**–सर्वेषां चैव पुष्पाणां पत्राणां चैव सुन्दरि । आधिक्यं तत्र देवेशि प्रीतोऽहं तव दर्शनात् ॥ शुष्कैः पर्युषितैर्वापि काष्ठमूलमृदादिभिः । अर्चनान्मम बिम्बस्य सदा शुद्धिर्भविष्यति ॥ नमस्कारमन्त्रः–यन्मूले सर्वतीर्थानि यन्मध्ये सर्वदेवताः ।

यदग्रे सर्ववेदाश्च तुलसीं त्वां नमाम्यहम् ॥ ग्रहणमन्त्रः—तुलस्यमृतसम्भूते सदा त्वं केशवप्रिये। केशवार्थे लुनामि त्वां वरदा भव शोभने ॥ मोक्षैकहेतोर्धरणिप्रसूते विष्णोः समस्तस्य गुरोः प्रिये मे । आराधनार्थं पुरुषोत्तमस्य लुनामि पत्रं तुलसि क्षमस्व ॥ प्रसीद मम देवेशि प्रसीद हरिवल्लभे । क्षीरोदमथनोद्भूते तुलसि त्वं प्रसीद मे ॥ **माघमाहात्म्ये**—पुष्करादीनि तीर्थानि गङ्गाद्याः सरितस्तथा । वासुदेवादयो देवा वसन्ति तुलसीदले ॥ **ब्रह्माण्डे**—तावद्गर्जन्ति पुष्पाणि मालत्यादीनि भास्करि । यावन्न प्राप्यते पुण्या तुलसी विष्णुवल्लभा ॥ ततः प्रदक्षिणीकृत्य तुलसीमाहरेद्बुधः । **श्रीविष्णुरहस्ये**—सकृदभ्यर्च्य गोविन्दं तुलस्या चैव मानवः । मुक्तिभागी निरातङ्कः कृष्णस्यानुचरो भवेत् ॥ **मौद्गल्यः**—नाक्षतैरर्चयेद्विष्णुं न शंभुं शङ्खवारिणा । नार्चयेद्दूर्वया दुर्गां न तुलस्या सुरान्तरम् ॥

## ❀ वर्ज्यपुष्पाणि ❀

**पाद्मे**—केशकीटापविद्धानि शीर्णपर्युषितानि च । भग्नपत्रं न च ग्राह्यं कृमिदष्टं च नाहरेत्॥ वर्जयेदूर्णनाभेन वासितं यदि शोभनम् । स्थलजं नोद्धरेत्पुष्पं छेदयेज्जालजं नतु ॥ यानि स्पृष्टानि चास्पृश्यैर्लोकायुक्तैश्च वर्जयेत् । **श्रीविष्णुरहस्ये**—निषिद्धैर्दुःखदैर्देवं नार्चयेत कदाचन । न शुष्कैः पूजयेद्देवं कुसुमैर्न महीगतैः ॥ न विशीर्णदलैः शिष्टैर्नोशुभैर्नाविकासिभिः । पूतिगन्धोग्रगन्धानि ह्यम्लगन्धानि वर्जयेत् ॥ यत्तु **हारीतवचनम्**—स्नानं कृत्वा तु ये केचित्पुष्पं गृह्णन्ति वै द्विजाः। देवतास्तन्न गृह्णन्ति तन्न गृह्णन्ति मानुषाः ॥ पितरस्तन्न गृह्णन्ति भस्मीभवति काष्ठवत् । इति तन्मध्याह्नस्नानाभिप्रायम् । स्नानं कृत्वा तु मध्याह्ने पुष्पाणि न समाहरेत्। इति निषेधस्मृतेः । **श्रीविष्णुरहस्ये च**—येऽर्कपुष्पैस्त्रिलोकेशमर्चयन्ति जनार्दनम् । तेभ्यः क्रुद्धोऽक्षयं दुःखं क्रोधाद्विष्णुः प्रयच्छति ॥ **श्रीवाराहे**—अन्यदेवार्थसन्दिष्टैर्यो नरो मामयार्चयेत्। तेनैव तु महाभागे मण्डूकत्वं व्रजन्ति ते ॥ जन्मद्वयं तु वै मूढाः शूद्रतां यांति ते नराः। कुसुमानां निवेद्यानां गन्धमाघ्राति यो नरः ॥ स पूतिगन्धसंयुक्तः कुष्ठी चैव धरे शुभे । असूत्रग्रथितं पुष्पमस्नेहाक्तं तथौदनम् ॥ अवालुकायुतं तोयं सर्वं पर्युषितं भवेत् । न पर्युषितदोषोऽस्ति तीर्थतोयस्य नित्यशः ॥ **वैष्णवधर्मशास्त्रे**—पुष्पालाभे तुलस्यास्तु पत्रैर्मामर्चयेद्बुधः । पत्रालाभे शिफाभिस्तु शिफालाभे शिफालवैः ॥ लवालाभे मृदा तत्र भक्तिमानर्चयेत माम् । **नारदीये**—हरेरभ्यर्चनायां च तुलसीसाधनं परम् । अलाभे तुलसीनां च तन्नामग्रहणं परम् ॥ भगवानरविन्दाक्षः संतुष्यति सहस्रधा । न पद्मैरपि कह्लारैर्न हेमकुसुमैरपि ॥ तथा तुष्यति गोविन्दो यथैव तुलसीदलैः । अन्यदैवतसंकल्पैर्योऽर्चयेद्गरुडध्वजम् ॥ स एव नरकं याति यावदाभूतसंप्लवम् । तत्रैव—संगृह्य तुलसीं भक्त्या सर्वाभीष्टफलप्रदाम् । तुलस्यैव हरेः पूजां ये कुर्वन्ति नरा भुवि ॥ ते कृतार्था नरश्रेष्ठ तस्मात्त्वमपि तत्कुरु । तस्मात्तुलस्या सदृशं नच भूतं न भावि च ॥ तुलसीकाननामोदवासिता यत्र मारुताः । न तत्र धरणीभागे चरन्ति यमकिङ्कराः॥ तुलसी तुलसीत्येवं नामान्यावर्तयन्ति ये। ते विष्णुलोकमासाद्य पश्यन्ति गरुडध्वजम्॥ दर्शनाच्छ्रवणात्स्पर्शा-

त्स्मरणात्कीर्तनादपि । पुनाति तुलसी पुण्या दश पूर्वान् दशापरान् ॥ तुलसीकाननं यत्र यत्र वा हरिकीर्तनम् । तत्रैवास्ते हरिः श्रीमान् शङ्खचक्रगदाधरः ॥ तस्मात्पराशर त्वं च सर्वदा तुलसीदलैः । नारायणमिहाराध्य प्राप्स्यसे परमं पदम् ॥ यथा हि तुलसी मान्या विष्णोर्भवति सर्वदा । तथैवैकादशी विष्णुं संतोषयति संततम् ॥ तुलसीदलसंमिश्रं तीर्थं तोयेन संयुतम् । दिवसे दिवसे ये तु भुञ्जते ते हि वैष्णवाः ॥ **पराशरः**—द्वितीयकाले कर्तव्यं तुलस्या हरणं द्विजैः । अन्यकाले न कर्तव्यमित्येवं मनुरब्रवीत् ॥ **दक्षः**—काले द्वितीये संप्राप्ते तुलसीं ग्राहयेद्द्विजः । अन्यकालेषु न ग्राह्यमिति वासिष्ठभाषितम् ॥

## ❀ अथ कुशोत्पाटनादिविधिः ❀

तत्र **शौनकः**—शुचौ देशे शुचिर्भूत्वा स्थित्वा प्रागुत्तरामुखः । ओंकारेणैव मन्त्रेण कुशाः स्पृश्या द्विजोत्तमैः ॥ कुशोत्पाटनमन्त्रमाह **स एव**—विरिञ्चेन सहोत्पन्न परमेष्ठिनिसर्गज । नुद सर्वाणि पापानि दर्भ स्वस्तिकरो मम ॥ अत्र कालमाह **हारीतः**—मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः । अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः ॥ देवार्थान् प्राङ्मुखो दर्भान् पित्रर्थान् दक्षिणामुखः । छित्त्वोपवीती प्राचीनावीती तान्निक्षिपेत्पृथक् ॥ **शङ्खः**—मन्त्राः कृष्णाजिनं दर्भा ब्राह्मणाश्च विशेषतः । अयातयामास्ते सर्वे नियोज्याः स्युः पुनः पुनः ॥ आयातयामाः अगतरसाः । **वृद्धवसिष्ठः**—काशस्तु रौद्रो विख्यातः कुशो ब्राह्मस्तथा स्मृतः । आर्षो दर्भः समाख्यातो विश्वामित्रस्तु वैष्णवः ॥ कुशालाभेऽश्वबालश्च विश्वामित्रोथ वायवः । दूर्वाश्चैतेषु ये लब्धास्तैः कर्माणि समाचरेत् ॥ श्रुतिस्मृतिषु मित्रत्वाद्विप्राणां विश्वकर्मणाम् । विश्वाहसाममित्रत्वाद्विश्वामित्र इति स्मृतः ॥ दुःस्पर्शनाशकरणात् दुःशब्दोच्चारनाशनात् । दुःस्वप्ननाशकरणादेषा दूर्वेत्युदाहृता ॥ **हारीतः**—नवभिः सप्तभिर्दर्भैः पञ्चभिश्च क्रमात्कृतः । कूर्चः श्रेष्ठो मध्यमश्च कनीयानिति च स्मृतः ॥ **स्मृतिरत्नावल्याम्**—अहन्यहनि कर्मार्थं कुशोद्धारः प्रशस्यते । न पूर्वेद्युर्हृतकुशा योग्याश्चैवोत्तरेषु च ॥ पवित्रं स्वर्णमजिनं रूप्यं ताम्रं च सीसकम् । वसुधा गौस्तथा विप्रो नियोज्याः स्युः पुनः पुनः ॥ कुशाग्रैस्तर्पयेद्देवान् मनुष्यान् कुशमध्यतः । द्विगुणीकृत्य मूलाग्रैः पितॄन् संतर्पयेद्द्विजः ॥ सपिण्डीकरणादर्वागृजुदर्भैः स्मृतिक्रियाः । परतो द्विगुणैरेव देवकर्म सदर्जुभिः ॥ छिन्नमूला ग्रहीतव्याः प्रस्तरार्थं कुशोत्तमाः । अग्निकार्ये च यागे च समूलान्परिवर्जयेत् ॥ **मनुः**—समूलश्च भवेद्दर्भः पितॄणां श्राद्धकर्मणि । मूलेन लोकाञ्जयति शक्रस्य च महात्मनः ॥ एतदेकोद्दिष्टश्राद्धविषयम् । यतः **स एवाह**—एकोद्दिष्टे कुशा ग्राह्याः समूला यज्ञकर्मणि । बहिर्लूनाः सकृल्लूनाः सर्वत्र पितृकर्मणि ॥ इति । बहिर्लूनाः उपमूललूना इत्यर्थः । ततश्च—उपमूले तथा लूनाः श्राद्धार्थे तु कुशाः स्मृताः । तथा श्यामाकनीवारी दूर्वा च समुदाहृता ॥ इति ब्रह्माण्डादिवचनमनेकोद्दिष्टश्राद्धादिविषयमित्यवगन्तव्यम् । पित्र्यं मूलेन मध्येन मानुषं तु प्रयत्नतः । देवकर्म कुशाग्रेण कर्तव्यं भूतिमिच्छता ॥ कुशाः काशास्तथा दूर्वा यवा व्रीहय एव वा । बल्वजाः पुण्डरीकाणि सप्तधा बर्हिरुच्यते ॥

## ❀ पवित्रविधिः ❀

**शातातपः**-जपे होमे तथा दाने स्वाध्याये पितृतर्पणे । अशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैः ॥ **नारदः**-न रूप्यं केवलं धार्यं दैवे पित्र्ये च कर्मणि । अनामिकाधृतं हेम तर्जन्या धारयेत्तु तत् ॥ **चन्द्रिकायाम्**-यज्ञोपवीते मौञ्ज्यां च तथा कुशपवित्रके । ब्रह्मग्रन्थिं विजानीयादन्यत्र तु यथारुचि ॥ **यमः**-संत्यज्य वैष्टरं मार्गं ब्रह्ममार्गविनिःसृतम् । सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते ॥ तदेव द्विगुणीकृत्य ब्रह्मग्रन्थिर्विधीयते । चतुरंगुलमग्रं स्याद्ग्रन्थिरेकांगुलो भवेत् ॥ द्व्यंगुलं रज्जुवलयं पवित्रस्य तु लक्षणम् । त्रिभिर्दर्भैः शान्तिकर्म पञ्चभिः पौष्टिकं तथा ॥ पञ्चभिश्चाभिचारं तु कुर्वन् कुर्यात्पवित्रकम् । **रत्नावल्याम्**-शूद्रः पवित्रमज्ञानात् ज्ञानाद्वा यदि धारयेत् । स पापात्मा महाघोरे चिरं तिष्ठति दारुणे ॥ कुतूहलेन वा शूद्रः पवित्रं धारयेद्यदि । स पच्यते महाघोरे सुचिरं नरकाग्निभिः ॥ देवब्राह्मणकार्येषु शूद्रश्चेद्भक्तिमान् भवेत् । स्वर्णांगुलीयकं धृत्वा तेन कर्माणि कारयेत् ॥ **स्मृतिरत्ने**-शूद्रः पवित्रमज्ञानात् ज्ञानाद्वा यदि धारयेत् । सकुलो नरकं याति सद्यश्चंडालतां व्रजेत् ॥ तस्मात्पवित्रं सततं द्विजैर्वेदपरायणैः । कर्मानुष्ठाननिरतैर्धार्यं नेतरजातिभिः ॥ **स्मृतिसंग्रहे च**-प्रथमं लङ्घयेत्पर्व द्वितीयं नतु लङ्घयेत् । तयोस्तु पर्वणोर्मध्ये पवित्रं धारयेद्बुधः ॥ **भरद्वाजः**-कूर्चेन वा पवित्रेण येन कर्माणि कारयेत् । तस्य ग्रंथिं विसृज्यैव कर्मान्ते तत् परित्यजेत् ॥ पवित्रकूर्चयोस्त्यागे सग्रन्थ्योस्तु प्रमादतः। उपवासं चरेदेकमुपवासत्रयं तु वा ॥ धीपूर्वे उपवासत्रयमिति ग्राह्यम् । ऊर्ध्वाग्रं प्रक्षिपेत्कूर्चं गलन्त्यां कलशेषु च । ततः संप्रोक्षणं कुर्यात्तदग्रेण द्विजोत्तमः ॥ अंग्रंगुल्याः स्थितो दर्भस्तपोवृद्धिकरो हि सः । मध्ये चैव प्रजाकामो मूले सर्वार्थसाधकः ॥ एवं फलभेदेन पवित्रधारणे स्थानभेद उक्तः । पवित्रं त्वनामिकामूल एव धार्यम् । **हारीतः**-पथि दर्भाश्चितौ दर्भा ये दर्भा यज्ञभूमिषु । वरणासनपीठार्थाः षड्दर्भान् परिवर्जयेत् ॥ यैः कृतः पिण्डनिर्वापः श्राद्धं वा पितृतर्पणम् । विण्मूत्रादिषु ये दर्भास्तेषां त्यागो विधीयते ॥ ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे । अमेध्यालिप्ता ये दर्भास्तेषां त्यागो विधीयते ॥ अमेध्यानि वसादीनि द्वादश मूलानि । अपूतैस्तु गृहीता ये ये च छिन्ना नखैस्तथा ॥ कथितानाग्निदग्धांश्च कुशान् यत्नेन वर्जयेत् । नीवीमध्ये स्थितास्त्याज्या यज्ञभूमिस्थितास्तथा ॥ छायायामशुचौ देशे ये दर्भास्तान् विसर्जयेत् । **अत्रिः**-ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधीयते । भोजने वर्तुलः प्रोक्त एवं दर्भो न हीयते ॥ पवित्रमत्र ब्रह्मग्रन्थियुक्तम् । तदेव शूद्रादेर्वर्ज्यम् । तथा **चन्द्रिकायाम्**-सप्तभिर्दर्भपुञ्जीलैः कुर्याद्ब्राह्मं पवित्रकम् । पञ्चभिः क्षत्रियस्योक्तं चतुर्भिश्च तथा विशः ॥ द्वाभ्यां शूद्रस्य विहितमन्तराणां तथैव च । नीवीमध्ये च ये दर्भा ब्रह्मसूत्रे च ये कृताः ॥ पवित्रांस्तान्विजानीयात् यथा कायस्तथा कुशाः । पवित्रं करशाखास्थं दक्षिणे श्रवणे न्यसेत् ॥ नान्यत्र निक्षिपेद्देहे निक्षिप्तं यदि तत्त्यजेत् । अतो नीव्यां केवलदर्भा एव स्थाप्याः ॥ अत्र **कौशिकः**-गवां वालपवित्रेण धार्यमाणेन नित्यशः । न स्पृशन्तीह पापानि श्रीश्च गात्रेषु तिष्ठति ॥ गवां वालपवित्रस्य सौवर्णस्य तथैव च ।

न ब्रह्मग्रन्थिनियमो धारयेत्तु यथा तथा ॥ गवां वालपवित्रेण संध्योपासिंत करोति यः । जपहोमाग्निकार्याणि तस्याक्षयफलं भवेत् ॥ हारीतः–जपकर्महरा ह्येते असुरा व्यक्तरूपिणः । पवित्रकृतहस्तस्य विद्रवन्ति दिशो दश ॥ गोभिलः–वज्रं यथा महेन्द्रस्य शूलं हस्ते पिनाकिनः । सुदर्शनं यथा विष्णोस्तथा विप्रकरे कुशः ॥ अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः । समूलाः कुतपाः प्रोक्ता भिन्नाग्रास्तृणसंज्ञिताः ॥ कुशाः काशा यवा दूर्वा गोधूमाश्चाथ कुन्दराः । उशीरा व्रीहयो मौञ्ज्यो दश दर्भाः प्रकीर्तिताः ॥ देवलः–कुशदर्भौ च गोवालपवित्रं कनकं तथा । नवपञ्चत्रिसंयुक्तमग्रं तु चतुरंगुलम् ॥ वलयं द्व्यंगुलं प्रोक्तं ग्रन्थिरेकांगुलो भवेत् । अंगुष्ठे तु पितुर्नाशस्तर्जन्यां मरणं भवेत् ॥ मध्यमे पुत्रनाशश्च कनिष्ठे सर्वदोषकृत् । तस्मात्सर्वप्रयत्नेनानामिकायां तु योजयेत् ॥ कूर्चांस्तु त्रिविधानाहुरुत्तमाधममध्यमान् । सप्त पञ्च त्रयो दर्भा ग्रन्थिरेकांगुलो भवेत् ॥ दक्षिणावर्तितो ग्रन्थिः कूर्चाग्रे चतुरंगुलम् । तन्मूले द्वादशागुरये त्रिविधः कूर्च उच्यते ॥ ऊर्ध्वाग्रः पुष्टिदः प्रोक्तो ह्यधोग्रः शान्तिकर्मणि । अन्तःकूर्चो हि कर्तव्यस्त्वभिचारे द्विजोत्तमैः ॥ कुशाः काशा उशीराश्च दूर्वाश्च व्रीहयस्तथा । विश्वामित्राः कुशाश्चैव सप्त दर्भाः प्रकीर्तिताः ॥ सप्तविंशतिदर्भैर्वा एकविंशतिभिस्तथा । दशपञ्चभिरेवाथ कूर्चं कुर्वीत बुद्धिमान् ॥ दक्षः–ब्राह्मणानां विशेषेण विश्वामित्रकुशो स्मृतो । नृपाणां मौञ्जिदर्भौ च वैश्यानामुशिरं स्मृतम् ॥ शूद्राणां च तथा दूर्वा विपरीते कुलक्षयः । दत्तात्रेयः–अपवित्रकरं कर्म विप्रस्य विफलं भवेत् । अपवित्रकरो विप्र कुर्यात्कर्म न वैदिकम् ॥ तस्य कर्माणि सर्वाणि निष्फलानि भवन्ति हि ॥

## ❀ पोष्यवर्गविचारः ❀

तत्र दक्षः–तृतीये तु तथा भागे पोष्यवर्गार्थचिन्तनम् । द्रव्यं हि निर्वपेत्तेषां विद्यमानधनो गृही ॥ मनुश्च– माता पिता गुरुर्भ्राता प्रजा दीनः समाश्रितः । अभ्यागतोतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ॥ दक्षः–माता पिता तथा भ्राता गुरुर्भार्येति भेदतः । भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ॥ नरकं पीडने तस्य तस्माद्यत्नेन तं भरेत् । स जीवति य एवैको बन्धुभिश्चोपजीव्यते ॥ जीवन्तोपि मृतास्त्वन्ये पुरुषाः स्वोदरंभराः । गौतमः–योगक्षेमार्थमीश्वरमभिगच्छेन्नान्यत्र देवगुरुधार्मिकेभ्यः । योगः अलभ्यलाभः, क्षेमः लब्धस्य पालनम्, ईश्वरः राजा ।

## ❀ ब्राह्मणादिवृत्तयः ❀

वसिष्ठः–द्विजातिभ्यो धनं लिप्सेत्प्रशस्तेभ्यो विशेषतः । अपि वा जातिमात्रेभ्यो न तु शूद्रात्कथंचन ॥ प्रशस्तेभ्यः स्वधर्मवर्तिभ्यः । मनुः–यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः । अक्लेशेन शरीरस्य कुर्वीत धनसंचयम् ॥ कर्मभिः–यस्य यानि प्रत्यर्थानि तैरित्यर्थः । तानि च तेनैव दर्शितानि । अध्यापनं चाध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहश्चैव षट् कर्माण्यग्रजन्मनः॥ षण्णां तु कर्मणां मध्ये त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशिष्टाच्च प्रतिग्रहः ॥ अनेनाध्ययनादीनि

त्रीण्येवावश्यकर्तव्यानीत्युक्तम् भवति । तथा **गौतमः**–द्विजातीनामध्ययम्, इज्या, दानम्, ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः, पूर्वेषु नियम इति । **मनुः**–त्रयो धर्मा निवर्तन्ते ब्राह्मणात्क्षत्रियं प्रति। अध्यापनं याजनं च तृतीयश्च प्रतिग्रहः॥ वैश्यं प्रति तथैवैते निवर्तेरन्निति स्थितिः । शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषी विशः ॥ आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः । शस्त्रास्त्रभृत्त्वं–प्रजापालनद्वारा जीवनार्थम्, वणिक्–वाणिज्यम्, पशुशब्देन तत्पालनम् । अत्र विशेषमाहतुः **शङ्खलिखितौ**–गा रक्षन् तास्वपीतासु न पिबेन्न तिष्ठन्तीषूपविशेन्न स्वयमुत्थापयेत्ताः शनैरार्द्रशाखया सपलाशया पृष्ठतोभिहन्यान्नातीर्थेन विषमेनाल्पोदकेवतारयेत्, बालवृद्धरोगातुराः श्रान्ताः उपासीत शक्तितः प्रतीकारं कुर्याद्घामेष धर्मोन्यथा विप्लव इति । **नारदः**–त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम् । युद्धोपलब्धं कारं च दाण्डं च व्यवहारतः ॥ कारं करप्राप्तम् । **याज्ञवल्क्यः**–इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च । प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम् ॥ प्रतिग्रहोधिको विप्रे याजनाध्यापने तथा। तथेति स्मृत्यन्तरोक्तवृत्त्युपसंग्रहः। तथा **गौतमः**–कृषिवाणिज्ये वा अस्वयंकृते कुसीदं चेति । यत्तु **याज्ञवल्क्यो**क्तम्–कुसूलकुम्भीधान्यो वा त्र्याहिकोश्वस्तनोपि वा । जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः परः ॥ कुसूलं कोष्ठकम्, कुम्भी उष्ट्रिकाख्यं भाजनम्, शाल्यादिभ्यो निपतितकणस्योपादानं शिलम्, एकैकव्रीह्युपादानमुञ्छः । कुम्भीविषये **स्मृतिः**–मुष्टीनां स्याच्चतुष्कं तु मानतः कुडपं मतम् । प्रस्थः स्यात्तच्चतुष्केण ते च चत्वारि आढकम्॥ तच्चतुष्कं भवेद्द्रोणं तद्द्वयं खारिका भवेत् । खारीत्रयं तु भारः स्यात्कुम्भिका स्याच्चतुष्टयम् ॥ एषां वृत्तयो **मनुना** दर्शिताः–षट्कर्मैको भवत्त्येषां त्रिभिरन्यः प्रवर्तते । द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥ अयमर्थः–एकः कुसूलधान्यो यजनादिषट्कर्मा भवेत्, अन्यो द्वितीयस्त्र्याहिको याजनाध्यापनप्रतिग्रहैर्वर्तेत, एकस्तृतीयोश्वस्तनिकः प्रतिग्रहेतराभ्याम्, चतुर्थस्तु शिलोञ्छवृत्तिः, ब्रह्मसत्रेण अध्यापनेनेति । अत्रायं विवेक । द्विविधो गृहस्थः–यायावरः शालीनश्च । तत्राद्यश्चतुर्विधः–कुसूलकुम्भीधान्यस्त्र्याहिकोश्वस्तनिकः शिलोञ्छवृत्तिरिति । शालीनश्चतुर्विधः–याजनाध्यापनप्रतिग्रहकृषिवाणिज्यपाशुपाल्यैर्जीवत्याद्यः । त्रिभिराद्यैर्द्वितीयः, याजनाध्यापनाभ्यां तृतीयः, चतुर्थोध्यापनेनेति । "यथाह **देवलः**–द्विविधो गृहस्थो यायावरः शालीनश्च । तयोर्यायावरः प्रवरो याजनाध्यापनप्रतिग्रहरिक्थसंचयवर्जनात् षट्कर्माधिष्ठितः, प्रेष्यचतुष्पादग्रहग्रामधनधान्यादियुक्तः, लोकानुवर्ती, शालीन इति । शालीनोपि चतुर्विधः–याजनाध्यापनप्रतिग्रहकृषिवाणिज्यपाशुपाल्यैः षड्भिर्जीवत्येकः, याजनादिभिस्त्रिभिरन्यः, याजनाध्यापनाभ्यामपरः, चतुर्थस्त्वध्यापनेनैव" इति विज्ञानेश्वरोक्तम् । कलावश्वस्तनिकोर्दानिषिद्धत्वाच्चतुर्विधयायावराद्यभावः, प्रतिग्रहादीनां त्रयाणां शालीनविषयत्वात्तत्तत्सद्भावेपि तेषामनियतत्वादापद्वृत्तित्वाच्च अवश्यकर्तव्यानि षट्कर्माणि तेभ्योन्यान्येव । तथा **पराशरः**–सन्ध्या स्नानं जपो होमो देवतानाश्च पूजनम्। वैश्वदेवातिथेयं च षट् कर्माणि दिने दिने ॥ इति । अतः प्रतिग्रहादिपरो विप्रः षट्कर्मेति वादो धर्मशास्त्रानभिज्ञत्वकृत इत्यलम् । अत्र याज्ञ-

वल्क्यः–कुसीदं कृषिवाणिज्ये पाशुपाल्यं विशः स्मृतम् । शूद्रस्य द्विजशुश्रूषा तयाऽजीवन् वणिक् भवेत् ॥ शिल्पैर्वा विविधैर्जीवेत्पूर्वेषु हितमाचरन् । कुसीदं वृद्धयर्थं द्रव्यप्रयोगः । अत्र देवलः–शूद्रधर्मः द्विजातिशुश्रूषा, पापवर्जनं, कलत्रादिपोषणम्, पशुपालनम्, भारोद्वहनम्, पण्यव्यवहारः, चित्रकर्म, नृत्तगीतवेणुवीणामुरजमृदङ्गवादनानीति । भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियापरः । इति याज्ञवल्क्यः । भार्यायामेव रतिर्नान्यासु, शुचिः *बाह्याभ्यन्तरशौचयुक्तः, भृत्यभर्त्ता पोष्यवर्गरक्षकः,* श्राद्धानि नित्यादीनि, क्रियाः स्नातकव्रताद्यविरुद्धानि । माघमाहात्म्ये–शूद्रस्य पाकयज्ञेन निषिद्धाकरणेन च । स्वर्गतिर्विहिता वैश्य तस्य नो नारकी गतिः ॥ पाकयज्ञेनेति व्रीह्यादिदानमेवोच्यते । कलौ शूद्रस्य पाकयज्ञपचनक्रियादेर्निषिद्धत्वात् । मनुः–विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते । यदतोन्यद्धि कुरुते तद्भवत्यस्य निष्फलम् ॥ न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् । न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् ॥ नारदीये–दद्याद्दानानि शूद्रोपि पाकयज्ञैर्यजेत च । ब्राह्मणक्षत्रियविशां शुश्रूषानिरतो भवेत् ॥ पाकयज्ञशब्देनात्रापि दानं वा अष्टकादिश्राद्धं वोच्यते । शूद्राणां मासिकं कार्यं वपनं न्यायवर्तिनाम् । वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टं च भोजनम् ॥ अन्नोच्छिष्टं भुक्तपात्रावशिष्टमन्नम् । मनुः–ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा । सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ॥ ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् । मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥ सत्यानृतं तु वाणिज्यं तेन वापीह जीव्यते । सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ॥ सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः । प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥ दायः अन्वयागतधनम्, पैतृकमित्यर्थः । लाभः निधेः, अयं विद्वद्विषयः । राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योर्धं द्विजः पुनः । विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः ॥ इति याज्ञवल्क्यस्मरणात् । क्रमः प्रसिद्धः, एते त्रयः सर्ववर्णानां धर्म्याः, जयो युद्धेन क्षत्रियस्यैव, *प्रयोगो वृद्ध्यर्थं धनप्रयोगः, कर्मप्रयोगः कृषिवाणिज्ये, एतानि* वैश्यस्यैव, सत्प्रतिग्रहो विप्रस्यैव. सदिति दुष्टस्य वा दुष्टाद्वा प्रतिग्रहनिरासः ॥ योर्चितं प्रतिगृह्णाति ददात्यर्चितमेव च । तावुभौ गच्छतः स्वर्गं नरकं तु विपर्यये ॥ कात्यायनः–उपन्यस्तेन यल्लब्धं विद्यया पणपूर्वकम् । शिष्यादार्त्विज्यतः प्रश्नात्संदिग्धप्रश्ननिर्णयात् ॥ विज्ञानशासनाद्वादाल्लब्धं प्राध्ययनाच्च यत् । धनमेवंविधं सर्वं विज्ञेयं धर्मशासनम् ॥ शाण्डिल्यः–अयाचितशिलोञ्छैश्च शिष्यदत्तैः क्रमागतैः । जीवेत्कर्मविशुद्धेभ्यः प्रतिगृह्यापि वा धनम् ॥ याचितेनापि वर्तेत दैन्यं हित्वा शमस्थितः । स्तोकादानेन वा नित्यं प्रतिगेहमतन्द्रितः ॥ दधिक्षीरघृतादीनां लवणस्य पशोस्तथा । विक्रयिभ्योपि नादद्यादश्वविक्रयिणस्तथा ॥ नाचरन्ति यथोक्तं ये तेभ्योपि भृतकार्चकात् । बीजप्रहारिणश्चैव बलीवर्दस्य साक्षिणः ॥ कौसीदकात्तथा भोक्तुः श्राद्धस्य सततं तथा । कौसीदकः वार्धुषिकः । न ग्रामयाजकेभ्यश्च नागम्यागामिनस्तथा । वणिग्भ्यश्च तथा शूद्रादुत्सृष्टाग्नेर्न चाहरेत् ॥ बिम्बप्रस्थापकाच्चैव तथा शिल्पोपजीविनः । परिस्रस्ताच्च नटाच्च शूद्रशिष्याच्च नाहरेत् ॥

क्रमागतैर्धनैर्वापि स्वक्षेत्रारामसंभवैः । भगवद्भक्तिपूतेभ्यो विप्रेभ्यो याचितैस्तु वा ॥ श्रोत्रियाध्यापको भूत्वा वृत्तिं वा लभते द्विजः । याज्ञवल्क्यः–क्षात्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः । निस्तीर्य तामथात्मानं पावयित्वा न्यसेत्पथि ॥ आपन्निस्तारानन्तरं पूर्वलब्धं धनं महामार्गे निधायात्मानं पावयेत्, यद्वा पथि स्वमार्गे वा वर्तेत । अत्र पराशरः–अतः परं गृहस्थस्य कर्माचारं कलौ युगे । संप्रवक्ष्याम्यहं पूर्वं पाराशर्यप्रचोदितम् ॥ षट्कर्मनिरतो विप्रः कृषिकर्म च कारयेत् । स्वयंकृष्टे तथा क्षेत्रे धान्यैश्च स्वयमर्जितैः ॥ निर्वपेत्पञ्चयज्ञांश्च क्रतुदीक्षां च कारयेत् । क्षत्रियोपि कृषिं कुर्याद्द्विजान् देवांश्च पूजयेत् ॥ वैश्यः शूद्रस्तथा कुर्यात्कृषिं वाणिज्यमेव च । चतुर्णामपि वर्णानामेष धर्मः सनातनः ॥ बोधायनः–वेदः कृषिविनाशाय कृषिर्वेदविनाशिनी । शक्तिमानुभयं कुर्यादशक्तस्तु कृषिं त्यजेत् ॥ पराशरः–संवत्सरेण यत्पापं कुरुते मत्स्यघातुकः । दिनेनैकेन चाप्नोति सकृद्रिक्त्वा तु लाङ्गली ॥ एवं दोषस्मरणं तत्तद्भागप्रदानाभिप्रायम् । तदाह स एव–वृक्षांश्छित्त्वा महीं भित्त्वा हत्वा तु कृमिकीटकान् । कर्षकः खलयज्ञेन सर्वपापैः प्रमुच्यते ॥ यो न दद्याद्द्विजातिभ्यो राशिमूलमुपागतः । स चोरः स च पापिष्ठो ब्रह्महत्यां स विन्दति ॥ ( ब्रह्मघ्नं तं विनिर्दिशेदिति पाठान्तरम् ) । राज्ञो दद्यात्तु षड्भागं देवानां चैकविंशतिम् । विप्राणां त्रिंशतिं भागं ततः पापैः प्रमुच्यते ॥ कौर्मे–लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चापि पूजयेत् । ते तृप्तास्तस्य तं दोषं शमयन्ति न संशयः ॥ देवेभ्यश्च पितृभ्यश्च दद्याद्भागं तु विंशकम् । त्रिंशद्भागं ब्राह्मणानां कृषिं कुर्वन्न रिष्यति ॥ हारीतः–भूमिं भित्त्वौषधिं छित्त्वा हत्वा कीटपिपीलिकाः । पुनन्ति खलयज्ञेन कर्षका नात्र संशयः ॥ अत्र पराशरः–क्षुधितं तृषितं श्रान्तं बलीवर्दं न योजयेत् । हीनाङ्गं व्याधितं क्लीबं वृषं विप्रो न वाहयेत् ॥ वाहयेद्दिवसस्यार्धं पश्चात्स्नानं समाचरेत् । स्नानमत्र वृषस्यैव । बीजानां दमनं चैव न कार्यं बलवाहनम् । वृद्धानां दुर्बलानां च प्रचेतोवचनं यथा ॥ आपस्तम्बः–अविहिता ब्राह्मणस्य वणिज्या, आपदि व्यवहरेत् पण्यानामपण्यानि व्युदस्यन् मनुष्यान् रसान् रागान् गन्धान् अन्नं चर्म गवां वशां श्लेष्मोदके तोक्मकिण्वे पिप्पलिमरिचे धान्यं मांसमायुधं सुकृताशां च तिलतण्डुलांस्त्वेव धान्यस्य विशेषेण न विक्रीणीयात् । मनुष्याः दासादयः, रसाः क्षीरलवणादयः, रागाः कुसुम्भादयः, वशा वन्ध्या गौः, श्लेष्मा येन विश्लिष्टं चर्मादि सन्धीयते, तोक्मम् ईषदङ्कुरितव्रीह्यादि, किण्वं सुराप्रकृतिद्रव्यम्, सुकृताशा सुकृतफलम्, एतानि मनुष्यादीनि वर्जयन्नपण्यानि च व्युदस्यन् अन्यैः पण्यैर्व्यवहरेत् । अत्र मनुः–सर्वान् रसानपोहेत कृतान्नं च तिलैः सह । अश्मा च लवणं सोमः पशवो ये च मानुषाः ॥ सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च । अपि चेत्तानि रक्तानि फलमूले तथौषधीः ॥ अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः । क्षारं क्षीरं दधि घृतं तैलं मधु गुडं कुशान् ॥ आरण्यांश्च पशून् सर्वान् दंष्ट्रिणश्च वयांसि च । वस्त्रं नीलं च लाक्षां च सर्वांश्चैकशफान् पशून् ॥ अपोहेत– रसादीन्न विक्रीणीयादित्यर्थः । एषां विनिमयमाह–रसा रसैर्निमातव्या

न त्वेव लवणं रसैः । कृतान्नं च कृतान्नेन तिला धान्येन तत्समाः ॥ आपस्तम्बश्च–एतेषां मिथो विनिमयोऽन्नेन चान्नस्य मनुष्याणां च मनुष्यैः रसानां च रसैः गन्धानां च गन्धैर्विद्यया च विद्या नामक्रीतपण्यैर्व्यवहरेत् । मुञ्जवल्वजैर्मूलफलैस्तृणकाष्ठैरविकृतैर्नात्यन्तमन्वस्येद्वृत्तिं प्राप्य विरमेदिति । मुञ्जादिभिरसंस्कृतैरेवान्नादिभिश्चाक्रीतैरेव व्यवहरेत् । अत्यन्तं न सीदेत्ततो वृत्तिं प्राप्य विरमेत् । मनुष्येति न कन्याविषयम् । प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम् । इति तद्विनिमयप्रतिषेधस्मरणात् । **मनुः**–श्रेयान् स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः । परधर्मेण जीवन् हि सद्यः पतति जातितः ॥ **याज्ञवल्क्यः**–फलोपलक्षौमसोममनुष्यापूपवीरुधः । तिलौदनरसक्षारान् दधि क्षीरं घृतं जलम् ॥ शस्त्रासवमधूच्छिष्टमधुलाक्षाश्च बर्हिषः । मृच्चर्मपुष्पकुतपकेशतक्रविषक्षितीः ॥ कौशेयनीललवणमांसैकशफसीसकान् । शाकार्द्रौषधिपिण्याकपशुगन्धांस्तथैव च ॥ वैश्यवृत्त्यापि जीवन्नो विक्रीणीत कदाचन । लाक्षा जतु, बर्हिः कुशादिः, केशः चमर्यादिसम्बधी. एकशफाः अश्वादयः, पशवः ग्राम्या आरण्याश्च, स एव–लाक्षालवणमांसानि पतनीयानि विक्रये । पयो दधि च मद्यं च हीनवर्णकराणि तु ॥ **मनुः**–सद्यः पतति मांसेन लाक्षया लवणेन च । त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ॥ इतरेषां तु पण्यानां विक्रयादिह कामतः । ब्राह्मणः सप्तरात्रेण वैश्यभावं निगच्छति ॥ **यमः**–स्नेहद्रव्यरसानां च सत्वानां जीवतामपि । विक्रेता दानपुण्यानां प्रोच्यते ब्रह्महा बुधैः ॥ एका गौर्न प्रतिग्राह्या द्वितीया न कदाचन । सा चेद्विक्रयमापन्ना दहत्यासप्तमं कुलम् ॥ दानाभ्यञ्जनहोमेभ्यो यदन्यत्कुरुते तिलैः । कृमिर्भवति विष्ठायां कर्मणानेन पापकृत् ॥ अत्र **मनुः**–काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः । विक्रीणीत तिलान् शुद्धान् धर्मार्थमचिरस्थितान् ॥ एतद्विनिमयाभिप्रायमिति,व्याख्यातम् । क्रीताः प्रतिगृहीताश्च न विक्रेयास्तिलाः स्मृताः । इति निषेधस्मरणात् । तच्च प्रतिगृहीततैलविषयमिति केचित् । **नारदः**–आपत्स्वपि हि कष्टासु ब्राह्मणस्य न वार्धुषम् । भ्रूणहत्यां च वृद्धिं च तुलया समतोलयत् ॥ अतिष्ठद् भ्रूणहा कोट्यां वार्धुषिः समकम्पत । अतो ब्राह्मणस्य कष्टापत्स्वपि वार्धुषिकत्वं दूरतो निरास्यम् । आपद्यपि न वार्धुष्यं ब्राह्मणस्य विधीयते । इति स्मृतेः । ब्राह्मणव्यतिरिक्तविषये **पैठीनसिः**–कामं तु पापीयसे दद्यान्न ज्यायसीं वृद्धिमुपाददीत । तामाह **मनुः**–वसिष्ठविहितां वृद्धिमुत्सृजेद्वित्तवर्धनीम् । अशीतिभागं गृह्णीयान्मासाद्वार्धुषिकः सदा ॥ जीवेदेतेन राजन्यः सर्वे वाप्यनयं गताः । न त्वेव ज्यायसीं वृद्धिमभिमन्येत कर्हिचित् ॥ अनयः आपत् ॥ **याज्ञवल्क्यः**–अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके । वर्णक्रमाच्च तद्द्वित्रिचतुःपञ्चकमन्यथा ॥ अन्यथा अबन्धके । **मनुः**–वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥ **याज्ञवल्क्यः**–राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा। दम्भिहैतुकपाषण्डबकवृत्तींश्च वर्जयेत्॥ एषां लक्षणं संज्ञाप्रकरण एवोक्तम् । **मनुव्यासौ** च–द्विजातिभ्यो धनं लिप्सेत प्रशस्तेभ्यो

विशेषतः । अपि वा जातिमात्रेभ्यो न तु शूद्रात्कथंचन ॥ **चतुर्विंशतिमते**–सीदंश्चेत्प्रतिगृह्णीयात् ब्राह्मणेभ्यस्ततो नृपात् । ततस्तु वैश्यशूद्रेभ्यः शङ्खस्य वचनं यथा ॥ **गौतमः**–तदलाभे क्षत्रियवृत्तिस्तदलाभे वैश्यवृत्तिः सर्वथा वृत्तिरशक्तावशूद्रेण तदप्येके प्राणसंशय इति । **याज्ञवल्क्यः**–देवातिथ्यर्चनकृते गुरुभृत्यर्थमेव च । सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥ **स्मृत्यन्तरे**–आमं मांसं मधु घृतं धान्यं क्षीरं तथौषधम् । गुडतक्ररसा ग्राह्या निवृत्तेनापि शूद्रतः ॥ अत्र विशेषमाह **मनुः**–तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥ त्र्यहमुपोष्यान्यत्रालाभे चतुर्थदिने तद्दिनमात्रपर्याप्तं शूद्रतो गृह्णीयादित्यर्थः । अत एवाश्वमेधिके–किंचिद्वेदमयं पात्रं किंचित्पात्रं तपोमयम् । पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे ॥ **पराशरः**–शूद्रान्नं शूद्रसंपर्कः शूद्रेण तु समागमः । शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत्॥ **याज्ञवल्क्यः**–न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः । प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ॥ अष्टादश गुणाः पूर्वात्पूर्वादेते यथाक्रमम् । एतेन प्रतिग्रहनिषेधविषय उक्तः । धार्मिकेभ्यः प्रतिग्रहानुग्रहस्मृतेः । सूनी हिंसकः, चक्री तैलिकः, ध्वजी मद्यविक्रयी, वेश्या प्रसिद्धा, नराधिपः संकरजात इति व्याख्यातम् । अत्यन्तापदि तु–नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात् । दोषो भवति विप्राणां ज्वलनार्कसमा हि ते ॥ इतीदं द्रष्टव्यम् । तथा **याज्ञवल्क्यः**–आपद्गतः संप्रगृह्णन् भुञ्जानोपि यतस्ततः । न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः ॥ एवमपि सत्प्रतिग्रह एव कार्यः । **इतिहाससमुच्चये सप्तर्षिसंवादे**–धर्मार्थं संचयो यस्य द्रव्याणां संप्रशस्यते । तपःसंचय एवासौ विशिष्टो द्रव्यसंचयः ॥ यथा यथा न गृह्णाति ब्राह्मणो सत्प्रतिग्रहम् । तथा तथास्य सन्तोषाद्ब्रह्मतेजोभिवर्धते ॥ आकिंचन्यं च राज्यं च तुलायां समतोलयत् । अकिंचनत्वमधिकं राज्यादपि जितात्मनः ॥ यस्य धर्मार्थमर्थेहा तस्यानीहैव शोभना । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ अतः सीदत्कुटुम्बस्य न दोषः । यो राज्ञः प्रतिगृह्णैव शोचितव्ये प्रहृष्यति । स न जानाति मूढात्मा नरकानेकविंशतिम् ॥ राजप्रतिग्रहो घोरो मध्वास्वादो विषोपमः । मलमूत्रं वरं प्रोक्तं न तु राजप्रतिग्रहः ॥ प्रतिग्रहेण विप्राणां ब्रह्मतेजः प्रणश्यति । **स्मृत्यन्तरे**–तीर्थे पापं न कुर्वीत विशेषाच्च प्रतिग्रहम् । दुर्जरं पातकं तीर्थे दुर्जरश्च प्रतिग्रहः॥ तीर्थे हि दुर्जरं कृत्स्नमेतत्सर्वं विवर्जयेत् । **हेमाद्रौ च**–असत्प्रतिग्रहः प्रोक्तो देशतः कालतस्तथा । स्वरूपतो जातितश्च कर्मतश्चेति पञ्चधा ॥ देशः गयासेतुगङ्गादिः, कालः ग्रहणादिः, स्वरूपम् महिषीकृष्णाजिनादि, जातिः तिलादिः, कर्म पतनीयवृत्तिः । मेषीं च महिषीं चैव गामप्युभयतोमुखीम् । करिणं कालपुरुषं प्रतिपुरुषं तिलाचलम् ॥ अजाविकं तथाश्वं च मरणे चाद्यमासिकम् । दुर्दानान्याहुरेतानि प्रतिगृह्णन्ति ये द्विजाः ॥ न तेषां वदनं पश्येद्दृष्ट्वा चक्षुर्निमीलयेत् । कृष्णाजिने च महिषीं मेषीं चोभतोमुखीम् ॥ दासीं च प्रतिगृह्णानो न भूयः पुरुषो भवेत् । कालं च महिषीमाद्यमेकोद्दिष्टमृतुत्रये ॥ दाता प्रतिग्रहीतारं पश्येच्चेत्स विनश्यति । ( पुण्यमासनमिति पाठान्त-

रम् ) । प्रतिग्रहरुचिर्न स्याद्यात्रार्थं तु समाहरेत् ॥ स्थित्यर्थादधिकं गृह्णन् ब्राह्मणो यात्यधोगतिम् । अतः स्थित्यर्थमात्रे सत्प्रतिग्रहे न दोषः । तथा मनुः—यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः । अक्लेशेन शरीरस्य कुर्वीत धनसञ्चयम्॥तथा—अभ्युष्णात्सघृतादन्नादच्छिद्राच्चैव वाससः । अपरप्रेष्यभावाच्च भूय इच्छन् पतत्यधः ॥ न्यायार्जितस्य वित्तस्य द्वावनर्थौ प्रकीर्तितौ । अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ याज्ञवल्क्यः—न विद्यया केवलया तपसा वापि पात्रता । यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते ॥ विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः । गृह्णन् प्रदातारमधो नयत्यात्मानमेव च ॥ संग्रहे च—कपालस्थं यथा तोयं श्वदृतौ च यथा पयः। दुष्टं स्यात् स्थानदोषेण वृत्तहीने तथा श्रुतम् ॥ अनर्हते यद्ददाति न ददाति यदर्हते ॥ अर्हानर्हापरिज्ञानाद्दानाद्धर्माच्च हीयते ॥ नारदः—धनमूलाः क्रियाः सर्वास्ततस्तस्यार्जनं मतम् । वर्धनं रक्षणं भोग इति तस्य विधिः क्रमात् ॥ तत्पुनस्त्रिविधं ज्ञेयं शुक्लं शबलमेव च । कृष्णं च तस्य विज्ञेयः प्रभेदः सप्तधा पुनः ॥ श्रुतशौर्यतपःकन्याशिष्ययाज्यान्वयागतम् । धनं सप्तविधं शुक्लमुदयोप्यस्य तद्विधः ॥ कुसीदकृषिवाणिज्यशुल्कशिल्पानुवृत्तिभिः । कृतोपकारादाप्तञ्च शबलं समुदाहृतम् ॥ पाशकद्यूतदैन्यार्तप्रतिरूपकसाहसैः । व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम् ॥ यथाविधेन द्रव्येण यत्किञ्चिह करोत्ययम् । तथाविधमवाप्नोति तत्फलं प्रेत्य चेह च ॥ मनुः—हिरण्यमश्वं भूमिं गामन्नं वासस्तिलान् घृतम् । अविद्वान् प्रतिगृह्णानो भस्मीभवति काष्ठवत् ॥ अतपास्त्वनधीयानः प्रतिग्रहरुचिर्नरः । अम्भस्यश्मप्लवेनेव सह तेनैव मज्जति॥ यमः—उपारुदन्ति दानानि गौरश्वः काञ्चनं क्षितिः । अश्रोत्रियस्य विप्रस्य करं दृष्ट्वा निराकृतेः॥ सुमन्तुः—दूरस्थमपि सत्पात्रं मनसा चिन्त्य विष्णुवत् । भूमौ निक्षिप्य तोयं तद्द्रव्यं च प्रतिपादयेत् ॥ शातातपः—प्रश्नपूर्वं तु यो दद्याद्ब्राह्मणाय प्रतिग्रहम् । स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम् ॥ व्यासः—आत्मार्थं भोजनं यस्य रत्यर्थं यस्य मैथुनम् । वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवितम्॥ शातातपः—वेदाक्षराणि यावन्ति नियुञ्ज्यादर्थकारणात् । तावतीं ब्रह्महत्यां वै वेदविक्रय्यवाप्नुयात् ॥ अवमत्य तु यो दद्याद्गृहीयाद्यः प्रतिग्रहम् । तावुभौ नरके मग्नौ कालसूत्र अवाक्शिरौ॥नारदः—आपदं ब्राह्मणस्तीर्त्वा क्षत्रवृत्त्या धृतो द्विजः। उत्सृज्य क्षत्रवृत्तिं तां कुर्यात्पावनमात्मनः ॥ तस्यामेव तु यो वृत्तौ ब्राह्मणो वर्तते सदा । काण्डपृष्ठः श्रुतो मूढः सोपांक्तेयो द्विजाधमः ॥ यमः—योर्थार्थीमां द्विजो दद्यात्पठेच्चैवाविधानतः । अनध्याये च तं प्राहुर्वेदविप्लावकं बुधाः ॥ मनुः—भृत्यापनं प्राध्ययनं प्रश्नपूर्वप्रतिग्रहः । याजनाध्यापने वादः षड्विधो वेदविक्रयः ॥ पराशरसंवर्तौ—न वेदबलमाश्रित्य पापकर्मरतिर्भवेत् । अज्ञानाच्च प्रमादाच्च दह्यते कर्म नेतरत् ॥ याज्ञवल्क्यः—प्रतिग्रहसमर्थोपि नादत्ते यः प्रतिग्रहम् । ये लोका दानशीलानां स तानाप्नोति पुष्कलान् ॥ मनुः—अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः । या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥ उत्कृष्टं वापकृष्टं वा तयोः कर्म न विद्यते । मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते ॥ शूद्रस्योत्कृष्टं ब्राह्मं कर्म नास्ति, ब्राह्मणस्य न शू-

द्रकर्मे, मध्यमे कर्मणी क्षत्रियविट्कर्मणी, सर्वेतुल्ये इत्यर्थः । यो मोहादधमो जात्या जीवेदुत्कृष्टकर्मभिः । तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥ शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः । गोभिरश्वैश्च यान्यैश्च कृष्या राजोपसेवया ॥ अयाज्ययाजनैश्चैव नास्तिकेन च कर्मणा । कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः ॥ शिल्पेन–" कर्षणं पशुपालनं भारोद्वहनं पण्यव्यवहारो विक्रयकर्म नृत्तगीतवेणुवीणामुरजमृदङ्गवादनानि " इति देवलेनोक्तशूद्रधर्मेण । स्मृतिरत्ने–महदापद्गतो विप्रो यन्त्रेणेक्षून्न पीडयेत् । प्रतिकाण्डप्रभेदेन ब्रह्महत्यासमं विदुः ॥ आश्वमेधिके–इक्षुवंशोद्भवः सोमः सोमवंशोद्भवो द्विजः । इक्षून्न पीडयेत्तस्मादिक्षुघात्यात्मघातुकः ॥ तिलान्न पीडयेद्विद्वान् यन्त्रचक्रे स्वयं स्थितः । पीडयन् हि द्विजो मोहान्नरकं याति दारुणम् ॥ स्नेहद्रव्यरसानां च सत्वानां जीवतामपि । विक्रेता दानपुण्यानां प्रोच्यते ब्रह्महा बुधैः ॥ स्नेहद्रव्यं तैलघृतादि, जीवत्सत्त्वाः–एकशफादयः, दानं इष्टापूर्तादि, पुण्यानि तपःफलानि, तेषां न विक्रयः कार्यः । दानं तु स्वेष्टदेवतादिभ्यः कार्यम् । तथा विज्ञानेश्वरे–देवतानां गुरूणां च मातापित्रोर्विशेषतः । पुण्यं देयं प्रयत्नेन नापुण्यं चोदितं क्वचित् ॥ अत एव हि कर्मान्ते–" ब्रह्मार्पणम् " " भगवत्समाराधनम् " इति वदन्ति सन्तः । याज्ञवल्क्यः–कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः । सेवानूपो नृपो भैक्ष्यमापत्तौ जीवनानि तु ॥ शिल्पं सूपकरणादि, भृतिः प्रेष्यत्वम्, विद्या भृतकाध्यापकद्वारा, कुसीदं वृद्ध्यर्थं धनप्रयोगः, इदं ब्राह्मणव्यतिरिक्तविषयम् । ब्राह्मणः क्षत्रियो वापि वृद्धिं नैव प्रयोजयेत् । आपद्यपि न वार्धुष्यं ब्राह्मणस्य विधीयते ॥ इति स्मृतेः । शकटं धान्यादिवहनद्वारा, गिरिः शाकमूलफलादिभूयिष्ठत्वेन जीवनार्थः, अनूपः बहुवृक्षजलप्रायप्रदेशः । मनुः–विद्या शिल्पं भृतिः सेवा राजा च विपणिः कृषिः । गिरिर्भैक्ष्यं कुसीदं च दश जीवनहेतवः ॥ विपणिः पण्यव्यवहारः, क्रयविक्रयधर्म इति यावत् । केषु चिद्रव्येषु परिग्रहानुग्रहमाह याज्ञवल्क्यः–कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः । मांसं शय्यासनं धानाः प्रत्याख्येया न वारि च ॥ मनुः–शय्यां गृहान् कुशान् गन्धानपः पुष्पं मणिं दधि । मत्स्यान् धानाः पयो मांसं शाकं चैव न निर्नुदेत् ॥ तथोदकं मूलफले अन्नमभ्युद्यतं च यत् । सर्वतः प्रतिगृह्णीयात् मध्वथाभयदक्षिणाम् ॥ अस्य कश्चिदपवादमाह याज्ञवल्क्यः–अयाचिताहृतं ग्राह्यमपि दुष्कृतकारिणः । अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥ हारीतः–चिकित्सकस्य मृगयोर्वेश्यायाः कितवस्य च । षण्डसूचकयोश्चैवमुद्यतामपि वर्जयेत् ॥ शाण्डिल्यः–कुलटाषण्ढपतितवैरिभ्यः काकणीमपि । उद्यतामपि गृह्णीयान्नापद्यपि कदाचन ॥ महापातकिनश्चोरादब्रह्मद्विषजस्तथा । मृगयोः पिशुनाच्चैव नाददीतोद्यतामपि ॥ एवं च । अयाचितोपपन्नेषु नास्ति दोषः प्रतिग्रहे । अमृतं तद्विदुर्देवास्तस्मात्तं नैव निर्नुदेत् ॥ अयाचितानि देयानि सर्वदानानि यत्नतः । अन्नं विद्या च कन्या च ह्यनर्थिभ्यो न दीयते ॥ अभिगम्य तु यद्दानं यच्च दानमयाचितम् । दृश्यते सागरस्यान्तस्तद्दानस्य न दृश्यते ॥ इत्यादिकं षण्ढादिव्यतिरिक्तविषयं द्रष्ट-

व्यम् । अत एवापस्तम्बेन क आश्यान्न इति मतभेदमुपन्यस्य, शुद्धाभिक्षा भोक्तव्येककुणिकौ काण्वकुत्सौ तथा पुष्करसादिरिति शुद्धभिक्षाया एव आह्यत्वं बहुसम्मतमित्युक्तम् । अनन्तरं च सर्वतोपेतं वार्ष्यायणीयं पुण्यस्येप्सतो भोक्तव्यं पुण्यस्याप्यनीप्सतो न भोक्तव्यम् । यतः कुतश्चाभ्युद्यतमभोक्तव्यं नानुयोगपूर्वकमिति । हारीतोय पुराणे श्लोकावुदाहरति–उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् । भोज्यां मेने प्रजापतिरपि दुष्कृतकारिणः ॥ न तस्य पितरोश्नन्ति दश वर्षाणि पञ्च च । न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते ॥ इति स्वयमभ्युद्यतग्रहणं तन्निराकरणे निन्दार्थवादं चाभिधायोक्तम् । चिकित्सकस्य मृगयोः शल्यकृन्तस्य पाशिनः । कुलटायाः पण्डकस्य तेषामन्नमनाद्यमथाप्युदाहरन्ति " अन्नादेर्भ्रूणहा मार्ष्टि " इत्यनेनाभिशंसति " स्तेनः प्रमुक्तो राजनि याचन्ननृतसंकरः । " इति । अन्नं पक्वमपक्वं च, अतः शुद्धैव भिक्षाप्युद्यता ग्राह्येति सिद्धम् । अत्र **शाण्डिल्यः**–अकर्मण्यानि लब्धानि यदि द्रव्याण्यकामतः । तेषां विनिमयेनैव शुद्धिस्त्यागेन वा पुनः ॥ किंच । समीपस्थमतिक्रम्य ब्राह्मणं वेदपारगम् । दाने च श्राद्धकाले च तत्सर्वं निष्फलं भवेत् ॥ आश्रुतस्याप्रदानेन दत्तस्य हरणेन च । जन्मप्रभृति यद्दत्तं तत्सर्वं नश्यति ध्रुवम् ॥ मा ददस्वेति यो ब्रूयाद्गव्यग्नौ ब्राह्मणेषु च । तिर्यग्योनिशतं प्राप्य चण्डालेष्वभिजायते ॥ इत्यादिकं मूर्खादिव्यतिरिक्तविषयम् । तथा **बृहस्पतिः**–ब्राह्मणातिक्रमो नास्ति मूर्खे मन्त्रविवर्जिते । ज्वलन्तमग्निमुत्सृज्य नहि भस्मनि हूयते ॥ तल्लक्षणमाह **बोधायनः**–शङ्कापिहितचारित्रो यः स्वाभिप्रायमाश्रितः । शास्त्रातिगः स्मृतो मूर्खो धर्मतन्त्रोपरोधनात् ॥ **गौतमः**–प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात् । **मनुः**–न वार्यपि प्रयच्छेत बैडालव्रतिके द्विजे । न बकव्रतिके चैव ना वेदविधिधर्मवित् ॥ **नारदः**–पण्डस्य पुत्रहीनस्य दम्भाचारयुतस्य च । नक्षत्रपाठकस्यापि दत्तं भवति निष्फलम् ॥ यत्तु–सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । श्रोत्रिये शतसाहस्रमनन्तं वेदपारगे ॥ इति, तत्तु ग्रहणविषयम् । तत्रैव "सर्वो ब्रह्मसमः स्मृतः" इति स्मरणात् । अब्राह्मणब्राह्मणब्रुवदानमापद्विषयं वा । यत्तु–पितुः शतगुणं दानं सहस्रं मातुरुच्यते । भगिन्याः शतसाहस्रं सोदर्ये दत्तमक्षयम् ॥ इति, तद्विभक्तविषयम्, अन्यथा द्रव्यस्य मध्यगतत्वेन दानायोगात् । **नारदः**–मातापितृविहीनस्य संस्कारोद्वहनादिभिः । यः स्थापयति तस्येह पुण्यसंख्या न विद्यते ॥ न तच्छ्रेयोऽग्निहोत्रेण नाश्वमेधेन लभ्यते । यच्छ्रेयः प्राप्नुयात्सम्यग्विप्रेण स्थापितेन वै ॥ दक्षस्मृतावप्येवमेव मातापितृविहीनस्येत्यादि समानम् । एवमप्यन्यस्मै दानाय स्तेयं न कार्यम् । अत्र **नारदः**–अपहृत्य द्विजस्यार्थं यः परेभ्यः प्रयच्छति । स दाता नरकं याति यस्यार्थस्तस्य तद्भवेत् ॥ **बृहस्पतिः**–न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते । विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥ **पुराणे च**–इन्द्रः पृच्छति चाण्डालीं किमिदं पच्यते शुभे । श्वमांसं सुरया सिक्तं कपालेन चिताग्निना ॥ किमर्थं वद कल्याणि चर्मणा पिहितं त्वया । ब्रह्मस्वं ब्राह्मणक्षेत्रं हरन्ते हारयन्ति ये ॥ तेषां पादरजोभीत्या चर्मणा पिहितं मया । **सप्तर्षिसंवादे**–दारत्यागी कृतघ्नश्च भूमिहर्ता च ते त्रयः । नरकान्न निवर्तन्ते यावच्चन्द्रदिवाकरौ ॥ वने व-

नतरूनग्निर्दहन्मूलानि रक्षति । कुलं समूलं दहति ब्रह्मस्वारणिपावकः ॥ स्वदत्ताद्द्विगुणं पुण्यं परदत्तानुपालने । परदत्तापहारेण स्वदत्तं निष्फलं भवेत् ॥ दानपालनयोर्मध्ये दानाच्छ्रेयोनुपालनम् । दानात्स्वर्गमवाप्नोति पालनादच्युतं पदम् ॥ याज्ञवल्क्यः–प्रजापीडनसन्तापसमुद्भूतो हुताशनः । राज्ञः श्रियं कुलं प्राणान्न दग्ध्वा विनिवर्त्तते ॥ ततश्च–आपत्सु विहितं स्तैन्यं विशिष्टसमहीनतः । हीनादादेयमादौ स्यात्समाद्वा तदनन्तरम् ॥ असंभवे त्वाददीत विशिष्टादपि धार्मिकात् । इति व्यासवचनं फलादिविषयमेव । तथापस्तम्बः–परपरिग्रहमविद्वानाददान एधोदके मूले पुष्पे फले गन्धे ग्रासे शाक इति वाचा बाध्यो विदुषो वाससः परिमोषणमदण्ड्यः कामकृते तथा प्राणसंशये भोजनमाददान इति । परिमोषणं अपहारः, एवमध्वश्रान्तापि । तथा मनुः–चणकव्रीहिगोधूमयवानां मुद्गमाषयोः । अनिषिद्धो ग्रहीतव्यो मुष्टिरेकोध्वनिर्जितैः ॥ द्विजोध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके । आददानः परक्षेत्रान्न हस्तच्छेदमर्हति ॥ द्विजग्रहणादन्यो दण्डय एव । तृणं वा यदि वा काष्ठं मूलं वा यदि वा फलम् । अनापृष्टं तु गृह्णानो हस्तच्छेदनमर्हति ॥ इति स्मृतेः । अतोनुमत्यैव सर्वं ग्राह्यम् । तथापस्तम्बः–यथा तथा च परपरिग्रहमभिमन्यते स्तेनो ह भवति इति कौत्सहारीतौ, तथा काण्वपुष्करसादी, सन्त्यपवादाः परिग्रहेष्विति वार्ष्यायणिः,शम्योपा युग्यघासो न स्वामिनः प्रतिषेधयन्त्यतिव्यवहारे वृद्धो भवति सर्वत्रानुमतिपूर्वमिति हारीतः॥इति अपवादा इति,आपदीति शेषः।शम्योपाः चणकमुद्गादयः, न स्वामिनः प्रतिषेधयन्ति। स्वामिनः प्रतिषेधं न कारयन्ति, स्वामिना न प्रतिषेद्धव्यमित्यर्थः । विषयभेदेन दोषाभावमाहात्र मनुः–वानस्पत्यं फलं मूलं दार्वग्न्यर्थं तृणानि च । तृणं च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत् ॥ नारदः–ब्राह्मणेभ्यो यदुद्दिष्टं तत्सद्य, संप्रदीयते । अहोरात्रमतिक्रम्य तद्दानं द्विगुणं भवेत्॥ त्रिरात्रे षड्गुणं दद्यादृशरात्रे तु षोडश । मासे शतगुणं दद्याद्वत्सरे तु सहस्रकम् ॥ वत्सरात्परतो नास्ति दाता तु नरकं व्रजेत् । ब्राह्मणस्य तु यद्दत्तं तदभावे तु तद्धनम् ॥ सकुल्ये तस्य निनयेत्तदभावेस्य बन्धुषु । दद्यात्सजातिशिष्येभ्यस्तदभावेप्सु निक्षिपेत् ॥ विप्राय दीयमाने तु यो विघ्नं कुरुते नरः । स याति ब्रह्महत्यानां सहस्राणां शतायुतम् ॥ उपकाराय यो ब्रूयाद्ब्राह्मणानां गवामपि । ब्रह्मयोनिशतं प्राप्य देवत्वमधिगच्छति ॥ रोगितान् ब्राह्मणान्यस्तु रक्षति क्षितिरक्षकः। स कोटिकुलसंयुक्तो वसेद्ब्रह्मपुरे युगम् ॥ कर्मणा मनसा वाचा यो रक्षत्यामयाविनम् । तस्य विष्णुः प्रसन्नात्मा सर्वान् कामान्प्रयच्छति ॥ यो ददात्यभयं भूपो भयविह्वलचेतसाम् । तस्य पुण्यफलं वक्तुं कः समर्थोस्ति पंडितः ॥ परोपदेशनिरता वीतरागा विमत्सराः । हरिपादार्चनरताः प्रयान्ति ब्रह्मणः पदम्॥ एतदन्तं नारदीयम् । इतिहाससमुच्चये च–एकतः क्रतवः सर्वे समग्रवरदक्षिणाः । एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥ महतामपि यज्ञानां कालेन क्षीयते फलम् । भीताभयप्रदानस्य क्षय एव न विद्यते ॥ समुच्चये–तरुणी रूपसम्पन्ना सुशीला च पयस्विनी । न्यायार्जिता सवत्सा च प्रदेया श्रोत्रियाय गौः ॥ वृद्धा सरोगा हीनाङ्गा वन्ध्या दुष्टा मृतप्रजा । दूरस्था न्याय-

लब्धा च न देया गौः कथंचन ॥ इतिहाससमुच्चये **औद्दालिकप्रश्ने**–जितेन्द्रियाय शान्ताय वैष्णवाय यथाविधि । धेनुं दत्त्वा घृतमयीं विष्णुसायुज्यमाप्नुयात् ॥ यस्य विष्णुपरं ज्ञानं यस्य विष्णुपरं मनः । तस्मै देया महाभाग भूमिः सर्वफलान्विता ॥ न तस्माद्भूमिदानस्य पात्रमस्तीति मे मतिः ॥ ब्रह्माण्डे पार्वतीं प्रति रुद्रः–चक्रांकिताय विप्राय विष्णुभक्ताय पार्वति । गोकर्णमात्रिकां भूमिं दद्याद्राज्यमवाप्नुयात् ॥ विषुवायनकालेषु चक्रचिह्नाय पार्वति । तिलद्रोणं महादानं महापातकनाशनम् ॥ **गारुडे पुराणे**–विष्णुचक्रांकितं गात्रं पवित्रमिति वै श्रुतिः । चक्रांकिताय दातव्यं हव्यं कव्यं द्विजातये ॥ तत्रैव **भगवानाह**–मद्भक्ता ये द्विजश्रेष्ठा मत्कथा मत्परायणाः । तान् पंक्तिपावनान् विद्धि पूज्यांश्चैव विशेषतः ॥ **पाद्मे**–पापैर्न लिप्यते देही चक्राद्यायुधलाञ्छितः । हव्यं कव्यं च यद्देयं तस्मै तद्दानमक्षयम् ॥ **आश्वमेधिके**–वासुदेवं समुद्दिश्य सर्वदानानि पार्थिव । वैष्णवेभ्यः प्रयत्नेन दातव्यानि मनीषिणा ॥ मानसतीर्थप्रशंसायां **व्यासः**–तस्माद्विष्णुप्रसादाय वैष्णवान्परितोषयेत् । प्रसादसुमुखो विष्णुस्तेनैव स्यान्न संशयः॥अत्र **विज्ञानेश्वरे** सर्वदानविषये त्रैविध्यं फलतारतम्यं चोक्तम्–गत्वा यद्दीयते दानं तदनन्तफलं स्मृतम् । सहस्रगुणमाहूय याचिते तु तदर्धकम् ॥ अतो याचितेपि प्रीतिपूर्वकं देयमेव । तथा **याज्ञवल्क्यः**–दातव्यं प्रत्यहं पात्रे निमित्ते तु विशेषतः । याचितेनापि दातव्यं श्रद्धापूर्वं तु शक्तितः ॥ अत्र **मनुः**–जलदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः । तिलदस्तु प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः । गृहदोग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥वासोदश्चन्द्रसालोक्यमश्विसायुज्यमश्वदः । यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः ॥ धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसाम्यताम् । यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ॥ आयुर्विप्रपरीवादाद्दानं तु परिकीर्तनात् । **माघमाहात्म्ये**–दत्तं हि प्राप्यते स्वर्गे दत्तमेवोपभुज्यते । यत्किंचिद्दत्तमश्नाति नादत्तमुपतिष्ठते ॥ **श्रीमद्रामायणे**–उत्पतन्नपि चाकाशं विशन्नपि रसातलम् । अटन्नपि महीं कृत्स्नां नादत्तमुपतिष्ठते ॥ एवमपि न प्रतिपिपादयिषया जिघृक्षेत । संतोषं परमास्थाय सुखार्थी संयतो भवेत् । संतोषमूलं हि सुखं दुःखमूलं विपर्ययः ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥ योऽसाधुभ्योर्थमादाय साधुभ्यः सम्प्रयच्छति । स कृत्वा प्लवमात्मानं सन्तारयति तावुभौ ॥ इत्यादिस्मृतिभ्यः । अतो वृत्तिलाभे नाधिकमिच्छेत् । तथा **बृहस्पतिः**–यथोत्पन्नैस्तु संतोषः कर्त्तव्यः स्वागतैर्धनैः । परार्थं नाभिलाषेत सा स्पृहा परिकीर्तिता ॥ अगाधे च–यदृच्छालाभसंतुष्टस्ततो याति परां गतिम् । समुच्चये च–तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् । येनाशां पृष्ठतः कृत्वा नैराश्यमवलम्बितम् ॥ अतो दरिद्रस्य शतगुणदानेपि तद्दानं महद्भवतीति दर्शितम् । अत्रैव–नाल्पत्वं वा बहुत्वं वा दानस्याभ्युदयावहम् । श्रद्धा भक्तिश्च दानानां वृद्धिक्षयकरे हि ते ॥ नैवं शक्तस्य । अत्र **मनुः**–प्रभुः प्रथमकल्पस्य योनुकल्पेन वर्तते ।

न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम् ॥ साम्परायिकं पारलौकिकम् । अत्र **याज्ञवल्क्यः**—हीनकल्पं न कुर्वीत सति द्रव्येऽफलप्रदम् ॥

## ❀ महादानानि ❀

**बृहस्पतिः**—कनकाश्वतिला नागा दासीभूमिगृहा रथः । कन्या च कपिला चैव महादानानि वै दश ॥ अत्र **मनुः**—त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती । अतिदानानि दानानां विद्यादानं ततोधिकम् ॥**त्रिभाष्यरत्ने**—विद्यानां च परा विद्या ब्रह्मविद्या समीरिता । अतस्तद्दातुरस्यैव लाभः स्वर्गापवर्गयोः ॥ **श्रीविष्णुधर्मोत्तरे**—यो दद्याज्ज्ञानमज्ञानां कुर्याद्वा धर्मदेशनम् । स कृत्स्नां पृथिवीं दद्यात्तेन तुल्यं न तत्फलम् ॥ धर्मदेशनं धर्मोपदेशः । **याज्ञवल्क्यः**—सर्वधर्ममयं ब्रह्म प्रदानेभ्योधिकं यतः । तद्ददत्समवाप्नोति ब्रह्मलोकं सनातनम् ॥ ( ब्रह्मलोकमविप्लुवमिति पाठान्तरम् ) यतः यस्मात्, ब्रह्म वेदः, सर्वधर्ममयं सर्वधर्मप्रतिपादकत्वेन, तस्मात्तद्दानं सर्वदानेभ्योधिकम् । अत्र च ब्रह्मदाने परस्वत्वापादानमात्रं दानम्, स्वस्वत्वानिवृत्तेः कर्तुमशक्यत्वात्, विद्याज्ञानदाने द्रव्यादिदानवद्दत्त्वे दातुमशक्यत्वेपि बुद्धिविशेषसम्पत्तिः समाना, भूदाने च स्वस्वत्वनिवृत्तिः परस्वत्वापादनं च दानं विद्याव्यतिरिक्तविषयम् । **नारायणीये च**—ज्ञानमज्ञस्य यो दद्याद्वेदशास्त्रसमुद्भवम् । अपि देवास्तमर्चन्ति भर्गब्रह्मदिवाकराः ॥ अत्र **पराशरः**—अर्थस्य मूलं निकृतिः क्षमा च धर्मस्य मूलं हि तपो दया च । कामस्य मूलं हि वपुर्वयश्च मोक्षस्य सर्वार्थनिवृत्तिरेव ॥ **विद्यादानफलमाह**—दशवाजिसमा कन्या भूमिदानं च तत्समम् ॥ भूमिदानात्परं नास्ति विद्यादानं ततोधिकम् ॥ **मनुरपि**—सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते। वस्त्रान्नगोमहीवाहतिलकाञ्चनसर्पिषाम्॥ **बृहस्पतिरपि**—विद्यादानेन सुमतिर्ब्रह्मलोके महीयते । **शाण्डिल्यः**—ब्रह्मविद्याप्रदानस्य देवैरपि न शक्यते । प्रतिप्रदानमथ वा दद्याच्छक्तित आदरात् ॥ **प्रजापतिः**—दानानां चैव सर्वेषां ब्रह्मदानं विशिष्यते । ब्रह्मदानेन देवेयं ब्रह्मलोकं स गच्छति ॥ **दक्षः**—सर्वेषामेव दानानां फलं वक्ष्ये द्विजोत्तम । अन्नदानात्स्वर्गलोकं कन्यादानात्परं पदम् ॥ विद्यादानाद्ब्रह्मलोकं ब्रह्मत्वं हरिपूजनात् । **मनुरपि**—विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् । नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ इति वचनं ब्रह्मविद्याप्रदानव्यतिरिक्तविषयमिति मन्तव्यम् ॥

## ❀ अथाचार्यलक्षणम् ❀

अनन्तरमाचार्यलक्षणमाह **मनुरेव**—निषेकादीनि कर्माणि यः करोति यथाविधि । संभावयति चान्नेन स विप्रो गुरुरुच्यते ॥ **याज्ञवल्क्यः**—उपनीय ददद्वेदमाचार्यः स उदाहृतः । अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ॥ तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया । **मनुश्च**—उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः । योऽध्या-

पयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥ उपाध्यायाद्दशाचार्य आचार्याणां शतं पिता । सहस्रं तु पितुर्माता गौरवेणातिरिच्यते ॥ उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता । ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥ **व्यासः**—यश्च मन्त्रप्रदोर्थं वा यश्च विद्यां प्रयच्छति । गुरू तावपि जानीयात् मन्त्रार्थग्रहणाद्द्विजः ॥ कामान्माता पिता चैनं यदुत्पादयतो मिथः । संभूतिं तस्य तां विद्याद्योनावधिजायते ॥ आचार्यो ह्यस्य यां जातिं विधिवद्वेदपारगः । उत्पादयति सावित्र्या सा सत्या साऽजरामरा ॥ ब्राह्मस्य जन्मनः कर्ता स्वधर्मस्य च शासिता । बालोऽपि वृद्धो विप्रस्य पिता भवति मन्त्रदः ॥ अज्ञो भवति वै बालः पिता भवति मन्त्रदः । अज्ञं हि बालमित्याहुः पितेत्येव च मन्त्रदम् ॥ न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः । ऋषयश्चक्रिरे धर्मं योनूचानः स नो महान् । **आपस्तम्बः**—तस्मिन्नभिजनविद्यासमुदितं समाहितं संस्कारमीप्सेत्तस्मिन्नेव विद्याकर्मान्तमविप्रतिपन्ने धर्मेभ्यो यस्माद्धर्मानाचिनोति स आचार्यस्तस्मै न द्रुह्येत् कदाचन स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म शरीरमेवास्य मातापितरौ जनयतः । **मनुश्च**—आचार्यश्च पिता चैव माता भ्राता च पूर्वजः । नार्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः ॥ आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः । माता पृथिव्या मूर्तिस्तु भ्राता स्वो मूर्तिरात्मनः ॥ यन्मातापितरौ क्लेशं सहेते संभवान्नृणाम् । न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥ तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा । तेषु हि त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥ तेषां त्रयाणां शुश्रूषा परमं तप उच्यते । न तैरनभ्यनुज्ञातो धर्ममन्यं समाचरेत् ॥ त एव हि त्रयो लोकास्त एव त्रय आश्रमाः । त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥ पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः । गुरुराहवनीयोऽग्निः साग्नित्रेता गरीयसी ॥ इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम् । गुरुशुश्रूषया चैव ब्रह्मलोकं समश्नुते ॥ सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः । अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ यावत्त्रयस्ते जीवन्ति तावन्नान्यत्समाचरेत् । तेष्वेव नित्यं शुश्रूषां कुर्यात्प्रियहिते रतः ॥ तेषामनुपरोधेन पारक्यं सर्वमाचरेत् । तत्तन्निवेदयेत्तेभ्यो मनोवाक्कायकर्मभिः ॥ एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते । **देवलः**—नास्ति मातृसमं दैवं नास्ति पित्रा समो गुरुः । तयोः प्रत्युपकारो हि न कथंचन विद्यते ॥ सर्वार्थसंभवो देहो जनितः पोषितो यतः । न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ॥ अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते । स्वाधीनं समतिक्रम्य पितरं मातरं गुरुम् ॥ माता मासदशावस्थां धृत्वा शूलैः समाकुला । वेदनाविविधैर्दुःखैः प्रसूयेत विमूर्छिता ॥ प्राणैरपि प्रियान् पुत्रान् मन्यते सुतवत्सला । कस्तस्या निष्कृतिं कर्तुं शक्तो वर्षशतैरपि ॥ ब्रह्मोपदेशमेकत्र वेदशास्त्राण्यथैकतः । आचार्यः स तु विज्ञेयस्तथैकैकास्तु देशिकाः ॥ ब्रह्मोपदेशमारभ्य यावद्वेदान्तदर्शनम् । एकेन वक्ष्यते येन स महागुरुरुच्यते ॥

## ❀ कर्मविपाकविवरणम् ❀

अथ कर्मविपाकमाह **मनुः**—पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते । तच्छान्तिरी-

द्यान्विशेषतः ॥ स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सरीसृपाः । पशवश्च सृगालाश्च जघन्या तामसी गतिः॥हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः। सिंहव्याघ्रवराहाश्च मध्यमा तामसी गतिः ॥ चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः । रक्षांसि च पिशाचाश्च तामसी उत्तमा गतिः ॥ भिल्ला मल्ला नटाश्चैव पुरुषाश्च कुवृत्तयः । द्यूतपानप्रसक्ताश्च प्रथमा राजसी गतिः॥ राजानः क्षत्रियाश्चैव राज्ञां चैव पुरोहिताः । दानयुद्धप्रधानाश्च मध्यमा राजसी गतिः ॥ गन्धर्वगुह्यका यक्षा विबुधानुचराश्च ये । तथैवाप्सरसः सर्वा राजसी ह्युत्तमा गतिः ॥ तापसा यतयो विप्रा ये च वैमानिका गणाः । नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः ॥ यज्वानो ऋषयो देवा वेदा ज्योतींषि वत्सराः । पितरश्चैव साध्याश्च द्वितीया सात्त्विकी गतिः ॥ ब्रह्मा विश्वसृजो धर्मो महानव्यक्त एव च। उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः॥यादृशेन हि भावेन यद्यत्कर्म निषेवते । तादृशेन शरीरेण तत्तत्फलमुपाश्नुते॥ अथ **याज्ञवल्क्यः**–महापातकजान् घोरान् नरकान् प्राप्य दारुणान् । कर्मक्षयात्प्रजायन्ते महापातकिनस्त्विह ॥ मृगश्वसूकरोष्ट्राणां ब्रह्महा योनिमृच्छति । खरपुल्कसवेनानां सुरापो नात्र संशयः ॥ कृमिकीटपतङ्गत्वं स्वर्णस्तेयी समाप्नुयात् । तृणगुल्मलतात्वं च क्रमशो गुरुतल्पगः ॥ अन्नहर्त्तामयावी स्यान्मूको वागपहारकः । धान्यहर्त्तातिरिक्ताङ्गः पिशुनः पूतिनासिकः ॥ तैलहृत्तैलपायी स्यात्पूतिवक्त्रस्तु सूचकः। परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च ॥ अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः । हीनजातौ प्रजायेत रत्नानामपहारकः ॥ श्वासकासयुतो मर्त्यो वन्दिग्राहसुतो भवेत् । निरीक्षिता परस्त्रीणां चक्षूरोगी प्रजायते ॥ सर्वापहरणं कृत्वा विसर्पी जायते नरः । गुरोर्वचनमुल्लंघ्य मतिभ्रष्टः प्रजायते ॥ पत्रशाकं शिखी हृत्वा गन्धाञ्छुच्छुन्दरी शुभान् । मूषको धान्यहारी स्याद्यानमुष्ट्रः फलं कपिः ॥ जलं प्लवः पयः काको गृहकारी ह्युपस्करम् । मधु दंशः फलं गृध्रो गां गोधाग्निं बकस्तथा ॥ श्वित्री वस्त्रं श्वा रसं तु चिरी लवणहारकः । **ब्राह्मे**–अन्नहर्त्ता भवेद्गुल्मी पूतिवक्त्रस्त्वसूयकः । परद्रव्यापहारी च पररत्नापहारकः ॥ परस्य संततिद्वेषी पराणामहितः सदा । मातापितृगुरुद्वेषी भार्यात्यागी तथैव च ॥ पिशुनो मर्मभेदी च पादरोगी प्रजायते । परस्त्रीगामिनश्चैव तापसीगामिनस्तथा ॥ परस्त्रीष्वनुकूलाश्च जायन्ते ते प्रमेहिनः । **योगीश्वरः**–गुरुं त्वंकृत्य हुंकृत्य विप्रं निर्जित्य वादतः । अरण्ये निर्जले घोरे स भवेद्ब्रह्मराक्षसः ॥ कांस्यपात्रस्य यो हर्त्ता परिभाषी निरन्तरम् । कार्पासस्य तु यो हर्त्ता श्वेतकुष्ठी प्रजायते ॥ **मनुः**–शास्त्रोक्तेनैव मार्गेण विच्युतश्चान्यमार्गतः । महाशब्दातिपातश्च बधिरश्चोपजायते ॥ **मार्कण्डेयः**–यः स्वामिनिन्दकश्चैव गुरुनिन्दक एव च । देवतानिन्दकश्चैव ह्यपस्मारी प्रजायते। **वसिष्ठः**–देवद्रव्योपभोक्ता च देवकार्यविघातकः । अभक्ष्यभक्षकश्चैव पाण्डुरोगी प्रजायते ॥ मनस्तापं तु यः कुर्याद्ब्राह्मणानां विशेषतः । ज्वरवान्भविता मर्त्यो मेहवानथवा भवेत् ॥ विश्वासघातुकश्चैव च्छर्दियुक्तः प्रजायते । वापीकूपतटाकादिभेदकस्त्वतिसारवान् ॥ सूचनाच्छूलवान् मर्त्यो विस्फोटी रविनिन्दकः । निक्षेपस्य च यो हर्त्ता शोषवान् जायते भृशम्॥ बहुदेशान् समासाद्य स या-

ति नरकं ध्रुवम् । कृतघ्नस्तु कुतो विप्रो यमस्य विषयं गतः ॥ असिपत्रवनं घोरं याति वार्धुषिककिल्बिषम् । देवतानिन्दकश्चैव वेदनिन्दक एव च ॥ कर्मणां निन्दकश्चैव कर्मभ्रष्टोभिजायते । प्रदर्शनार्थमेतत्तु मयोक्तं स्तेयकर्मणि ॥ यथाकर्मफलं प्राप्य तिर्यक्त्वं कालपर्ययात् । जायन्ते लक्षणभ्रष्टा दरिद्राः पुरुषाधमाः ॥ ततो निष्कल्मषीभूताः कुले महति योगिनाम् । जायन्ते विद्ययोपेता धनधान्यसमन्विताः ॥ विहितस्याननुष्ठानान्निन्दितस्य निषेवणात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ **गौतमः**—पापमेवं परिज्ञात्वा तत्पापं न समाचरेत् । तस्मात्सर्वप्रयत्नेन पुण्यमेव समाचरेत ॥ **मनुः**—मानसं मनसैवायमुपभुंक्ते शुभाशुभम् । वाचैव वाक्कृतं कर्म कायेनैव तु कायिकम् ॥ शरीरजैः कर्मदोषैर्याति स्थावरतां नरः । वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥ एतज्ज्ञात्वा द्विजो धर्मं पापं नैव समाचरेत् । अथ महापातकप्रायश्चित्तमाह **पराशरः**—वेदवेदांगतत्वज्ञा धर्मशास्त्रविशारदाः । स्वधर्मनिरताः शान्तास्तेषां पापं निवेदयेत् ॥ **वसिष्ठः**—येन येन तु पापेन कर्मणा पुरुषो गतिम् । प्रयाति नरकं घोरं ततो वक्ष्याम्यतः परम्॥ पतितस्यापरिग्रहार्थं शुनां योनिषु जायते । पतितं याजमानस्तु मृगयोनौ प्रजायते ॥ गुरोर्भार्यां समागम्य कृत्वा चालिङ्गनादिकम् । शुनां योनिशतं प्राप्य सर्पयोनिषु जायते ॥ मातापितरौ चाक्षिप्य शल्यकः सम्प्रजायते । ताडयेद्वा द्विजं मोहात्कंको गृध्रश्च जायते ॥ परदाराभिमर्शेन धार्तराष्ट्रः प्रजायते । भ्रातृभार्यां च दुर्मेधा योधिगच्छति मोहितः ॥ गर्दभत्वमवाप्नोति ततः सर्पोभिजायते । सखिभार्यां मातुलानीं योधिगच्छति मोहितः ॥ मृतः श्वत्वमवाप्नोति सूकरश्चापि जायते । उपस्थिते विवाहे च दानकाले तथैव च ॥ विघ्नं करोति यो मोहान्मृतो जायेत सूकरः । यः शूद्रो ब्राह्मणीं गत्वा कृमियोनौ प्रजायते ॥ तस्यां पुत्रं समुत्पाद्य विष्ठायां जायते कृमिः। शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ॥ जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते । स्त्रियं हित्वा स्वधर्मेण यमस्य विषयं गतः ॥ **मनुः**—एकोपि वेदधर्मज्ञो यमाचष्टे समाहितः । स विज्ञेयः परो धर्मो नाज्ञानामयुतेन तु ॥ **जाबालिः**—दश द्वादश वा विप्रान् वेदशास्त्रविशारदान् । स्वकर्मनिरतान् शान्तान् परिषत्त्वे निवेशयेत् ॥ **पराशरः**—जन्मकर्मपरिभ्रष्टाः संध्योपासनवर्जिताः । रहिता वेदशास्त्रेभ्यस्ते द्विजा नामधारकाः ॥ प्रायश्चित्तं प्रयच्छन्ति ये द्विजा नामधारकाः । ते द्विजाः पापकर्माणः समस्ता नरकं ययुः ॥ विज्ञाप्य नखलोमानि प्रवाप्य स्नानमाचरेत् । मृत्तिकागोशकृद्भ्यां च पञ्चगव्यकुशोदकैः ॥ राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः । केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत् ॥ **विश्वामित्रः**—सर्वान् केशान् समुद्धृत्य च्छेदयेदंगुलित्रयम् । भस्मगोमयमृद्वारिपञ्चगव्यप्रकल्पितैः ॥ मलापकर्षणं कुर्याद्बाह्यशौचादिसिद्धये । स्नात्वाचम्य शुचिर्भूत्वा सार्द्रवासाः समाहितः ॥ प्रदक्षिणत्रयं कृत्वा पापानि विनिवेदयेत् । सभैव न प्रवेष्टव्या वक्तव्यं नासमञ्जसम् ॥ अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी । अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं विधीयते ॥ प्रायश्चित्ती भवेत्पूतः परिपक्तिकिल्बिषं व्रजेत् । **पराशरः**—यद्वदन्ति तमोमूढा मूर्खा धर्ममजानतः। तत्पापं शतधा भूत्वा तद्वक्तृनधिगच्छति॥

प्राजापत्यं चरेत्कृच्छ्रमज्ञात्वा योभिधास्यति । प्राजापत्ये त्वशक्तश्चेद्गां दद्याच्छुभलक्षणाम् ॥ इति । प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपोनिश्चयसंयोगात्प्रायश्चित्तमिति स्मृतम् ॥ मनुः–ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुस्तत्संयोगी च पञ्चमः ॥ वसिष्ठः–ब्रह्मघ्नश्च सुरापश्च स्तेनश्च गुरुतल्पगः । महापातकिनस्त्वेते तत्संयोगी च पञ्चमः । ब्रह्महा द्वादशाब्दानि कृच्छ्रं कुर्याद्वनेन वा । चातुर्वर्ण्यं चरेद्भैक्षं तत्पापं वाचयेत्सदा ॥ वाराणसीं ततो गच्छेत्ततः श्रीपावनादिकम् । अन्यानि तीर्थयानानि गायत्रीं च समाचरेत् ॥ मनुः–ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसन् । भैक्षमात्मविशुद्ध्यर्थं कृत्वा शवशिरो ध्वजम् ॥ जपन्वान्यतमं वेदं योजनानां शतं व्रजेत् । ब्रह्महत्यापनोदाय मितभुङ् नियतेन्द्रियः ॥ सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् । जपेद्वा नियताहारस्त्रिवेदस्य च संहिताम् ॥ कृतवपनो निवसेद्ग्रामान्ते गोव्रजेपि वा । आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः ॥ मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च । एवं दृढव्रतो नित्यं ब्रह्मचारी समाहितः ॥ समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्यपोहति । ब्रह्महत्याकृतं पापं व्यपोहत्यात्मवत्तया ॥ हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत् । उक्त्वा चैवानृतं साक्ष्ये प्रतिरुद्ध्य गुरुं तथा ॥ अपहृत्य च निक्षेपं कृत्वा च स्त्रीसुहृद्वधम् । इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ॥ कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते । याज्ञवल्क्यः–शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन् । ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात् ॥ ब्राह्मणस्य परित्राणात् गवां द्वादशकस्य च । तथाश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयात् ॥ अरण्ये नियतो जप्त्वा त्रिकृत्वो वेदसंहिताम् । शुध्यते चावगाहित्वा प्रतिस्रोतां सरस्वतीम् ॥ पात्रे निधाय पर्याप्तं धनं वा ब्रह्महा शुचिः । पराशरश्च–ब्रह्महा द्वादशाब्दानि कपालं धारयेत्करे । पावनं भैक्षमाहारं कपालेनैव भोजयेत् ॥ अहं दुष्कृतकर्मा वै महासाहसकारकः । गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातुक ॥ तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च । पर्यटन् सर्वतीर्थेषु च्छत्रोपानद्विवर्जितः ॥ संपूर्णे द्वादशे वर्षे चरेत्कृच्छ्रं महाव्रतम् । पुनः प्रत्यागतो वेश्म कुर्याद्ब्राह्मणभोजनम् ॥ अगस्त्यः–सेतुं दृष्ट्वा समुद्रस्य ब्रह्महा गुरुतल्पगः । मुच्यते सर्वपापेभ्यः कृतघ्नोपि विमुच्यते ॥ मनुः–सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् । तया स्वकाये निर्दग्धे मुच्यते किल्बिषात्ततः ॥ गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा । पयो घृतं वाऽऽमरणाद्गोशकृद्रसमेव वा ॥ यस्य कायगतं ब्रह्म मद्येनाप्लाव्यतेसकृत् । तस्य व्यपैति तद्ब्रह्म शूद्रत्वं च स गच्छति ॥ याज्ञवल्क्यः–सुरा घृतं मेहमूत्रण्यसामग्निसन्निभम् । सुरापोन्यतमं पीत्वा मरणाच्छुद्धिमाप्नुयात् ॥ अज्ञानात्तु सुरां पीत्वा रेतोविण्मूत्रमेव च । पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत् । इहैव सा शुनी गृध्री सूकरी चापि जायते ॥ मनुः–सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु । स्वकर्म ख्यापयन् ब्रूयान्मां भवाननुशास्त्विति ॥ गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम् । वधेन शुद्ध्यति स्तेनो ब्राह्मणस्तपसैव वा ॥ चीरवासा द्विजोरण्ये चरेद्ब्रह्महणो व्रतम् । एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः ॥ याज्ञ

**वल्क्यः**-ब्राह्मणः स्वर्णहारी तु राज्ञो मुसलमर्पयेत । स्वकर्म ख्यापयन्स्तेनो हतो मुक्तोपि वा शुचिः ॥ अनिवेद्य नृपं शुध्येत्सुरापो व्रतमाचरेत् । आत्मतुल्यसुवर्णं वा दद्याद्वा विप्रतुष्टिकृत् ॥ **मनुः**-गुरुस्त्रीगमनी यस्तु व्रतैरेतैरपानुदेत् । सूर्मिं ज्वलन्तीं स्वाश्लिष्येन्मृत्युना स विशुध्यति ॥ स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ । नैर्ऋतीं दिशमातिष्ठेदानिपातादजिह्मगः ॥ प्राजापत्यं चरेत्कृच्छ्रमब्दमेकं समाहितः । चान्द्रायणं वा त्रीन्मासानभ्यसेन्नियतेन्द्रियः ॥ एभिस्तु संवसेद्यो वै वत्सरं सोपि तत्समः । **आपस्तम्बश्च**-गुरुतल्पगामी सवृषणं शिश्नं परिवास्याञ्जलावाधाय दक्षिणां दिशमनावृत्तं व्रजेत । ज्वलितां वा सूर्मिं परिष्वज्य समाप्नुयात्ततः शुद्धो भवतीति । अथ महापातकसमानमाहतुर्मनुयाज्ञवल्क्यौ-गुरूणामभ्यधिक्षेपो वेदनिन्दासुहृद्वधः । ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् ॥ गुरोराक्षेपणं निन्दा वेदस्य सुहृदो वधः । ब्रह्महत्यासमं विद्यादिति वेदविदो विदुः ॥ **गौतमः**-पक्षे विवाहकाले च अन्यस्मिन् धर्मसंकटे । विघ्नमाचरते यस्तु तमाहुर्ब्रह्मघातुकम् ॥ ज्योतिषं व्यवहारं च प्रायश्चित्तं चिकित्सकम् । विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातुकम् ॥ **शातातपः**-संरुद्धो ब्राह्मणो दृष्ट्वा स्पर्धमानो परस्परम् । अनिवार्य च यो गच्छेत्तमाहुर्ब्रह्मघातुकम् ॥ मर्मोद्घाटं ताडनं च दूषणं तर्जनं तथा । त्वंकृत्य ब्राह्मणं ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥ **योगीश्वरः**-निषिद्धभक्षणं जैह्म्यमनृतं च सभान्तरे । रजस्वलामुखास्वादः सुरापानसमं भवेत् ॥ **विष्णुः**-स्वार्थं च धनार्थं च क्षेत्रदारार्थमेव च । यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम्॥क्रोधाद्भयाद्विवादाद्वा ब्राह्मणानां च मूढधीः। अवमानं च यः कुर्यात्तमाहुर्ब्रह्मघातकम् ॥ अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा। निक्षेपस्य च सर्वं हि सुवर्णस्तेयसंमितम् ॥ ब्रह्मस्वं विस्मृतीकृत्य यो हरेत नराधमः। स्वर्णस्तेयसमं प्राह माण्डव्यमुनिसत्तमः ॥ **उशनाः**-गुरूणां भार्यया सार्धं भगिन्या मातुरेव च । महर्षेहास्यशक्यं हि गुरुतल्पसमं भवेत् ॥ पितुः स्वसारं श्वशुरीं जायां वा मातुलस्य च । मातुः सपत्नीं भगिनीमाचार्यतनयां तथा॥ आचार्यपत्नीं तनयां गच्छंस्तु गुरुतल्पगः । **संवतः**-गायत्र्यास्तु जपेत्कोटिं ब्रह्महत्यां व्यपोहति । लक्षाशीतिं जपेद्यस्तु सुरापानात्प्रमुच्यते ॥ पुनाति हेमहर्तारं गायत्र्या लक्षसप्ततिः । गायत्र्याः षष्टिभिर्लक्षैर्मुच्यते गुरुतल्पगः ॥ **संवर्तः**-मण्डलं पावमानीभिर्जपेत्पक्षं हविष्यभुक् । नाशयेद्ब्रह्महत्यां ॥ वसिष्ठस्य व्रपस्तया ॥ **आश्वलायनः**-इन्द्रमिन्द्रमिदं सूक्तं मधुश्छन्दसमेव च । सुरापानात्प्रमुच्येत मासमेकं जपेद्बुधः ॥ **आपस्तम्बः**-षण्मासं पञ्चमासं वा नियतेन्द्रियमानसः । जप्त्वा तु पौरुषं सूक्तं मुच्यते सर्वपातकैः ॥ **यमस्मृतौ च**-रहस्यं चेद्रहः कुर्याद्दृष्टं चेद्दृष्टवत्तथा । मन्वादिभिः समाम्नातं तत्र यत्किल्बिषापहम् ॥ **वासिष्ठः**-संवत्सरेण पतति पतितेन समाचरन् । संवत्सरे तु संपूर्णे प्रायश्चित्तं समाचरेत् ॥ एकशय्यासनं पानं भाण्डं पक्वान्नमिश्रणम् । याजनाध्यापनाध्ययनात्पापं संक्रमते नृणाम् ॥ **पराशरश्च**-कृच्छ्रं देव्ययुतं चैव प्राणायामशतद्वयम् । पुण्यतीर्थेनार्द्रशिरःस्नानं द्वादशसंख्यया ॥ द्वियोजने तीर्थयात्रा कृच्छ्रमेकं प्रकल्पितम् । जन्मप्रभृति यत्किंचित्पातकं चोपपातकम् ॥ तावदावर्तयेत्कृ-

च्छ्रं यावदष्टगुणं भवेत् । **वसिष्ठः**—बाल्यात्प्रभृति यत्पापं पातकं चोपपातकम् । षडब्देनैव शुध्येत महतः पातकादृते ॥ आत्मनोर्थे प्रकुर्वीत प्रायश्चित्तमतः परम् । **बृहस्पतिः**—पतिव्रता च रोगी च वृद्धश्चैव विशेषतः । अकामकृतपापे च प्रायश्चित्तार्थमर्हति ॥ उपपातकमाह **योगीश्वरः**—गोवधो व्रात्यता स्तेयमृणानां चापनिक्रिया । अनाहिताग्निताऽपण्यविक्रयः परिवेदनम् ॥ भृतकाध्ययनादानं भृतकाध्यापनं तथा । परवित्तं पारदार्यं वार्धुष्यं लवणक्रयः ॥ स्त्रीशूद्रविट्क्षत्रवधो निन्दितान्नेन जीवनम् । नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ॥ धान्यकुप्यपशुस्तेयमयाज्यानां च याजनम् । पितृमातृसुतात्यागस्तटाकारामविक्रयः ॥ कन्याया दूषणं चैव परिविन्दिकयाजनम् । कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ॥ आत्मनोर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम् । तथैवानाश्रमे वासो परान्नपरिपुष्टता ॥ असच्छास्त्राधिगमनमाकरेष्वधिकारिका । भार्याया विक्रयश्चैषामेकैकमुपपातकम् ॥ **मनुश्च**—अनृतं स्वसमुत्कर्षे राजगामि च पैशुनम् । गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः । गर्हितानद्ययोर्जग्धिः सुरापानसमानि षट् ॥ निक्षेपस्यापहरणं नराश्वरजतस्य च । भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम् ॥ रेतःसेकं स्वयोनीषु कुमारीष्वन्त्यजासु च । सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥ गोवधो याज्यसंयाजः पारदार्यात्मविक्रयौ । गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च ॥ परिवित्ततानुजेन परिवेदनमेव च । तयोर्दानं च कन्यायास्तयोरेव च याजनम् ॥ कन्याया दूषणं चैव वार्धुष्यं व्रतलोपनम् । तटाकारामदाराणामपत्यस्य च विक्रयः ॥ व्रात्यता बान्धवत्यागो भृत्याध्यापनमेव च । भृताच्चाध्ययनादानमपण्यानां च विक्रयः ॥ सर्वाकरेष्वधीकारो महायन्त्रप्रवर्तनम् । हिंस्रौषधीनामुपाजीवोभिचारो मूलकर्म च ॥ इन्धनार्थमशुष्काणां द्रुमाणामवपातनम् । आत्मार्थं च क्रियारम्भो निन्दितान्नादनं तथा ॥ अनाहिताग्निता स्तेयमृणानां चानपक्रिया । असच्छास्त्राधिगमनं कौटिल्यं व्यसनक्रिया ॥ धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणम् । स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यं चोपपातकम् ॥ अथ धेनुवधे प्रतीकारमाह तत्र **संवर्तपराशरौ**—कूपे तु पातिते कृच्छ्रं पापाणे तु त्रयं चरेत् । शस्त्रे विंशतिकृच्छ्राणि षष्ठ्यां पञ्चदशैव तु ॥ अन्योन्यं बन्धनं कृत्वाप्यतिकृच्छ्रं समाचरेत् । नदीतरणे तु कृच्छ्रं स्यादग्निदाहेष्टकृच्छ्रकम् ॥ शकटादतिकृच्छ्रं च तप्तकृच्छ्रत्रयं चरेत् । सर्वेषां वपनं कृत्वा गां दद्यात्तु पयस्विनीम्॥ **मनुः**—तैलभेषजपाने तु औषधार्थं प्रकल्पिते । विपत्तेलेन गर्भाणां प्रमृते नास्ति पातकम् ॥ अतिबालामतिकृशामतिवृद्धां च रोगिणीम् । हत्वा पूर्वविधानेन चरेच्चान्द्रायणं द्विजः॥ एकवर्षे हते वत्से कृच्छ्रपादो विधीयते । अबुद्धिपूर्वके स स्यात्प्रमृते नास्ति पातकम् ॥ अग्निविद्युद्विपन्नानां प्रमृते नास्ति पातकम् । यन्त्रिता गौश्चिकित्सार्थमूढगर्भातिपातने ॥ यत्ने कृते विपत्तिश्चेत्प्रायश्चित्तं समाचरेत्। गवां च पर्वतारोहे नद्युत्तारे तथैव च॥ प्रायश्चित्तं न कुर्वन्ति द्विजा वेदपारायणाः। **योगीश्वरः**—गोघ्नः सौम्यत्रयं कृत्वा कृच्छ्रं वा नवमासिकम्।गोमूत्रयावकाहारस्त्रिभिर्मासैर्विशुध्यति॥ **संवर्तः**—क्षत्रियस्य वधं कृत्वा चरेत्संवत्सरत्रयम्। वैश्यस्या-

पि वधं कृत्वा अब्दं कृच्छ्रं समाचरेत्॥ शूद्रस्य तु वधं कृत्वा अब्दार्धं कृच्छ्रमाचरेत्। प्रकृतेस्तु वधं कृत्वा षण्मासं कृच्छ्रमाचरेत्॥हस्तिनं तुरगं छागमहिषोष्ट्रकपींस्तथा।रोहिणीं चमरीं हत्वा चरेच्चान्द्रायणत्रयम्॥ अजाविकौ खरं श्वानं शृगालं सूकरं तथा। मार्जारं शशकं हत्वा प्राजापत्येन शुध्यति॥ प्रमापणात्प्राणभृतां कुर्यात्तत्प्रतिरूपकम्। तस्यानुरूपं मूल्यं वा कुर्यादित्यब्रवीन्मनुः॥ **पराशरदक्षौ** च—सिंहव्याघ्रवृकादीनां गृध्राणां हननं द्विजः। सर्वेषां पक्षिणां कृत्वा पादकृच्छ्रं समाचरेत्॥ अनस्थि ब्राह्मणो हत्वा प्राणायामेन शुध्यति। **मनुश्च**—अनुमन्ता विशसिता नियन्ता क्रयविक्रयी। संस्कर्ता चोपहर्ता च खादकश्चेति घातुकः॥ **योगीश्वरः**—वसेत्स नरके घोरे दिनानि पशुरोमभिः। संमितानि दुराचारो यो हन्त्यविधिना पशून्॥ **संवर्तः**—व्रतस्थां विधवां नारीं रतश्चेन्मुनयोऽब्रुवन्। ब्रह्मचारी स्त्रियं गत्वा अवकीर्णिव्रतं चरेत्॥ अकामतः स्कन्दने च स्नानं कुर्यात्सितासिते। **पराशरः**—गृहस्थः कामतः कृत्वा रेतसः स्खलनं यदि। सहस्रं तु जपेद्देव्याः प्राणायामैस्त्रिभिः सह॥ **गौतमश्च**—सकृच्छूद्रीं द्विजो गत्वा चरेत्कृच्छ्राणि विंशतिम्। तथैव कुर्यात्कृच्छ्राणि वृषलीसहभोजने॥ यः करोत्येकरात्रेण वृषलीसहभोजनम्। सदा सूतकिनस्तस्य ब्रह्महत्या पदे पदे॥ मदमोहेन यः शूद्र्यां पुत्रमुत्पादयेद्द्विजः। यावद्गर्भः पतेद्भूमौ तावत्तिष्ठेत्सुदारुणे॥ **योगीश्वरः**—अम्बष्ठो ब्राह्मणीं गत्वा प्राजापत्यद्वयं चरेत्। चण्डालीगमने विप्रः प्राजापत्याब्दकं चरेत्॥ रजकश्चर्मकारश्च नटो बुरुड एव च। कैवर्तमेदभिल्लाश्च सप्तैते चान्त्यजातयः॥ नटीं शैलूषकीं चैव रजकीं वेणुजीविनीम्। एता गत्वा नरो मोहात् षष्टिकृच्छ्रं समाचरेत्॥ **पराशरः**—मातरं यदि वा गच्छेत्स्वसुतां भगिनीमपि। एतास्तु कामतः सोऽपि आत्ममेढ्रं निकृन्तयेत्॥ अकामतस्तु यो गत्वा कुर्याच्चान्द्रायणद्वयम्। दशगोदक्षिणां दद्याच्छुद्धिं पाराशरोऽब्रवीत्॥ मातुलानीं पितृव्यस्य भार्यां च स्वसुतस्य च। गुरुपत्नीं स्वसारं च भ्रातृभार्यां तथैव च॥अज्ञानाद्गच्छति ज्ञानात्सारसीं तु स गच्छति। चण्डालीं वा श्वपाकीं वा अनुगच्छति यो द्विजः॥ त्रिरात्रमुपवासित्वा विप्राणामनुशासनात्। सशिखं वपनं कृत्वा प्राजापत्यद्वयं चरेत्॥ गोद्वयं दक्षिणां दद्याच्छुद्धिं पाराशरोऽब्रवीत्। पुनरपि **स एवाह**—क्षत्रियो वापि वैश्यो वा चण्डालीं गच्छतो यदि। प्राजापत्यद्वयं कुर्याद्दद्याद्गोमिथुनद्वयम्॥ श्वपाकीं वाथ चण्डालीं शूद्रो वा यदि गच्छति। प्राजापत्यं चरेत्कृच्छ्रं चतुर्गोमिथुनं ददत्॥ मातरं यदि गच्छेत्तु स्वसुतां भगिनीं तथा। एतास्तु मोहतो गत्वा त्रीणि कृच्छ्राणि संचरेत्॥ चान्द्रायणत्रयं कुर्याच्छिश्नच्छेदेन शुध्यति। मातृष्वसृगमे चैवमात्ममेढ्रनिकर्तनम्॥ अज्ञानेन तु यो गच्छेत् कुर्याच्चान्द्रायणद्वयम्। दश गोमिथुनं दद्याच्छुद्धिं पाराशरोऽब्रवीत्॥ पितृदारान् समारुह्य मातुराप्तां तु भ्रातृजाम्॥ गुरुपत्नीं स्नुषां चैव भ्रातृभार्यां तथैव च॥ मातुलानीं सगोत्रां च प्राजापत्यत्रयं चरेत्। गोद्वयं दक्षिणां दद्याच्छुध्यते नात्र संशयः॥ पशुवेश्याभिगमने महिष्युष्ट्रीकपीं तथा। खरीं च सूकरीं गत्वा प्राजापत्यं समाचरेत्॥ गोगामी च त्रिरात्रेण गामेकां ब्राह्मणे ददत्। महिष्युष्ट्रीखरीगामी त्वहोरात्रेण शुध्यति॥ डामरे समरे वापि दुर्भिक्षे वा जनक्षये।

बन्दीग्राहे भयार्तां च सदा स्वस्त्रीं निरीक्षयेत् ॥ अङ्गारसदृशी नारी घृतकुम्भसमो नरः । तत्समीपे न वस्तव्यं नराणां चञ्चलं मनः ॥ मात्रा स्वस्रा दुहित्रा वा भिन्नासनगतो भवेत् । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ नरो गोगमनं कृत्वा चरेच्चान्द्रायणव्रतम् । पतितागमने विप्रश्चरेच्चान्द्रायणद्वयम् ॥ **गोबिलः**–उदक्यागमने विप्रः अष्टकृच्छ्रं समाचरेत् । अज्ञानात्स्पर्शने विप्रः सचेलस्नानमाचरेत् ॥ प्रथमेहनि चण्डाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ता चतुर्थेहनि शुध्यति ॥ शुद्धा भर्तुश्चतुर्थेह्नि स्नानेन स्त्री रजस्वला । दैवे कर्मणि पित्र्ये च पञ्चमेहनि शुध्यति ॥ **याज्ञवल्क्यः**–व्यभिचारे ऋतौ शुद्धा गर्भे त्यागो विधीयते । **पराशरः**–व्यभिचारेण या दुष्टा प्रायश्चित्तीयते तु सा । त्यागो गर्भे समुद्दिष्टो न तां संभापयेत्क्वचित् ॥ **विष्णुश्च**–दिवाभिगमने विप्रः स्नानं चैवोपवासनम् । नन्दायां कृच्छ्रपादः स्यात्प्राजापत्यं तु पर्वणि ॥ **योगीश्वरः**–विप्रदण्डोद्यमे कृच्छ्रमतिकृच्छ्रं निपातने । अतिकृच्छ्रमसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते ॥ **वसिष्ठः**–मनसा चिन्तितं पापं पश्चात्तापेन शुध्यति । वचसा चेष्टितं पापं जपहोमादिभिर्हरेत् ॥ बाहुभिस्तु कृतं पापं ब्रह्महत्यादिसंभवम् ॥ प्रायश्चित्ती भवेत्सर्वं कृच्छ्रचान्द्रायणादिभिः ॥ **संवर्तः**–यथातोय(वायु)पलो वह्निर्देहत्यपि च वल्व(व)जान् । एवं दहति वेदज्ञः कर्मदोषं स्वमात्मनः ॥ अकामतः कृतं पापं वेदाभ्यासेन शुध्यति । कामतस्तु कृतं पापं प्रायश्चित्तैः पृथक्पृथक् ॥ **पराशरः**–पथि चण्डालकं दृष्ट्वा कुर्यात्सूर्यावलोकनम् । यदि संभापणं चैव सावित्रीं तु सकृज्जपेत् ॥ **विष्णुश्च**–स्पृष्ट्वा चण्डालपतितसंकरान्त्यजवायसान् । पात्रादि क्षालयेत्स्पृष्टं पश्चात्कृच्छ्रं समाचरेत् ॥ द्विजश्चण्डालभाण्डस्थसलिलं पिबते यदि । षण्मासानाचरेत्कृच्छ्रं पञ्चगव्यं ततः पिबेत् ॥ तस्यान्नमत्ति यो विप्रो द्विगुणं व्रतमाचरेत् । **मनुः**–गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा । सुराया घ्राणमात्रेण प्राणायामत्रयं चरेत् ॥ अनाश्रमी न तिष्ठेत क्षणमेकमपि द्विजः ॥ तिष्ठते यदि मोहेन तत्कृच्छ्रान् षडाचरेत् ॥ प्राजापत्यत्रयं कुर्याद्वत्सरं तु निराकृतौ । औषधं पथ्यमाहारं दद्याद्गोब्राह्मणेषु च ॥ मृतो वाप्यमृतो वापि प्रायश्चित्तं न विद्यते । **कात्यायनः**–सूतकान्नं नवश्राद्धं मासिकान्नं तथैव च । ब्रह्मचारी तु योऽश्नीयात्पादकृच्छ्रेण शुध्यति ॥ दुराचारस्य विप्रस्य निषिद्धाचरणस्य च । अन्नं भुक्त्वा द्विजः कुर्याद्दिनमेकमभोजनम् ॥ **पराशरश्च**–सदाचारस्य विप्रस्य तथा वेदान्तवेदिनः । भुक्त्वान्नं मुच्यते पापादहोरात्रान्तरान्नरः ॥ **अंगिराः**–अज्ञानाद्ब्राह्मणो भुंक्ते शूद्रस्यान्नं य आतुरः । प्रायश्चित्तं भवेत्तस्य षण्मासान् कृच्छ्रमाचरेत् ॥ **विष्णुः**–शूद्रहस्तेन योऽश्नीयात्पानीयं वा पिबेत्क्वचित् । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ काले नवोदकं शुद्धं न पिबेदहरेव तत् । अकाले सप्तरात्रं तु न पिबेच्च नवोदकम् ॥ **पराशरः**–अज्ञानाद्यदि शूद्रान्नं यो भुंक्ते हि द्विजाधमः । तस्य पापविशुध्यर्थं प्राजापत्यद्वयं चरेत् ॥ श्वकाकोच्छिष्टगोच्छिष्टकृमिकीटादिभक्षणे । अमेध्यानां च सर्वेषां प्राजापत्यव्रतं चरेत् ॥ **हारीतः**– क्षीरं वा यदि वा तैलं तक्रमाज्यमधूनि च । एतेषां विक्रये विप्रो रौरवं नरकं व्रजेत् ॥ पूगीफलं मातुलुङ्गं द्राक्षां खर्जूरमेव च । एते-

पां पादकृच्छ्रं स्याज्जम्बीरादेस्तथैव च ॥ कस्तूर्येलादिगन्धानां प्राजापत्यं समाचरेत्। कर्पूरादेस्तदर्धं स्यात्पादं हिङ्ग्वादिविक्रये ॥ हेमरूप्यादिलोहानां कार्पासस्य तथैव च ॥ विक्रयी चित्रवस्त्राणां प्राजापत्यं समाचरेत् ॥ **पराशरः**–गोविक्रयं द्विजः कुर्याल्लोभेन यदि मोहितः। प्राजापत्यं प्रकुर्वीत प्रजापतिवचो यथा ॥ **संवर्त्तः**–शुनः पुष्पवती स्पृष्ट्वा पुष्पवत्यान्यया तथा। शेषाण्यहान्युपवसेत्स्नात्वा कृच्छ्रेण शुध्यति ॥ रजस्वला यदा नारी भुंक्ते वापि द्विजोत्तमः। चण्डालादिवचः श्रुत्वा स्नात्वा कृच्छ्रं समाचरेत् ॥ अशक्तौ काञ्चनं दद्याद्विप्रेभ्यो वापि भोजनम्। चण्डालसूतिकोदक्यापतितान्दूरतस्त्यजेत् ॥ अतः सन्निधिमात्रेण सचेलः स्नानमाचरेत्। स्नात्वावलोकयेत्सूर्यमज्ञानात्तु स्पृशेद्यदि ॥ **संवर्त्तः**–संकटे विषमस्थाने दुर्गे तु परिखे तथा। भद्रपत्तनमार्गेषु यथा शूद्रस्तथैव सः ॥ भवेदिति शेषः। **मनुः**–हुंकारं ब्राह्मणस्योक्त्वा त्वंकारेण गरीयसः। स्नात्वानश्नन्नहःशेषमभिवाद्य प्रसादयेत् ॥ **अंगिराः**–प्रायश्चित्तं तु राज्ञां च कामतोकामतोपि वा। तदर्धं भवति स्त्रीणामशेषेष्वपि पापिषु॥**दक्षः**–इमांश्च विधिवत् दृष्ट्वा पापं नैव समाचरेत्। यः करोति नरः पापं नरकेषु स मज्जति ॥ **हारीतः**–न कर्तव्यं न कर्तव्यं पापं हि स्वर्गमिच्छता। कर्तव्यं सर्वदा विप्र पापं नरकमिच्छता ॥ तस्मात्सर्वप्रयत्नेन पापं नैव समाचरेत्। **यमः**–प्रायश्चित्तमिदं प्रोक्तं कर्तव्यं पापभीरुणा। न कर्तव्यमिदं विप्रैः सर्वदा पापकारकैः ॥ **पराशरः**–सर्वेषामेव पापानां प्रायश्चित्तमिदं शुभम्। गायत्र्याः शतलक्षं तु ब्रह्महत्यापनोदनम् ॥ इति सर्वमत्र वक्तव्यं विज्ञानेश्वरमाधवीयस्मृतिचन्द्रिकाग्रन्थेषु स्पष्टं द्रष्टव्यम्। अत्र विस्तरभयान्न लिख्यते ॥

## ❋ धनभेदनिरूपणम् ❋

इदानीं प्रकृतमुच्यते–धने तु द्विविधे ज्ञेये दैवमानुषभेदतः। मानुषान्नरकं याति दैवात्स्वर्गमवाप्नुयात् ॥ तस्माद्दैवं हि कर्तव्यं सर्वदा मनुजेश्वर। मानुषं हि न कर्तव्यं सर्वदा पापकारकम् ॥ तस्मात्सर्वप्रयत्नेन मानुषं न समाचरेत्। अथ दैववित्तविषये किंचिदुच्यते कुण्डधारकोपाख्यानशुकानुशासनादिष्वितिहाससमुच्चये च–मानुषं मुनयो वित्तमर्थमाहुरशाश्वतम्। दैवमाहुस्तथा वित्तं धर्मं दिव्यसुखप्रदम् ॥ नार्थलोभान्न च स्नेहान्न क्रोधान्न च मत्सरात्। न कामान्न भयाद्वापि धर्मं प्राज्ञः परित्यजेत् ॥ अर्थहीनोपि धर्मात्मा स्वर्गं गच्छति मानवः। अर्थवान् धर्महीनस्तु नरकं प्रतिपद्यते ॥ अभावी न भवत्यर्थो नाशो नास्त्येव भाविनः। एतद्विदन्तो विबुधा क्लिश्यन्ते नैव मोहिताः ॥ न मन्त्रबलवीर्येण प्रज्ञया पौरुषेण वा। अलभ्यं लभते मर्त्यस्तत्र का परिदेवना ॥ सर्व एव हि लोकोयं यदि स्याद्धर्मतत्परः। ततो निरन्तरः स्वर्गो भवेच्छून्या च मेदिनी ॥ श्रद्धया साध्यते धर्मो महद्भिर्नार्थसंचयैः। अकिंचना हि मुनयः श्रद्धाधर्माद्दिवं गताः॥ धर्मार्थकाममोक्षाणां चतुर्णामिह साधनम्। विद्या तपो बलं शौर्यं कुलीनत्वमरोगता ॥ राज्यं धर्मश्च मोक्षश्च सर्वं धर्मादवाप्यते। नामुत्र हि सहायार्थं पिता माता च तिष्ठतः ॥ न पुत्रदारा न ज्ञातिर्धर्मस्तिष्ठति केव-

लम् । **नारदः**—पुत्रदारकुटुम्बानि शरीरं संचयाश्च ये । पारक्यमध्रुवं सर्वं स्वन्ते सुकृतदुष्कृते ॥ न हि वेदास्त्वधीताश्च न शास्त्राणि श्रुतान्यपि । तत्र गच्छन्ति यत्रासौ धर्म एकोनुगच्छति ॥ एको हि जायते जन्तुरेक एव विपद्यते । एकोनुभुंक्ते सुकृतमेक एव च दुष्कृतम् ॥ मृतं शरीरमुत्सृज्य लोष्टकाष्ठसमं क्षितौ । विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥ कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा । तस्मात्सर्वात्मना धर्मं तात नित्यं समाचर ॥ मा धर्मविमुखः प्रेत्य तमस्यन्वे पतिष्यसि । को जानीते कदा कस्य मृत्युकालो भविष्यति ॥ श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् । न हि प्रतीक्षते मृत्युः कृतं वास्य न वा कृतम् ॥ न व्याधयो नच यमः श्रेयःप्राप्तिं प्रतीक्षते । यावदेव भवेत्कालस्तावच्छ्रेयः समाचरेत्॥इहैव नरकव्याधेश्चिकित्सां न करोति चेत । गत्वा निरौषधं देशं सरुजः किं करिष्यति । मम मित्रमिदं मम पुत्रोसौ मम जननीयमिति प्रलपन्तः । सहसा यमसादनमुग्रं सर्वमिदं विरहय्य भजन्ते ॥ भार्या मे पुत्रो मे विभवो मे स्निग्धबन्धुसुहृदो मे । एवं वदन्तमेनं पशुमिव मृत्युर्नरं नयति ॥ इदं कृत्यमिदं कार्यमिदमन्यत्कृताकृतम् । एवमीहासमायुक्तं कृतान्तः कुरुते वशे ॥ प्रशस्तानि निषेवस्व स्वकर्माणि प्रयत्नतः । एतावद्धर्मसर्वस्वं निन्दितानि विवर्जय ॥ नास्ति धर्मसमो बन्धुर्नास्ति धर्मसमः सुहृत् । नास्ति धर्मसमो लाभो नास्ति धर्मसमा गतिः ॥ अत एव धर्मार्थयोर्युगपदुपस्थितौ धर्ममनादृत्यार्थग्रहणे ब्रह्महत्याव्रतमाहापस्तम्बः—" धर्मार्थयोः सन्निपाते अर्थग्राहिण एतदेव " इति प्रायश्चित्तस्यातिगुरुत्वात् उत्कोचग्रहणेन महानर्थकरकूटसाक्ष्यराजगामिपैशुन्यादिविषयम् । **याज्ञवल्क्यः**—तपस्तत्वासृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये । तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥ **मनुः**—द्विजातीनामयं देहो नोपभोगाय कल्पते । इह क्लेशाय महते प्रेत्यानन्तसुखाय च ॥ **शाण्डिल्यः**—गृहस्थ एव सर्वेभ्यो धर्मं ब्रूयान्महामतिः । परिव्राडपि वा ब्रूयात्सर्वश्रेष्ठो गृहाश्रमी ॥ **समुच्चये**—ब्रह्मचारी गृहस्थो वा वानप्रस्थोथ भिक्षुकः । यथोक्तकारिणः सर्वे गच्छन्ति परमां गतिम् ॥

## ❋ द्रव्यशुद्धिविधिः ❋

अथ द्रव्यशुद्धिरुच्यते तत्र **पराशरः**—अथातो द्रव्यशुद्धिस्तु पराशरवचो यथा । दारुपात्राणि सर्वाणि लोहेनोल्लिखिताः शुचिः ॥ उल्लिखिताः उल्लिखितानि, एवं कृते शुचिः शुद्धिरित्यर्थः । भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति । रजसा शुध्यते नारी चाविकं तु सदा शुचिः ॥ नदी वेगेन शुध्येत यत्रामेध्यं न लभ्यते । भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते ॥ सुरामूत्रपुरीषैस्तु शुध्यते तापलेखनैः। अयसा चायसं पात्रं दीप्तं चाग्नौ प्रतापयेत् ॥ दन्तः शुक्तिस्तथा शृङ्गं रौप्यं सौवर्णभाजनम् । मणिपात्राणि शंखश्च तेषां प्रक्षालनाज्जलैः ॥ इदं निर्लेपविषयम् । सलेपे तु-गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च । शुध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि च ॥ क्षारैः लवणसहितैस्तोयैरित्यर्थः । पाषाणानि पुनर्घृष्येच्छुद्धिरेषामुदाहृता ॥ मृद्भाण्डं दहनाच्छुध्येद्दव्याणा मार्जनाच्छुचिः । मार्जनं

दर्भैरुत्प्लावनम् । तन्तुवल्कलचीराणां वस्त्रं कार्पासक्षौमकम् । ऊर्णानेत्रपटानां च प्रोक्षणं तु विधीयते ॥ तूलिकामुपधानं च चित्ररक्ताम्बराणि च । शोषयित्वातपेनैव प्रोक्षणात्तु शुचीनि वै ॥ वेणूपस्करशूर्पाणां शणस्य फलचर्मणोः । तृणकाष्ठादिरज्जूनामुदकाभ्युक्षणाच्छुचिः ॥ अंगारेण भवेच्छुद्धिस्ताम्राणां कांचनस्य च । जलशौचं च वस्त्राणां परित्यागेन मृण्मयम्॥ एतदुच्छिष्टस्पृष्टिविषयम् । कुसुम्भं गुडकार्पासलवणं तैलसर्पिषी । द्वारे कुर्वीत धान्यादि गृहे दद्याद्धुताशनम् ॥ रजकश्चर्मकारश्च लुब्धको वेणुपुल्कसः । चातुर्वर्ण्येषु गेहेषु नाविज्ञातेषु निष्कृतिः ॥ ज्ञातेषु निष्कृतिं कुर्यात्पूर्वोक्तस्यार्धमेव च । गृहस्याभ्यन्तरं गच्छेच्चण्डालो यस्य कस्य चित् ॥ तस्माद्गेहाद्विनिःसृत्य मृद्भाण्डानि विसर्जयेत् । रसपूर्णं तु मृद्भाण्डं न त्यजेत्स्पर्शवर्जितम् ॥ गोमयैर्मिश्रितैस्तोयैर्मार्जयीत गृहान्तरम् । श्रितं द्रोणाढकस्यान्नं काकश्वानोपघातितम् ॥ केनेदं शुध्यते चान्नं ब्राह्मणेभ्यो निवेदयेत् । प्रस्थद्वात्रिंशतिर्द्रोणः स्मृतो द्विप्रस्थ आढकः ॥ ततो द्रोणाढकस्यान्नं शुद्धमेवेत्युदाहृतम् । काकश्वानावलीढं तु गवाघ्रातं खरेण च ॥ स्वल्पमन्नं त्यजेद्विद्वान् शुद्धं द्रोणाढकं तु तत् । ग्रासमुद्धृत्य तद्भोज्यं यच्च लालाहतं भवेत् ॥ सुवर्णोदकमभ्युक्ष्य वह्निना चोपतापयेत् । हुताशनोपसंस्पृष्टं सुवर्णसलिलेन वा ॥ विप्राणां ब्रह्मघोषेण शुद्धिमाप्नोति तत्क्षणात् । एतदत्यन्तापद्विषयम् । स एव—मक्षिकाकीटमार्जारपतङ्गकृमिदर्दुराः । मेध्यामेध्ये स्पृशन्तोपि नोच्छिष्टं मनुरब्रवीत् ॥ बालैर्नकुलमार्जारैरन्नमुच्छिष्यते यदि । तिलदर्भोदकैः प्रोक्ष्य शुध्यते नात्र संशयः ॥ इति पराशरवचनानि । याज्ञवल्क्यः—सौवर्णरजताब्जानामूर्ध्वपात्रग्रहाश्मनाम् । शाकरज्जुमूलफलवासोविदलचर्मणाम् ॥ पात्राणां चमसानां च वारिणा शुद्धिरुच्यते । अब्जं मुक्ताफलशङ्खशुक्त्यादि, ऊर्ध्वपात्रं यज्ञीयोलूखलादि, ग्रहाः षोडशीप्रभृतयः, रज्जूः बल्वजादिनिर्मिता, विदलं वैणवादि, चर्म अजादीनाम् । विदलचर्मणोर्ग्रहणं तद्विकाराणां छत्रचरत्रशूर्पपात्रादीनामुपलक्षणम् । पात्राणि प्रोक्षणपात्रादीनि, एतेषामुच्छिष्टस्पर्शमात्रे वारिणा प्रक्षालनेन शुद्धिः । सलेपे—चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा । शुध्यन्तीति शेषः । चरुः चरुस्थाली, सस्नेहपात्राणि प्राशित्रहरणादीनि । अत्र मनुः—निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति । अब्जमश्ममयं चैव राजतं चानुपस्कृतम् ॥ तैजसानां मणीनां च सर्वस्याश्ममयस्य च । भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः ॥ अश्ममयम्—दृषदादि, एतेषां सलेपानां भस्मना अद्भिर्वा शुद्धिः । काकादिमुखावलातेषु " कृष्णशकुनिमुखावमृष्टं निर्लिखेच्छ्वापदमुखावमृष्टं पात्रं न प्रयुञ्ज्येत " इति विज्ञानेश्वरेणोदाहृतं स्मृत्यन्तरं द्रष्टव्यम् । याज्ञवल्क्यः—स्फ्यशूर्पाजिनधान्यानां मुसलोलूखलानसाम् । स्फ्यः यज्ञाङ्गम्, अनः शकटम्, एषामुष्णेन वारिणा शुद्धिरिति च । स्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा इति पूर्वेण सम्बन्धः । प्रोक्षणं संहतानां च बहूनां धान्यवाससाम् । उक्तशुद्धीनां धान्यवासःप्रभृतीनां बहूनां राशीकृतानां प्रोक्षणेनैव शुद्धिः । अत्र च विज्ञानेश्वरः—यदा धान्यादीनि वस्त्रादीनि वा राशीकृतानि तत्र चण्डालादिस्पृष्टान्यल्पानि अस्पृष्टानि च बहूनि, स्पृष्टानामुक्तैव शुद्धिः,

इतरेषां प्रोक्षणम् । तथा स्मृत्यन्तरम्–वस्त्रधान्यादिराशीनामेकदेशस्य दूषणे । तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हति ॥ इति । स्पृष्टानां बहुत्वे, मनुः–अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् । प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते ॥ एवं स्पृष्टास्पृष्टसमत्वेपि प्रक्षालनमेव, अधिकेपि प्रक्षालनमेव ॥ तक्षणं दारुशृङ्गाणां गोवालैः फलसंभुवाम् । मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि ॥ दारूणाम्, मेषमहिषादिशृङ्गाणाम्, करिवराहाद्यस्थ्नाम्, दन्तानां चोच्छिष्टस्नेहादिलिप्तानाम्, मूत्रस्मोदकादिभिरनपगतगन्धलेपानाम्, तक्षणम्–तावन्मात्रावयवापनयनं शुद्धिः । फलसंभुवाम्–बिल्वालाबुनारिकेलादिफलजानां पात्राणाम्, गोवालैरुद्घर्षणं शुद्धिः, स्रुक्स्रुवादीनां यज्ञपात्राणां दक्षिणेन हस्तेन दर्भैर्दशापवित्रेण वा मार्जनं शुद्धिः । इदं पूर्वोक्तशौचानन्तरं कर्तव्यम् । एवं केषांचित्सलेपानां लेपाकर्षणविशेषहेतुनाह–सोष्णैरुदकगोमूत्रैः शुध्यत्याविककौशिकम् । सश्रीफलैरंशुपट्टं सारिष्टैः कुतुपं तथा ॥ सगौरसर्षपैः क्षौमं पुनः पाकेन मृण्मयम् । आविकम् ऊर्णामयम्, कौशिकं कोशप्रभवम्, ऊषरमूत्रसहितेन गोमूत्रेणोदकेन वा शुध्यति । अंशुपट्टादिकं, श्रीफलसहितैः प्रक्षालितं शुध्यति । अंशुपट्टं वल्कलतन्तुकृतम्, कुतुपः पार्वतीयच्छागरोमनिर्मितकम्बलम्, अरिष्टफलसहितैः फेनरहितैरुदकगोमूत्रैः शुध्यति । एवमुच्छिष्टस्नेहादियोगे । अल्पोपघाते तु प्रोक्षणादेव, क्षालनासहत्वात्, सर्वत्र द्रव्याविनाशेनैव शुद्धेरिष्टत्वात् । यथाह देवलः–और्णकौशेयकुतुपपट्टक्षौमदुकूलजाः । अल्पशौचा भवन्त्येते शोषणप्रोक्षणादिभिः ॥ तान्येवामेध्ययुक्तानि क्षालयेच्छोधनैः स्वकैः । धान्यकल्कैस्तु फलजै रसै रागानुगैरपि ॥ इति । और्णादिग्रहणं तदारब्धतूलिकादिप्राप्त्यर्थम् । अतस्तस्याल्पोपघातेनैव क्षालनं कार्यम् । तूलिकामुपधानं च पुष्परक्ताम्बरं तथा । शोषयित्वातपे किंचित्करैः संमार्जयेन्मुहुः ॥ पश्चाच्च वारिणा प्रोक्ष्य विनियुञ्जीत कर्मणि । तान्यप्यतिमलिनानि यथावत्परिशोधयेत् ॥ इति देवलस्मरणात् । कुङ्कुमकुसुम्भपुष्पग्रहणं हरिद्रादिरक्तद्रव्यस्य क्षालनासहस्य प्राप्त्यर्थम्, न माञ्जिष्ठादेः, तस्य क्षालनसहत्वात् । शङ्खेनाप्युक्तम्–रागद्रव्याणि प्रोक्षितानि शुचीनीति । गौरसर्षपसहितैरुदकगोमूत्रैः शुध्यति । क्षौमं क्षुमा अतसी तत्सूत्रनिर्मितम्, मृण्मयं घटादि, पुनः पाकेन शुध्यति । एतच्चोच्छिष्टस्पर्शे । चण्डालादिस्पर्शे तु त्याग एव । यथाह पराशरः–चण्डालाद्यैस्तु संस्पृष्टं धान्यं वस्त्रमथापि वा । प्रक्षालनेन शुध्येत परित्यागान्महीमयम् ॥ इति । कारुहस्तः शुचिः पण्यं भैक्षं योषिन्मुखं तथा । कारवः रजकचेलधावकसूपकाराद्याः, तेषां हस्तः शुचिः । शुचित्वं च तत्साध्ये कर्मणि वस्त्रधावनादौ सूतकादिसंभवेपि । पण्यम् आपणस्थद्रव्यं विक्रेयं व्रीह्यादि. अनेकक्रेतृजनहस्तपरिघट्टितमप्यप्रयतं न भवति, सूतकादिनिमित्ते च वणिजाम् । भिक्षाणां समूहो भैक्षम्, तद्ब्रह्मचर्यादिगतम् । अनाचान्तस्त्रीप्रदानाशुचिरथ्याक्रमणादिनापि न दुष्यति । तथा योषिन्मुखं संभोगकाले शुचि । वत्सः प्रस्रवने मेध्यः शकुनिः फलशातने । स्त्रियश्च रतिसंसर्गे श्वा मृगग्रहणे शुचिः ॥ इति स्मरणात् । कालोग्निः कर्म मृद्वायुर्मनो ज्ञानं तपो जलम् । पश्चात्तापो निराहारः सर्वेमी शुद्धिहे-

तवः ॥ अस्य विषयविभागमाह—अकार्यकारिणां दानं वेगो नद्यास्तु शुद्धिकृत् । शोध्यस्य मृच्च तोयं च संन्यासोथ द्विजन्मनाम् ॥ तपो वेदविदां क्षान्तिर्विदुषां वर्ष्मणो जलम् । जपः प्रच्छन्नपापानां मनसः सत्यमुच्यते ॥ भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनम् । क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥ इति । मनुश्च—क्षान्त्या शुध्यंति विद्वांसो दानेनाकार्यकारिणः । प्रच्छन्नपापा जप्येन तपसा वेदवित्तमाः ॥ अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति । विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥ बौधायनः—अद्भिः शुध्यन्ति गात्राणि बुद्धिर्ज्ञानेन शुध्यति । अहिंसया च भूतात्मा मनः सत्येन शुध्यति ॥ तैजसानामुच्छिष्टानां गोशकृन्मृद्भस्मभिः परिमार्जनमन्यतमेन वा ताम्ररजतसुवर्णानामम्लैरमत्राणां दहनेन दारवाणां तक्षणेन वैणवानां गोमयेन फलमयानां गोवालरज्ज्वा कृष्णाजिनानां बिल्वतण्डुलैः कुतुपानामरिष्टैरौर्णानामादित्येन क्षौमाणां गौरसर्षपकल्केन मृद्भिश्चैलानां चेलवच्चर्मणां तैजसवदुपलमणीनां दारुवदस्थ्नां क्षौमवच्छङ्खशृङ्गशुक्तिदन्तानां पयसा वा मूत्रपुरीषासृक्शुक्रकुणपस्पृष्टानां पूर्वोक्तानामन्यतमेन त्रिःसप्तकृत्वः परिमार्जनम्, अतैजसानामेवंभूतानामुत्सर्गो वचनात् । यज्ञे चमसपात्राणां न "न सोमेनोच्छिष्टा भवन्ति" इति श्रुतिः । कालोऽग्निर्मनसः शुद्धिरुदकाद्यनुलेपनम् । अविज्ञातं च भूतानां षड्विधं शौचमुच्यते ॥ नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम् । ब्रह्मचारिगतं भैक्षं नित्यं मेध्यमिति श्रुतिः ॥ आकराः शुचयः सर्वे वर्ज्जयित्वा सुराकरम् । अदूष्याः संतता धारा वातोद्धूताश्च रेणवः ॥ अमेध्येषु च ये वृक्षा रूढाः पुष्पफलोपगाः । तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च ॥ वृक्षग्रहणाद्वल्लीफलनिषेधः । आसनं शयनं वस्त्रं जायापत्यं कमण्डलुः । आत्मनः शुचिरेतानि परेषामशुचिर्भवेत् ॥ एतानि स्वीकर्त्तुः स्वस्य शुद्धानि, नान्येषामित्यर्थः । आसनं शयनं यानं नावः पथितृणानि च । चण्डालपतितस्पृष्टं मारुतेनैव शुध्यति ॥ त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् । अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते॥इत्येतदन्तं बौधायनीयम् । याज्ञवल्क्यः—त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः । भस्माद्भिः कांस्यलोहानां शुद्धिः प्लावो द्रवस्य तु ॥ त्रपुप्रभृतीनां क्षारोदकेन वारिणा चोपघातापेक्षया समस्तैर्व्यस्तैर्वा शुद्धिः कार्या, कांस्यलोहानां भस्मोदकेन. ताम्रग्रहणाद्रीतिकावृत्तलोहयोर्ग्रहणम्, एकयोनित्वा-त्,एतच्च ताम्रादीनामम्लोदकवारिभिः शुद्ध्यभिधानं न नियमार्थम् । मलसंयोगजं तज्जं यस्य येनोपहन्यते । तस्य तच्छोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत् ॥ इत्यविशेषस्मरणात् । अतो न ताम्रादेरुच्छिष्टोदकादिलेपस्यान्येनापगमसंभवे नियमेनाम्लोदकादिना शुद्धिः कार्या । अतएव मनुना सामान्येनोक्तम्—ताम्रायस्कांस्यरैप्याणां त्रपुणः सीसकस्य च । शौचं यथार्हं कर्त्तव्यं क्षाराम्लोदकवारिभिः ॥ इति । यत्तु—भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति । इति तत्ताम्रादेः शौचस्य परां काष्ठां दर्शयितुं, नान्यनिषेधार्थम् । यदा तूपघातातिशयः, तदा अम्लोदकानामावृत्तिः । गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च । शुध्यंति दशभिः क्षारैः श्वकाकोपहतानि च ॥ इति स्मरणात् । शुद्धिः प्लावो द्रवस्य त्विति द्रवद्रव्यस्य घृतादेः प्रस्थप्रमाणादधिकस्य,

श्वकाकाद्युपहतस्यामेध्यसंस्पृष्टस्य च प्लावः प्लावनं समानजातीयेन द्रवद्रव्येण भाण्डस्यातिपूरणम् यावन्निःसरणं शुद्धिरित्यभिधीयते। ततोल्पस्य त्यागः, बहुत्वमल्पत्वं च देशकालापेक्षया वेदितव्यम् । यथाह बोधायनः–देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत् ॥ कीटाद्युपहतस्य तूत्प्लवनमेव । यथाह मनुः–द्रव्याणां चैव सर्वेषां शुद्धिरुत्प्लवनं स्मृतम् । उत्प्लवनं चात्र वस्त्रान्तरिते पात्रे प्रक्षेपः, अन्यथा कीटाद्यपगमस्यासम्भवात् । शूद्रभाण्डस्थितस्य तु "मधूदके पयस्तद्विकाराश्च पात्रात्पात्रान्तरानयने शुद्धाः" इति गौतमस्मरणात्पात्रान्तरानयनाच्छुचिः । मधुदधिघृतादेः वर्णापसदहस्तात्प्राप्तस्य पात्रान्तरानयनं पुनः पचनं च कार्यम् । यथाह शंखः–अभ्यवहार्याणां घृतेनाभिघारितानां पुनः पचनम्, एवं स्नेहानां स्नेहवद्रसानामिति । एवं व्याचख्यौ विज्ञानेश्वरः । अतो भस्माद्भिः कांस्यवत्ताम्रस्यापि शुद्धिः । अम्लोदकैस्ताम्रवत्कांस्यस्यापीति सिद्धम् । अत्र पराशरः–काकश्वानावलीढं तु द्रोणान्नं न विवर्जयेत् । ग्रासमुद्धृत्य तन्मात्रं यच्च लालाहतं भवेत् ॥ हेमोदकेन चाभ्युक्षेद्राजतेनाम्बुनाथ वा । अग्निज्वालोपसंस्पर्शात्सुवर्णमधुसर्पिषाम् ॥ विप्राणां मन्त्रघोषेण पूतं भोज्यं च तद्भवेत् । एतदत्यन्तापद्विषयम् । देवलः–द्रव्याणां चैव पक्वानां लवणस्य गुडस्य च । नान्या शुद्धिः परित्यागाच्चण्डालस्पर्शने कृते ॥ बोधायनः–व्रीहयः प्रोक्षणादद्भिः शाकमूलफलानि च । तन्मात्रस्यापहाराद्वा निस्तुषीकरणेन वा ॥ अपहारः अपहृत्य त्यागः । पांसूपघातशङ्कायां संमृज्य प्रोक्षणाच्छुभम् । देवलः–दिवाकीर्त्यैस्तु संस्पृष्टं धान्यं मूलं फलानि च । प्रक्षालनेन शुध्येत परित्यागान्महीमयम्॥ प्रक्षालनेन संग्राह्यमिति वै लोकसंमतम् । विष्णुः–मृत्पिण्डतृणकाष्ठानां श्वभिश्चण्डालवायसैः । स्पर्शने विहितं शौचं सोमसूर्यांशुमारुतैः ॥ अंगिराः–शूद्राद्विप्रगृहायातं विप्रकृष्टं तथा शुचि । पात्रान्तरगतं ग्राह्यं शूद्रात्स्वगृहमागतम्॥ शाण्डिल्यः–घृतस्थाली विना सर्वं जलपूरान्नसंश्रयम्। कर्त्तव्यं दिवसे भाण्डं मारुतातपसेवितम् ॥ गृहोपकरणं सर्वं मुसलोलूखलादिकम् । प्रक्षालयेज्जगन्नाथयागोपकरणानि च ॥

## ❀ भूशुद्धिप्रकारः ❀

भूशुद्धिमाह याज्ञवल्क्यः–भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा । सेकादुल्लेखनाल्लेपाद् गृहं मार्जनलेपनात्॥ मार्जनं पांसुतृणादीनां प्रोत्सारणम्, दाहस्तृणकाष्ठाद्यैः, कालः यावता कालेन लेपादिक्षयो भवति तावान्, गोक्रमणं गवां पादपरिघट्टनम्, सेकः गोमूत्रक्षीरगोमयवारिभिः प्रवर्षणाद्वा, उल्लेखनं खननं, लेपो गोमयादिभिः एतैर्मार्जनादिभिः समस्तैर्व्यस्तैर्वा अमेध्या दुष्टा मलिना च भूमिः शुध्यति । अत्र देवलः–यत्र प्रसूयते नारी म्रियते दह्यतेपि वा । चण्डालाध्युषितं यत्र यत्र विष्ठादिसंगतिः ॥ एवं कश्मलभूयिष्ठा भूरमेध्या प्रकीर्तिता । श्वसूकरखरोष्ट्रादिसंस्पृष्टा दुष्टतां व्रजेत्॥ अङ्गारतुषकेशाद्यैरस्थिभिर्मलिना भवेत् । संस्पृष्टा चिरकालं तत्र वद्धैः श्वादिभिर्दूषिता, आदिशब्देन भस्मादिग्रहणम् । एवं शोध्यभूमेस्त्रैविध्यमभिधाय शुद्धिं विभज्य

दर्शयति। पञ्चधा वा चतुर्धा वा भूरमेध्या विशुध्यति। दुष्टा तु या द्विधा त्रेधा शुध्यते मालिनैकधा॥ यत्र मनुष्या दह्यन्ते यत्र चण्डालैरध्युषितं तयोः पञ्चभिर्दहनकालगोक्रमणसेकोल्लेखनैः शुद्धिः। यत्र मनुष्या जायन्ते यत्र च विष्ठादिसङ्गतिः, तयोर्दाहविवर्जितैस्तैरेव चतुर्भिः शुद्धिः। श्वशूकरखरैश्चिरकालमध्युषिता गोक्रमणसेकोल्लेखनैस्त्रिभिः शुध्यति। उष्ट्रकुक्कुटादिभिश्चिरकालमध्यासितायाः सेकोल्लेखनाभ्यां द्वाभ्यां शुद्धिः। अङ्गारतुषभस्मास्थिभिश्चिरकालमधिवासिताया मलिनाया उल्लेखनेन शुद्धिः। मार्जनानुलेपने तु सर्वत्र समुच्चीयेते। एवं गृहं मार्जनानुलेपनाभ्यां शुध्यति। गृहस्य पृथगुपादानं संमार्जनलेपनयोः प्रतिदिवसप्राप्त्यर्थम्। **स्मृत्यन्तरे**—खननात्पूरणाद्दाहात्कालाद्गोक्रमणादिभिः॥ कुर्याद्यथार्हं भशुद्धिं सेकेनोल्लेखनेन च॥ प्रातः प्रतिदिनं गेहं सिञ्चेद्गोमयवारिभिः। मार्जयेच्च तथा सायं दीपैरुज्ज्वालयेद्गृहम्॥ **बोधायनः**—भूमेस्तु संमार्जनप्रोक्षणोपलेपनावस्तरणोल्लेखनैर्यथास्थानं दोषविशेषात्प्रायश्चित्तम्, इति। अथाप्युदाहरन्ति—गोचर्ममात्रा ह्यब्बिन्दोर्भूमिः शुध्यति पातितात्। समूढमसमूढं वा यत्रामेध्यं न लक्ष्यते॥ **वृद्धगौतमः**—सेचनान्मार्जनाद्वेश्म शुध्येत्सूतिगृहं पुनः। खननोल्लेखमृल्लेपपुण्याहैर्विंशतेः परम्॥ **यमः**—पुण्याहैर्विंशतेरूर्ध्वं शुध्यते सूतिकागृहम्। सेचनोल्लेखमृल्लेपगोविक्रमणैस्तथा॥ प्रासादगोपुरस्तम्भभित्तिपातैर्यतो मृतिः। शूद्राणां कर्मिणां तत्र खननं धनुमात्रकम्॥ तन्मृत्तिकां समुद्धृत्य नदीमध्ये विनिक्षिपेत्। पञ्चामृतैस्ततः स्नाप्य शान्तिकर्म समाचरेत्॥ **विष्णुयामले**—अङ्गणे मध्यदेशे च देवागारे गृहेपि वा॥ कूपं खनति तत्काले पतितं कूपरोधसि॥ शूद्राणां कर्मकारस्तु जलदर्शनमारितः। तं गर्ताद्बहिरुत्सृज्य मध्ये शुचिं प्रकल्पयेत्॥ मृतस्थानसमां भूमिं कृत्वा शान्तिं समारभेत्। त्रिंशद्धनुः कृतयुगे त्रेतायां विंशतिर्धनुः॥ द्वापरे द्वादशधनुः कलौ काले धनुर्दश। दृष्टे मेते धनुस्त्रिंशन्निखनेद्धनुरेकतः॥ शतादूर्ध्वं धनुः सप्त शवदोषो न विद्यते॥

## ❀ ग्रामोत्पातशान्तिः ❀

शान्तिमाह **बोधायनः**—अथातो ग्रामस्योत्पातशान्तिं व्याख्यास्यामोऽग्निदाहे व्याघ्राभिभूते सृगालादिरोदने वा ग्रामस्य द्वारस्थूणावरोहणे मधुन उपवेशने वल्मीकपुष्पतरूत्पन्ने देवगात्रस्वेदकम्पे वा बहुब्राह्मणमरणे ग्राममध्ये श्मशाने वा दस्युभिश्च पीडिते रात्रौ च तटाकसेतुभङ्गे वा तेषामन्यतमे उत्पन्ने शान्तिं कुर्यात् शुभलग्ने शुभवारे शुभनक्षत्रे द्वादश ब्राह्मणान् कल्पयित्वा, विष्णुस्नानार्थे महादेवाभिषेकार्थे च द्वौ द्वौ कल्पयित्वा, नवग्रहयज्ञार्थे चतुरो ब्राह्मणान् कल्पयित्वा, शान्तिहोमार्थे चतुरो ब्राह्मणान् कल्पयित्वा, ग्रामस्योत्तरपूर्वदेशे अगारे चतुष्पथे वा शुचौ समे देशे गोमयेन गोचर्ममात्रं चतुरस्रं स्थण्डिलमुपलिप्य, सर्षपतिलगन्धाक्षतपुष्पैरवकीर्य, स्थण्डिलं कल्पयित्वाऽग्निमुपसमाधाय सपरिस्तीर्य आप्रणीताभ्यः कृत्वोपोत्थायाग्रेणाग्निं देवतामावाहयति। व्याहृतिभिर्यज्ञवराहमावाहयामीति देवस्य दक्षिणतो ब्रह्माणमावाहयामि अग्नेरुत्तरतस्त्र्यम्बकमावाहयामि देवस्याग्रेश्च मध्ये वास्तुपुरुषमावाहयामि

इन्द्रादिदिग्देवता आवाहयामि इत्यावाह्य, पुरुषसूक्तेन हरिमभ्यर्च्य, ब्रह्मसूक्तेन चतुर्मुखं, रुद्रसूक्तेन त्र्यम्बकमिन्द्रादिदिक्पालान् यथाक्रमेण स्वैः स्वैर्मन्त्रैरभ्यर्च्य, पश्चिमायां दिश्युपविश्य, आग्निमुखात्कृत्वा, पकाज्जुहोति । " वास्तोष्पते प्रतिजानीह्यस्मान् " इति पुरोनुवाक्यामनूच्य " वास्तोष्पते शग्मयासꣳसदाते " इयि याज्यया जुहोति । तेनैव मन्त्रेण शमीसमिधोऽष्टोत्तरसहस्रं जुहुयात् । " वास्तोष्पते प्रतरणोन एधि " इत्यष्टोत्तरसहस्रमन्नं जुहुयात् । " अमी वः वास्तोष्पते " इति अष्टोत्तरसहस्रमाज्याहुतीर्जुहुयात् " पवमानः सुवर्जनः " इत्येतेनानुवाकेन प्रत्यृचमाज्याहुतीर्जुहुयात्, पुरुषसूक्तेन प्रत्यृचम् । ब्रह्मसूक्तं विष्णुसूक्तं रुद्रसूक्तं च जुहुयात् । " यत इन्द्र भयामहे, स्वस्तिदा विशस्पतिः " इति द्वाभ्याम् " अग्ने नय सुपथा राये" इति " योस्य कौष्ठ्य " इति " एष ते निर्ऋते भागः " इति " इमं मे वरुण, तत्वायामि " इति द्वाभ्याम् " समुद्राय त्वा वाताय स्वाहा " इति पञ्च " आप्यायस्व, संते पयाꣳसि " इति द्वाभ्यां समिदाधानम् । " ईशानः सर्वविद्यानां, त्र्यम्बकं यजामहे " इति प्रत्येकमाज्याहुतीर्जुहुयात् । आसत्येनेत्यादि केतुं कृण्वन्नित्यन्तमेकैकश आज्याहुतीर्जुहुयात् । हव्यवाहं स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानात् । शमीपर्णेषु हुतशेषं निदधाति । यो रुद्रो अग्नाविति देवताभ्यो हविर्निवेदयति । अथोमातिष्ठते " हेतयो नामस्थ " इति यथाक्रमं दिश उपस्थाय पुण्याहं वाचयित्वायोक्तमेनानुवाकेन शान्तिं कृत्वा शान्त्युदकमाज्यशेषं च सर्पपशेषं निक्षिप्यौदुम्बर्यां शाखायां शमीशाखायां वा दर्भानादाय "शिवꣳशिवमिति शन्नो देवीरभिष्टये"इति शकुनिसूक्तं जपित्वा, ग्रामं त्रिः प्रदक्षिणं परिषिच्य ब्राह्मणेभ्यो भूरिभोजनं दत्वा, यथाशक्ति भूषितान् कृत्वा सहस्रदक्षिणां दद्यात् । एवं सप्ताहं द्वादशाहं वा कुर्यात् । एवं समस्तोत्पातशान्तिर्भवतीत्याह भगवान् बोधायनः ॥

## ❀ जलादिशुद्धिः ❀

**शातातपः**—अन्त्यैरपि कृते कूपे सरोवाप्यादिके तथा । तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते ॥ एतदज्ञानविषयमापद्विषयं वा । चण्डालखातवापीषु पीत्वा सलिलमग्रजः । अज्ञानादुपयुक्तेन पञ्चगव्येन शुध्यति ॥ इति पराशरस्मरणात् । **यमः**—स्याक्षोभ्यतटाकादिनदीवापीसरांसि च । चण्डालाद्यशुचिस्पर्शे तीर्थतः परिवर्जयेत् ॥ तीर्थमत्र जलावतरणप्रदेशः । अक्षोभ्याणामपां नास्ति प्रस्रुतानां च धावताम् । स्तोकानामुद्धृतानां च दोषदुष्टत्वमिष्यते ॥ इति । **पराशरः**—वापीकूपतटाकानां दूषितानां विशुद्धये । उद्धृत्य शतकुम्भान्तु पञ्चगव्यं विनिक्षिपेत् ॥ वापीकूपतटाकानामेवं शुद्धिर्विधीयते । अल्पानामेव पयसां महत्सु नतु दूषणम् ॥ इति । **जातुकर्णिः**—मूत्रपुरीषाद्युपहता आपः सोमसूर्यांशुमरुत्स्पर्शेन शुद्धाः॥ इति। विज्ञानेश्वरे **हारीतः**—छिन्ने भिन्ने शवे तोये तत्रस्थं यदि तत्पिबेत् । शुध्ये चान्द्रायणं कुर्यात्तप्तकृच्छ्रमथापि वा॥ यदि कश्चित्ततः स्नायात्प्रमादेन द्विजोत्तमः । जपंस्त्रिषवणस्नायी त्वहोरात्रेण शुध्य ति;ततः तत्र, जपन् गायत्रीमिति शेषः । ज्ञानात् चान्द्रायणम्, अज्ञानादहोरात्रमिति

द्रष्टव्यम् । देवलः–छिन्नं भिन्नं शवं चैव कूपस्थं यदि दृश्यते । पयः पिबेत्त्रिरात्रं तु मानुषे त्रिगुणं भवेत् ॥ चण्डालकूपभाण्डस्थं यस्तु कामाज्जलं पिबेत् । चरेत्सान्तपनं विप्रः शुध्येन्मोहात्त्रिरात्रतः ॥ विष्णुः–जलाशयेष्वथाल्पेषु स्थावरेषु महीतले । कूपवत्कथिता शुद्धिर्महत्सु न तु दूषणम् ॥ आपद्विषये विज्ञानेश्वरे–प्रपास्वरण्ये घटके च सैरे द्रोण्यां जलं कोशविनिःसृतं च । श्वपाकचण्डालपरिग्रहेषु पीत्वा जलं पञ्चगव्येन । शुद्धिः ॥ अनापदि तु चान्द्रायणम्। सीरखातप्रपातोयं पीत्वा चान्द्रायणं चरेत् । इति पराशरस्मृतेः । शङ्खः–कूपे तु पतितौ दृष्ट्वा श्वशृगालौ च मर्कटम् । अस्थिचर्मादिपतनं पीत्वा शुध्येत्त्रिरात्रतः ॥ देवलः–उद्धृताश्चापि शुध्यन्ति शुद्धैः पात्रैः समुद्धृताः । एकरात्रोषिता आपस्त्याज्याः शुद्धा अपि स्वयम् ॥ याज्ञवल्क्यः–अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धापकर्षणात् । अत्र देवलः–मानुषास्थि शवं विष्ठा रेतो मूत्रार्तवे वसा । स्वेदाश्रुदूषिकाश्लेष्म मज्जा चामेध्यमुच्यते ॥ एतैरमेध्यैर्लिप्तानां सौवर्णादीनां मृदा तोयेन च यावद्गन्धलेपापकर्षणं शुद्धिः कर्तव्या। तावन्मृद्वारि देयं स्यात्सर्वासु द्रव्यशुद्धिषु । यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तादृशः ॥ इति मनुस्मृतेः । सर्वशुद्धिषु प्रथमं मृत्तोयैरेव गन्धलेपापकर्षणं कर्तव्यं अशक्तावन्येन चेत्यर्थः । "अद्भिः पूर्वं मृदा चेति" गौतमवचनात् । वसादिग्रहणं सर्वेषाममेध्यत्वप्रतिपादनाय, न समानोपघाताय । मद्यैर्मूत्रपुरीषैश्च श्लेष्मपूयाश्रुशोणितैः । संस्पृष्टं नैव शुध्येत पुनः पाकेन मृण्मयम् ॥ इत्युपघातविशेषाभिधानात् । अमेध्यत्वं चैषाम् "देहाच्चैव मलाश्च्युताः" इति वचनाद्देहच्युतानामेव, न स्वस्थानावस्थितानाम् । अतः । भस्मना च भवेच्छुद्धिरुभयोस्ताम्रकांस्ययोः । जलशौचेन वस्त्राणां परित्यागेन मृण्मयम्॥ इत्यादिकं विण्मूत्रादिस्पृष्टमृण्मयविषयं द्रष्टव्यम् । उशना–तैजसानां मूत्रपुरीषोपहतानामावर्तनमुल्लेखनं भस्मना वा त्रिःसप्तकृत्वः परिमार्जनमतैजसानामुत्सर्गः । कण्वः–अनुलोमशूद्रोपहतानां प्रतिलोमस्पर्शोपहतानामेकविंशतिकृत्वः संमार्जनमस्पृश्योपहतानामावर्तनम् । शङ्खः–मांसरुधिरोपहतानां मृदरिष्टकेगुदविल्वसर्षपकल्कगोमूत्रभस्मगोमयानि शौचद्रव्याणि, रजस्वलास्पृष्टानामेकदिनं पञ्चगव्यं प्रक्षिप्य एकविंशतिकृत्वः संमार्जनाच्छुद्धिः । पैठीनसिः–रज्जुविदलचर्मणामस्पृश्यस्पृष्टानां प्रोक्षणं प्रक्षालनं वा इति शूद्रादिस्पृष्टानां प्रोक्षणं, चण्डालादिस्पृष्टानां प्रक्षालनम् । देवलः–द्रवमार्द्रिकपक्वानां लवणस्य गुडस्य च । नान्या शुद्धिः परित्यागाच्चण्डालस्पर्शने कृते ॥ बोधायन–परोक्षमधिश्रृतस्यान्नस्यावद्योत्याभ्युक्षणं तथा आपणेयानां च भक्ष्याणाम्, शाकमूलफलपुष्पौषधीनां तु प्रक्षालनं इति । आपणेयेत्यापद्विषयम् । स्मृत्यन्तरे–गण्डूषकरणं यस्तु कुर्याद्वै भुक्तभाजने । भूमौ निक्षिप्य पञ्चात्रं परिलेखनमाचरेत् ॥ यदि मूत्रपुरीषाभ्यां रेतसा रुधिरेण वा । चेलं समुद्धरेदद्भिः प्रक्षालयेत्तु तत् ॥ यद्यम्भसा न शोध्यं तु वस्त्रं चोपहतं ध्रुवम् । छेदनं तस्य दाहो वा यन्मात्रमुपहन्यते ॥ ध्रुवं स्थिरम्, मृज्जलैर्गन्धापकर्षणमित्यर्थः । द्रव्याणां मेखलादीनां यद्येकमुपहन्यते । तावन्मात्रस्य तच्छौचं नेतरेषामिति स्थितिः ॥ याज्ञवल्क्यः–वाक्छस्तमम्बुनिर्णिक्तमज्ञातं च सु-

दा शुचि । यथोक्तशौचेपि मनसः अपरितोषाच्छुद्धिसंदेहे शुद्धमेतत्स्वीकुर्वीत इति ब्राह्मणवचनेन शुद्धं वाक्छस्तम् । अम्भुनिर्णिक्तं यत्र प्रतिपदोक्तशुद्धिर्नास्ति तस्य प्रक्षालनेन शुद्धिः, प्रक्षालनासहस्य प्रोक्षणेन । अज्ञातं च सदा शुचि–यत्तु काकाद्युपहतमुपयुक्तं न कदाचिदपि ज्ञायते तदुपयोगे दोषो नास्तीत्यर्थः । तथा **संवर्त्तः**–त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् । अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥ **याज्ञवल्क्यः**–रश्मिरग्नी रजश्छाया गौरश्वो वसुधानिलः । विप्रुषो मक्षिकास्पर्शे वत्सः प्रस्रवणे शुचिः ॥ अजाश्वा मुखतो मेध्या न गौर्न नरजा मलाः । पन्थानश्च विशुध्यन्ति सोमसूर्यांशुमारुतैः ॥ सकर्दमस्तु वर्षासु प्रविश्य ग्रामसंकटम् । जंघयोर्मृत्तिका देयास्तिस्रस्तिस्रस्तु पादयोः ॥ रथ्याकर्दमतोयानि स्पृष्टान्यंत्यश्ववायसैः । मारुतेनैव शुध्यन्ति पक्वेष्टकाचितानि च ॥ रश्मिः सूर्यादेः, रजः गोधान्यादेः, छाया वृक्षादेः, विप्रुषः अवश्यायबिन्दवः, मुखजानामुक्तत्वात् । मुखजा विप्रुषो मेध्यास्तथाचमनबिन्दवः । इति । एते दश चण्डालादिस्पृष्टा अपि स्पर्शे शुचयः । अजाश्वयोर्मुखं मेध्यम्, न गोः, नापि मानुषदेहजातमला मेध्याः, तथा चण्डालादिस्पृष्टा अपि रात्रौ सोमांशुभिर्दिवा दिवाकरांशुभिर्मारुतेन च मार्गाः शुध्यंति । रथ्या मार्गः, कर्दमः पङ्कः, तोयं जलम्, रथ्यास्थितानि तोयानि श्वचण्डालवायसाद्यैः स्पृष्टानि वायुनैव शुध्यन्ति । तोयानीति बहुवचनं रथ्यागतगोमयशर्करादिप्राप्त्यर्थम् । पक्वेष्टकाभिश्चितानि धवलगृहादीनि चण्डालादिभिः स्पृष्टानि मारुतेनैव शुध्यन्ति । इष्टकाग्रहणात् तृणकाष्ठपर्णादिमयानां प्रोक्षणम् । अत्र **स्मृत्यन्तरम्**–श्वकाकोष्ट्रखरोलूकसूकरग्राम्यपक्षिणाम् । अजाव्यो रेणुसंस्पर्शादायुर्लक्ष्मीश्च हीयते ॥ **बोधायनः**–गजाश्वरथधान्यानां गवां चैव रजः शुभम् । अप्रशस्तं समूहिन्याः श्वाजाविखरवाससाम् ॥ **धर्मसारे**–गोगजाश्वाजपुच्छेषु मुखेषु च विशेषतः । यद्भ्रमुदकं तस्माद्विप्रुषो दूरतस्त्यजेत् ॥ **मनुः**–विप्रुषो मूषिका नार्यो भूमिरापो हुताशनः । मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः ॥ **संस्कारमञ्जर्याम्**–गोकुले रत्नशालायां तैलयन्त्रेक्षुयन्त्रयोः । न मीमांस्यानि शौचानि स्त्रीभिराचरितानि च ॥ **याज्ञवल्क्यः**–सोमः शौचं ददौ स्त्रीणां गन्धर्वस्तु शुभां गिरम् । पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः ॥ विप्रस्तु पादतो मेध्यो गावो मेध्यास्तु पृष्ठतः । अजाश्वा मुखतो मेध्याः स्त्रियो मेध्याश्च सर्वशः ॥ **वैखानसे**–आतुरे बाले महानसे च शौचं न विचारणीयम् । **मनुः**–बालैरनुपरिक्रान्तं नित्यं मेध्यमिति स्थितिः । **श्रीमहाभारते**–मनःशौचं कर्मशौचं कुलशौचं च भारत । शरीरशौचं वाक्शौचं शौचं पञ्चविधं स्मृतम् ॥ अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः । स्वधर्मे च व्यवस्थानं शौचमेतत्प्रचक्षते ॥ इति सामान्येनोक्तं शौचलक्षणं द्रष्टव्यम् । अतः शौचं संकरवर्जनम् इत्युक्तम् । अत्र । रागाद्यपेतं हृदयं वागदुष्टानृतादिभिः । हिंसादिरहितः कायः केशवाराधनं त्रयम् ॥ परान्धेषु जात्यन्धाः परदारेष्वपुंसकाः । परापवादे ये मूकास्तेतीव दयिता मम ॥ स्त्रीशुद्धिरर्थशुद्धिश्च यस्य नास्त्यपि धर्मवान् । स एव नरकं याति शिरश्छेदे कुतो भिषक् ॥ योऽर्थे शुचिर्हि स शुचिर्न मृद्वारिशुचिः शुचिः । इत्यादिकं भाव्यम् ।

**बोधायनः**–यथैव सोमसंयोगाच्चमसो मेध्य उच्यते । अपां तथैव संयोगान्नित्यं मेध्यः कमण्डलुः ॥ ततः शौचं ततः पानं संध्योपासनमेव च । निर्विशङ्केन कर्तव्यं नित्यं मेध्यः कमण्डलुः ॥ अत्र कमण्डलुशब्देन ताम्रकांस्यपात्रमुच्यते, न तु नारिकेलफलम् । दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः । इति कलौ तस्य निषेधात् । नापि मृण्मयं वेणुदारुमयं वा । अलाबु दारुपात्रं वा वैणवं मृण्मयं तथा । चत्वारि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत् ॥ यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च । इति तस्य संन्यासिविषयत्वस्मरणात् । यत्तु–प्रायश्चित्तैरपैत्येनो याजनाध्यापनैः कृतम् । प्रतिग्रहनिमित्तं तु त्यागेन तपसैव च ॥ इति, तत्र केवलं तपसा शुद्धिपरम्, किंतु–षष्ठांशं कर्षको दद्यात्पञ्चमांशं तथा वणिक् । प्रतिगृह्य चतुर्थांशं दत्त्वा पापैर्विमुच्यते ॥ इत्युक्तरीत्या तुरीयांशदानेन तपसा कृच्छ्रचान्द्रायणादिना च शुद्धिपरम् । यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् । तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च ॥ इति मनुस्मृतेः । **शाण्डिल्यः**–पञ्चेन्द्रियस्य देहस्य बुद्धेश्च मनसस्तथा । द्रव्यदेशक्रियाणां च शुद्धिराचार इष्यते ॥ शास्त्रदृष्ट्या समीऽप्येव शुद्धानां द्रव्यसंपदाम् । यत्नस्तु संग्रहे सद्भिर्द्रव्यशुद्धिरितीष्यते ॥ **मनुः**–सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् । योऽर्थे शुचिर्हि स शुचिर्न मृद्वारिशुचिः शुचिः ॥ **शाण्डिल्यः**–अविज्ञातमना नित्यं तापैरभिहतोऽपि सन् । अक्लेशेन भवेद्वृत्तो विशुद्धद्रव्यतत्परः ॥ **बोधायनः**–यद्यौवने चरति विभ्रमेण सद्वासद्वा यादृशं वा यथा वा । उत्तरे चेद्वयसि साधुवृत्तस्तदेवास्य भवति नेतराणि ॥ अत्राकृत्यप्रायश्चित्तजातमस्मदुक्ते दशनिर्णयग्रन्थे सुस्पष्टं द्रष्टव्यम् ॥

## ❀ अथ माध्याह्निकस्नानविधिः ❀

तत्र **दक्षः**–तृतीयभागे कर्मैवं समाप्य तदनन्तरम् । भागे चतुर्थे कुर्वीत स्नानमम्भस्यकृत्रिमे ॥ **बोधायनः**–ततो मध्याह्नसमये पुनः स्नानं समाचरेत् । तिलपुष्पकुशान् धीतानादाय प्रयतः शुचिः ॥ **मनुः**–न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि । न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ॥ **शाण्डिल्यः**–स्नानं मध्यंदिने कुर्यात्सुचीर्णेऽपि निराश्रयः । समुद्रगापगादेवखातवापीह्रदाश्रये ॥ परखातेऽपि वा स्नायादब्ध उद्धृत्य तन्मृदम् । ध्यात्वा क्षीरार्णवं तत्र नित्यं शिष्टनिषेविते ॥ कूपतोयैरपि स्नायात्सर्वालाभे समुद्धृतैः । स्नानं तु न घटैः कार्यं नासाछिद्रविवर्जितैः ॥ ग्राहादिसेविते रूक्षे नीचावाससमीपगे । श्मशानपार्श्वगेऽज्ञाते न स्नायात्रोपरोधतः ॥ नात्र स्नातव्यमिति रक्षकेणोपरुद्धो विण्मूत्रोपरुद्धो वा न स्नायादित्यर्थः । न भुक्त्वा नातुरोऽजीर्णो नान्यकामी न कामतः । न निशायां न चैकाकी न चिरं तोयमध्यगः ॥ न स्नायात्सह शूद्रेण न स्त्रीभिर्न च नास्तिकैः । न पाषण्डैर्न बालैश्च न रोगाशुचिभिर्नरैः ॥ अम्बु न क्षोभयेदङ्गैः पादेनोत्सादयेन्न च । नाचरेत्प्लवनक्रीडां न गण्डूषं जले क्षिपेत् ॥ अन्योन्यं नाक्षिपेत्तोयं न देहमलमुत्सृजेत् । न कुत्सयेन्महातीर्थमन्धमन्त्रं न कीर्तयेत् ॥ आरनालं न सेवेत कदापि भगवत्परः । सुराकल्पं हि तज्ज्ञेयं तस्माद्यत्नेन वर्जयेत् ॥ धान्याम्लेन न स्नायादित्यर्थः । आरनालं न सेवेत कदा-

चित्तु द्विजोत्तमः । आरनालं तु विप्राणां सुरातुल्यं न संशयः ॥ **वसिष्ठः**—जलनिर्गमनद्वाःस्थमवतारप्रदेशकम् । अमेध्ययुक्तं दुर्गन्धि क्षोभितं सलिलं त्यजेत् ॥ **भरद्वाजः**—स्नानमुक्तं त्रिसंध्यासु यतीनां ब्रह्मचारिणाम् । प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः ॥ **व्यासः**—मन्त्रपूतैर्जलैः स्नानं प्राहुः स्नानं महर्षयः । न वृथा वारिमग्नानां यावसामिव तत्फलम् ॥ **विष्णुः**—ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते । तूष्णीमेव हि शूद्राणां स्त्रीणां च कुरुनन्दन ॥ **हारीतः**—प्रातः स्नातोपि मध्याह्ने पुनः स्नानं समाचरेत् । न भुक्त्वालंकृतो रोगी मन्त्रैर्वा स्नानमाचरेत् ॥ एतन्मन्त्रस्नानं प्रातःस्नातस्याशक्तौ द्रष्टव्यम् । अत्र **जाबालिः**—अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम् । आर्द्रेण वाससा वाङ्गमार्जनं कापिलं स्मृतम् ॥ **व्यासः**—अशिरस्कं भवेत्स्नानं कटिमात्रमशक्तितः । आर्द्रेण वाससा चाङ्गमार्जनं कापिलं विदुः ॥ नन्विदम्—प्रातः स्नातुमशक्तश्चेत्कापिलं स्नानमाचरेत् । इति स्मृतेः प्रातःस्नानविषयमिति चेन्न, अशक्त्योपाधिकत्वेन विहितत्वात्रापि तुल्यत्वात् । किं तु, अस्नाताशी मलं भुङ्क्ते ह्यजपः पूयशोणितम् । अस्नात्वा नाचरेत्कर्म जपहोमादिकं च न ॥ न कुर्याद्वैदिकं कर्म ह्यस्नात्वा द्विजसत्तमः । इति स्मृतेः । अनातुरेणावश्यं स्नातव्यम्, शक्तेन तु सवनयोरिति विशेषः । **चन्द्रिकायाम्**—शुचौ देशे समभ्युक्ष्य स्थापयेत् कुशमृत्तिकाम् । मृत्तोयेन स्वकं देहं बहिः संशोध्य यत्नतः ॥ बहिः जलाद्बहिः, तीर इति यावत् । तथा **शाण्डिल्यः**—शोधयित्वोद्धृताम्भोभिर्देहं तीरे बहिर्जलैः । प्रक्षाल्य भूमिं कर्मार्थमवतारं च शोधयेत्॥ **यमः**—मलस्नानं ततः कृत्वा समाचामेद्यथाविधि । जान्वोरन्तः करौ कृत्वा प्राङ्मुखो वाप्युदङ्मुखः ॥ पाणी पादौ च संक्षाल्य प्रकृतिस्थाद्भिरेव च । आदाय विमलं तोयं ब्रह्मतीर्थेन वाग्यतः ॥ हृद्गतं च चतुः प्राश्य सशब्दं नावतारयेत् । तथा संमार्जनं कुर्यात्पाणी पादाववोक्ष्य च ॥ अंगुष्ठानामिकाभ्यां तु चक्षुषी संस्पृशेत्ततः । अंगुष्ठतर्जनीभ्यां तु नासापुटयुगं स्पृशेत् ॥ कनिष्ठांगुष्ठयोगेन श्रोत्रे चैव समालभेत् । अंगुष्ठमध्यमाभ्यां तु बाहुमूले उपस्पृशेत् ॥ सर्वाभिरंगुलीभिर्वा बाहुमूले उपस्पृशेत् । इति केचित् । केवलांगुष्ठतो नाभिं तलेन हृदयं स्पृशेत् । सर्वांगुलीर्न्यसेन्मूर्ध्नि जलं स्पृष्ट्वान्तरान्तरा ॥ **दक्षः**—गोकर्णाकृतिहस्तेन त्रिः पिबेद्ब्रह्मतीर्थतः । परिमृज्य द्विरास्यं तु द्वादशांगानि चालभेत् ॥ प्रत्यङ्मुदकस्पर्शी कुर्यादाचमने बुधः । **मात्स्ये**—स्नानं कुर्यान्मृदा तद्वदाचम्य तु विधानतः । अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्तेति मन्त्रतः ॥ **जमदग्निः**—गन्धद्वारामिति जप्त्वा स्वान्येवाङ्गानि लेपयेत् । अत्र **विष्णुः**—मृत्तोयैः कृतमलापकर्षो निमज्ज्याप उपस्पृश्य, आपोहिष्ठेति तिसृभिर्हिरण्यवर्णा इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन इदमापः प्रवहतेति च तीर्थमभिमन्त्र्य ततोप्सु निमग्नस्त्रिरघमर्षणं जपेत्, तद्विष्णोरिति वा सावित्रीम् वा युञ्जत इत्यनुवाकं वा पुरुषसूक्तं वा । स्नातश्चार्द्रवासा देवर्षिपितृतर्पणमम्भस्थ एव कुर्यादिति । मृत्तोयैर्मलापकर्षणप्रकारमाह **व्यासः**—मृदेकया शिरः क्षाल्य द्वाभ्यां नाभेस्तथोपरि । अधश्च तिसृभिः कार्यं पादौ

षड्भिस्तथैव च ॥ मृत्तिका च समुद्दिष्टा आर्द्रामलकमात्रिका । गोमयस्य प्रमाणं तत्तेनाङ्गं लेपयेत्ततः ॥ लेपयित्वाथ तीरे तु तल्लिङ्गेनैव मन्त्रतः । प्रक्षाल्याचम्य विधिवत्ततः स्नायात्समाहितः ॥ अयमत्रानुष्ठानक्रमः । सहस्रपरमेत्युक्त्वा दूर्वास्नानं समाचरेत् । अश्वक्रान्तेति वै मन्त्रैर्दद्याद्गात्रेषु मृत्तिकाम् ॥ गन्धद्वारेति चालिप्य गोमयं क्षालयेत्ततः । एवं तीरे पुरा कृत्वा प्रविश्य स्नानमाचरेत् ॥ उद्धृतासीति मन्त्रेण मृत्तिकां ग्राहयेद्द्विजः । इति । **स्मृत्यन्तरे विशेषः**—षड्भिः पादौ चतुर्भिश्च जङ्घे नाभिं कटिं त्रिभिः । मृदेकया शिरः क्षाल्य ततः कुर्यात्प्रमार्जनम् ॥ अश्वक्रान्तेति मन्त्रेण दद्याद्गात्रेषु मृत्तिकाम् । प्रक्षाल्याथ द्विराचम्य प्रविश्याप्सु निमज्जयेत् ॥ अश्वक्रान्त इत्यारभ्य त्वयि सर्वं प्रतिष्ठितमित्यन्तमुक्त्वा, गात्रेषु मृत्तिकामालिप्य प्रक्षाल्य गन्धद्वारेति गोमयमङ्गेष्वालिप्य प्रक्षाल्य ततो जलं प्रविश्य विधिवत्स्नायादित्यर्थः । अत्र **व्यासः**—प्रक्षाल्याचम्य विधिवत्ततः स्नायात्समाहितः । अभिमन्त्र्य जलं मन्त्रैस्तल्लिङ्गैर्वारुणैः शुभैः ॥ भावपूतस्तमव्यग्रं ध्यायेद्वै विष्णुमव्ययम् । आपो नारायणोद्भूतास्ता एवास्यायनं पुनः ॥ तस्मान्नारायणं देवं स्नानकाले सदा स्मरेत् । वीक्ष्य सोङ्कारमादित्यं त्रिर्निमज्जेज्जलाशये ॥ **बोधायनः**—अथ हस्तौ प्रक्षाल्य कमण्डलुं मृत्पिण्डं च परिगृह्य तीर्थं गत्वा त्रिः पादौ प्रक्षाल्य त्रिरात्मानमपोभिप्रतिपद्यते हिरण्यशृङ्गं वरुणमित्यञ्जलिनाप उद्धरन् सुमित्रा न आप ओषधय इति तां दिशं निरुक्षति यस्यां दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुरित्यथाप उपस्पृश्य त्रिः प्रदक्षिणमुदकमावर्तयति यदपां क्रूरमिति अप्सु निमज्ज्योत्तीर्याचान्तः पुनराचामेत्, आपः पुनन्तु पृथिवीमिति पवित्रं धृत्वाद्भिर्मार्जयीत, आपोहिष्ठा मयो भुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन मार्जयित्वान्तर्जलगतोघमर्षणेन त्रीन् प्राणायामान् धारयित्वोत्तीर्य वासः पीडयित्वा प्रक्षालितोपविष्टवानक्लिन्नवासांसि परिधायाचम्य दर्भेष्वासीनो दर्भान् धारयमाणः सावित्रीं सहस्रकृत्व आवर्तयेदिति । **शाण्डिल्यः**—प्रक्षाल्याजानुचरणौ मृज्जलैः कूर्परावधि । हस्तौ निर्णिज्य पादौ च विद्वानाचमनं चरेत् ॥ शरीरं निर्मलीकृत्य मृदद्भिस्तु प्रविश्य ताः । शुद्धावगाहनं कृत्वा समाचामेद्यथाविधि ॥ तत्रस्थं भावयेद्देवं स्तुतिभिर्वेदराशिभिः । आसनाद्यैर्यथाशक्ति हृदाभ्यर्च्य जगद्गुरुम् ॥ ध्यात्वा गङ्गां हरेः पादात्पतन्तीं स्वमूर्धनि । ध्यायेद्देवं परं ब्रह्म नारायणमनामयम् ॥ प्रातःस्नातोपि विधिवत्स्नानं मध्यंदिने चरेत् । शक्तश्चेदन्यतो रोगाच्छाव्या संमार्जनं चरेत् ॥ अनेनापि प्रातःस्नातस्य मध्याह्नस्नानाशक्तौ कापिलस्नानमनुज्ञायते । अनुकल्पमाह **योगयाज्ञवल्क्यः**—य एष विस्तरः प्रोक्तः स्नानस्य विधिरुत्तमः । असामर्थ्यान्न कुर्याच्चेत्तत्रायं विधिरुच्यते ॥ स्नानमन्तर्जले चैव मार्जनाचमने तथा । जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम् ॥ अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः । स्नानाचरणमित्येतत्समुद्दिष्टं मनीषिभिः ॥ तीर्थकल्पनं च बहुसमाप्युक्तमिति तत्प्रातःस्नान एवोक्तम् । **शङ्खः**—नमस्येद्वरुणं देवमम्भसांपतिमूर्जितम् । याचेत देहि मे तीर्थं सर्वपापापनुत्तये ॥ वरुणोत्र नारायण एव । वरुणो वारुणो वृक्षः इति सहस्रनामसु नामत्वेन पठ्

नात् । अयमत्र **तीर्थयाचनमन्त्रः**–समस्तजगदाधार शंखचक्रगदाधर । देहि देव ममानुज्ञां युष्मत्तीर्थनिषेवणे॥ इति। **यमः**–ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु । प्रायश्चित्तं हि सर्वस्य दुरितस्येति वै श्रुतिः ॥ **दक्षः**–ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु । ब्रह्मलोकमवाप्नोति न चेहाजायते पुनः॥**व्यासश्च**–तद्विष्णोरिति मन्त्रेण मज्जेदप्सु पुनः पुनः । गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै ॥ **योगयाज्ञवल्क्यश्च**–अन्तर्जलगतो मग्नः शुद्धभावो हरिं स्मरेत् । तद्विष्णोरिति मन्त्रेण मज्जेदप्सु पुनः पुनः ॥ **भरद्वाजः**–हिरण्यवर्णा इत्यादिचतुर्णाममलस्तृषिः । छन्दस्त्रिष्टुप् देवता स्यादापः संप्रोक्षणे विधिः ॥ पवमानस्य मुनयो विश्वेदेवाः प्रकीर्तिताः । प्रथमस्य द्वितीयस्य गायत्री छन्द उच्यते ॥ अनुष्टुप् च तृतीयस्य गायत्री चोपरि द्वयोः । षष्ठसप्तमयोस्त्रिष्टुप् गायत्री चाष्टमस्य तु ॥ नवमप्रभृत्यष्टानामनुष्टुप् त्रिष्टुबन्त्यकम् । लिङ्गोक्ता देवताः प्रोक्ता विनियोगस्तु मार्जने ॥ अघमर्षणसूक्तस्य ऋषिरेवाघमर्षणः । अनुष्टुप् च तथा च्छन्दः परमात्मा च देवता ॥ कोकिलो राजपुत्रस्तु द्रुपदेऽस्य वै मुनिः । छन्दोऽनुष्टुप् देवतापो मार्जने विनियुज्यते ॥ **हारीतः**–ऋषिरौर्विह औदन्यो गायत्री छन्द उच्यते । वरुणो देवता योगो मार्जने जुम्बुमन्त्रके ॥ योगः विनियोगः,जुम्बुकाय स्वाहेति मन्त्रे। जुम्बुका नाम गायत्री वेदे वाजसनेयके । अन्तर्जले सकृज्जप्त्वा ब्रह्महत्यां व्यपोहति॥**यमः**–द्रुपदा नाम गायत्री यजुर्वेदे प्रतिष्ठिता । अन्तर्जले त्रिरावृत्य ब्रह्महत्यां व्यपोहति॥ अपः पाणौ समादाय त्रिः पठेद् द्रुपदामृचम् । ततोयं मूर्ध्नि विन्यस्य सर्वपापैः प्रमुच्यते ॥ हत्वा लोकानपीमांस्त्रीन् त्रिः पठेदघमर्षणम् । यथाश्वमेधावभृथ एवं तं मनुरब्रवीत् ॥ **भरद्वाजः**–ततोऽघमर्षणं कुर्यादृतं चेति त्र्यृचं जपेत्। त्रिषडष्टौ द्वादश वाऽऽवर्तयेदघमर्षणम् ॥ कृत्वाघमर्षणं पश्चादुच्चरन् प्रणवं रविम् । भक्त्या प्रेक्ष्य नमस्कृत्य त्रिर्निमज्जेज्जलाशये ॥ यथाश्वमेधः क्रतुराट् सर्वपापं व्यपोहति । तथाघमर्षणं सूक्तं सर्वपापप्रणाशनम् ॥ **वसिष्ठो मन्त्रान्तरमाह**–ततो महाव्याहृतिभिर्गायत्र्या चाभिमन्त्रयेत्। आपो हिष्ठेदमापश्च द्रुपदादिव इत्यपि ॥ तथा हिरण्यवर्णाभिः पावमानीभिरन्ततः । ततोऽर्कमीक्ष्य ओंकारं निमज्ज्यान्तर्जले बुधः ॥ प्राणायामांश्च कुर्वीत गायत्र्या चाघमर्षणम् । यथोक्तैः क्षोभितस्तैस्तु मज्जेत्त्रिर्दण्डवत्ततः ॥ यथोक्तैः रेचकादिभिः, अघमर्षणम्–" ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत " इति वाक्यपट्कम् । **व्यासः**–कुरुक्षेत्रं गयां गङ्गां प्रभासं नैमिशं तथा । तीर्थान्येतानि सर्वाणि स्नानकाले भवन्तु मे ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु॥ तथा पुराणे **गङ्गावाक्यम्**–नन्दिनी नलिनीत्यादि तत्र तत्र भवाम्यहम्। इति प्रातःस्नानावसर एवोक्तम् ॥ **व्यासः**–नदीषु न नदीं ब्रूयात्पर्वतेषु न पर्वतम् । नान्यत्प्रशंसेत्तत्रस्थस्तीर्थेष्वायतनेषु च ॥ गङ्गां गोदावरीं चैव सर्वत्र परिकीर्तयेत् । एवं च–आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ सृष्ट्वा तोयं नारमन्तः स्थितोहं येन स्यान्मे नाम नारायणेति। ता एवास्यायनं पूर्वं तेन नारायणः स्मृतः ॥ आपो नारायणो देवः सर्ववेदेषु पठ्यते।

आपो नारायणः स्मृतः । इत्यादिवचनशतैरपां नारायणायतनत्वावगमात्, ध्यायेत्स्मरेत्संकीर्तयेत्पूजयेन्नारायणमिति नारायणस्मरणकीर्तनादिविधानाच्च नान्यं स्नानकाले कीर्तयेत् । नान्यत्प्रशंसेत्तत्रस्थस्तीर्थेष्वायतनेषु च । इत्यनेनान्यकीर्तननिषेधाच्च । **व्यासः**–आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं प्रोक्ताः स एवाप्पतिरुच्यते ॥ तस्यैव सूनवस्त्वेतास्तस्मात्तं ह्यप्सु संस्मरेत् । अत्र तीर्थादिस्मरणविधिश्च अब्रह्मविद एव । सर्वं ब्रह्मेति यो वेत्ति नातीर्थं तस्य विद्यते । इति स्मृतेः । ब्रह्मविदस्तु ब्रह्मात्मकत्वावभासनाच्च । अत एव स्मर्यते–इदं तीर्थमिदं नेति ये नरा भेदवादिनः । तेषां विधीयते तीर्थगमनं तत्फलानि च ॥ इति । यत्तीर्थबुद्धिश्च जलेन कर्हिचित् । इति शुकस्मरणात्सर्वत्तीर्थबुद्धिः कार्येत्यर्थः । **गङ्गामाहात्म्ये च**–गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि । नरो न निरयं याति किं तया सदृशं भवेत् ॥ **प्रजापतिः**–स्नात्वोत्थाय जलात्तीरमेत्यासित्वा समाहितः । आचम्य पीत्वा मन्त्रापो मार्जित्वाभिमुखो रवेः ॥ सावित्र्याञ्जलिमुत्क्षिप्य समुपास्य हरिं पुनः । देवान् ऋषीन् पितॄंश्चैव संतर्प्य च यथाविधि ॥ ततो निष्पीड्य वस्त्रं तु तले तीरस्य चाम्बरम् । परिधाय पदा स्थित्वा गायत्रीं च ततो जपेत् ॥ एवं स्नानमध्ये संध्योपासनमुक्तम् । तथा **शंखेनापि**–प्रातःसंध्यां सनक्षत्रां मध्यमां स्नानकर्मणि । सादित्यां पश्चिमां संध्यामुपासीत यथाविधि ॥ **भरद्वाजः**–प्रातः सतारकां संध्यां सायंसंध्यां सभास्कराम् । स्नानकर्मणि तां मध्यामुपासीत यथाविधि ॥ बौधायनीयेप्येवमुक्तम्–अप्सु निमज्ज्योत्तीर्य आचान्तः पुनराचामेत् " आपः पुनन्तु पृथिवीम् " इति । **जमदग्निश्च**–आदित्याभिमुखो मज्जेदापो अस्मानिति त्र्यृचा । मध्यंदिनेप आचामेन्मन्त्रेणापः पुनन्त्विति ॥ अग्निश्चमेति सायं च प्रातः सूर्यश्च मेति च । एवं बहुस्मृतिसंमतत्वात् स्नानमध्ये वा मध्याह्नसंध्या कर्तव्या । अत्र **भरद्वाजः**–आपः पुनन्त्वियेतस्य मुनिरापोऽभिधानकः । छन्दोनुष्टुबिति प्रोक्तं देवता ब्रह्मणस्पतिः ॥ विनियोगः पयःपाने इत्युक्त्वाथ समन्त्रकम् । पीत्वा जलमथाचामेदन्यत्प्रातरिवाखिलम् ॥ अन्यत मार्जनादि जपान्तं प्रातःकालवत्कर्तव्यमित्यर्थः । **व्यासः**–द्रुपदां वा त्रिरभ्यस्येद्व्याहृतीः प्रणवान्विताः । गायत्रीं वा जपेद्विद्वांस्ततोऽचैवाघमर्षणम् ॥ तथैव मार्जयेन्मन्त्रेरापो हिष्ठादिभिस्त्रिभिः । आचान्तः पुनराचामेन्मन्त्रेणापः पुनन्त्विति ॥ अन्तर्जलगतो मग्नो जपेत्त्रिरघमर्षणम् । द्रुपदां वाथ सावित्रीं तद्विष्णोः परमं पदम् ॥ आवर्तयेद्वा प्रणवं देवं वा संस्मरेद्धरिम् ॥

## ❀ स्नाने दिङ्नियमः ❀

अत्र प्रकरणे सूर्याभिमुखस्नानमेव मुख्यमिति सर्वे मुनय ऊचुः । **व्यास आह**–आदित्याभिमुखो मज्जेदापो अस्मानिति त्र्यृचा । **गौतमः**–आदित्याभिमुखः स्नायात्प्रातर्मध्यंदिने द्विजः । **आपस्तम्बः**–अभिमन्त्रभिमुख आदित्यमुदकमुपस्पृशेत् । इति सर्वत्रोदकस्पर्शनविधिः । **उशना**–सूर्ये मध्यं दिनं प्राप्ते संस्नायात्तन्मुखो द्विजः । तृतीययामं संप्राप्ते दिवानाथे द्विजोत्तमः ॥ मन्त्रवत्तन्मुखः स्नायादन्यथा लि-

ष्फलो भवेत् । वसिष्ठः—मध्यंदिने गते सूर्ये तं निरीक्ष्यैव संस्पृशेत् । स्नायादित्यर्थः ॥ मनुः—ततो मध्याह्नसमये पुनः स्नानं समाचरेत् । सौरमन्त्रेण तं वीक्ष्य सूर्यं स्नायाद्द्विजोत्तमः ॥ भरद्वाजः—सति प्रभूते पयसि नाल्पे स्नायात्कदाचन । स्रवन्त्यश्चेत्प्रतिस्रोतः प्रत्यर्कं चान्यवारिषु ॥ अप्रवाहोदकस्नानं विप्रपादावनेजनम् । गायत्रीजपमर्घ्यं च ह्यादित्याभिमुखश्चरेत् ॥ इति स्रोतोभिमुखत्वविधानं प्रातःस्नानविषयम्, न तु मध्याह्नस्नानविषयमिति मन्तव्यम्, बहुस्मृतिविरोधात् । अरुणोदयवेलायां प्रातःस्नानं विधीयते । आदित्याभिमुखस्नानं न कर्त्तव्यं हि तत्र वै ॥ तस्मान्मध्यंदिने कुर्याद्दादित्याभिमुखो द्विजः । स्नानमिति शेषः । तथा हि प्रातःकाले स्रोतसोभिमुखं स्नायान्मध्याह्ने चादित्याभिमुखं स्नायादित्यर्थः । इदमेव सर्वस्मृतिषु सिद्धम् । तथा जाबालिः—स्रोतसोभिमुखं स्नायात्प्रातः काले द्विजोत्तमः । आदित्याभिमुखं स्नायान्मध्याह्ने स्नानकर्मणि ॥ इत्यलम् ॥

## ❋ मृत्तिकास्नाने विशेषविधिः ❋

अत्र श्रीवैष्णवविषये पाद्मे मृत्तिकास्नाने विशेषः—प्राप्ते मध्याह्नसमये स्नानं कुर्याद्यथाविधि । न्यासमङ्गे षडङ्गानां कृत्वादाय मृदं करे ॥ सव्ये निधाय कृत्वा तां त्रेधा मूलाग्रमध्यतः । मूले स्थितां मृदं पूर्वमभिमन्त्र्यास्त्रविद्यया ॥ विदिक्षु दिक्षु चोर्ध्वायामधरायां दिशि क्षिपेत् । ततो मध्ये स्थितां मृत्स्नामुदके मूलविद्यया ॥ निक्षिप्य भागमग्रस्थं कराभ्यां करयोर्द्वयोः । विधाय पंकमम्भोभिर्दर्शयित्वा च पूषणम् ॥ अस्त्रहीनांगविद्याभिरापादतलमस्तकम् । आलिप्य देहमखिलमवगाह्य च वारिषु ॥ देवमावाह्य लक्ष्मीशं दद्यादर्घ्यादिकं ततः । तत्पादक्षालनाम्भोभिः पाणिभ्यां कुम्भमुद्रया ॥ पावनैः शिरसि न्यस्तैरात्मानमभिषिच्य च । वासुदेवमभिध्यायन्नघमर्षणमाचरेत् ॥ उत्तीर्य कर्म निखिलं मध्याह्नसमयोचितम् । कृत्वा यजेत देवेशं होमान्तं कमलासन ॥ योगयाज्ञवल्क्यः—एवं संपूज्य देवेशं क्षणं ध्यात्वा निरञ्जनम् । ततोवलोकयेत्सूर्यं हंसःशुचिषदित्यृचा ॥ स याति ब्रह्मणः स्थानं स्नात्वेक्षेतानया तु यः । इदं मृत्तिकास्नानं प्रातः काले मध्याह्नातिक्रमे भौमार्कवारयोश्च न कार्यम् । न प्रातर्मृत्तिकास्नानं न च भौमार्कवारयोः । मध्यंदिने तु कर्तव्यं नातिमध्यंदिने रवौ ॥ भौमार्कयोश्च मध्याह्नात्परतः प्रातरेव च न कार्यम् मृत्तिकास्नानमित्याह भगवान् भृगुः । यमः—यज्ञोपवीती देवांस्तु कण्ठाभरणवानृषीन् । प्राचीनावीती पितॄंस्तु तीरे स्वञ्जलिमुत्क्षिपेत् ॥ विष्णुः—ततो वस्त्रद्वयं शुद्धं वसित्वा द्विरुपस्पृशेत् । उपवीती बद्धशिखः समाचम्य यथागमम् ॥ पवित्रपाणिः सोंकारं यज्ञेशं मनसा स्मरेत् । प्रातःसन्ध्याविधानेन छन्द आर्षं च दैवतम् ॥ स्मृत्वा चायम्य च प्राणानाचामेद्दर्भपाणिना । आपः पुनन्तु मन्त्रेण आपो हिष्ठेति मन्त्रतः ॥ प्रक्षिप्य चाञ्जलिं सम्यगुदुत्यं चित्रमित्यपि । तच्चक्षुर्देवहितं च हंसः शुचिषदित्यपि ॥ एतज्जपेदूर्ध्वबाहुः सूर्यं पश्यन्समाहितः । गायत्र्या तु यथाशक्ति ह्युपस्थाय दिवाकरम् ॥ नोर्चजप्यं बुधः कुर्यात्सावित्र्याश्च विशेषतः । आपो हिष्ठेति मार्जयित्वा, आपः पुनन्तु मन्त्रेणाचम्य,

सुरभिमत्या आपो हिष्ठेति च मार्जयित्वा, गायत्र्या अर्घ्यमेकं प्रक्षिप्य, गायत्रीं जपित्वा, आसत्यादिभिर्मन्त्रैरूर्ध्वबाहुरादित्यमुपतिष्ठेतेत्यर्थः । **स्मृत्यर्थसारे**—ततो मध्याह्नसमये मन्त्रवत्स्नानमाचरेत् । ततो वस्त्रद्वयं शुद्धमाच्छाद्य द्विरुपस्पृशेत् ॥ ऊर्ध्वपुण्ड्रं विधानेन धृत्वा संध्यां ततश्चरेत् । **मनुदक्षौ**—आपो हिष्ठादिमन्त्रेण मार्जयित्वा यथाविधि । आपः पुनन्तु मन्त्रेण जलं पीत्वा समाहितः ॥ सुरभिमत्या सहाब्लिङ्गैर्मार्जयित्वार्घ्यमुत्क्षिपेत् । द्वौ पादौ संपुटौ कृत्वा पाणिभ्यां पूरयेज्जलम् ॥ रवेरभिमुखस्तिष्ठंस्त्रिरूर्ध्वं संध्ययोः क्षिपेत् । इति । **स्मृत्यर्थसारे**—अर्घ्यमेकं प्रदातव्यं मध्याह्ने भास्करं प्रति । उभयोः सन्ध्ययोश्चैव ह्यप ऊर्ध्वं त्रिरुत्क्षिपेत् ॥ एवं वस्त्रपरिधानानन्तरं माध्याह्निकमुक्तम् । एवं सति स्नानमध्ये वा, धौतपरिधानानन्तरं वा, यथारुच्यनुष्ठेयम् । **मनुः**—आर्द्रवासास्तु यः कुर्याज्जपहोमप्रतिग्रहम् । तत्सर्वं निष्फलं विद्यादित्येवं मनुरब्रवीत् ॥ **संवर्त्तः**—मतिमान्न कदाचित्तु गायत्रीमुदके जपेत् । गायत्र्याग्निमुखी प्रोक्ता तस्मादुत्तीर्य तां जपेत् ॥ तीरे स्थित्वा जपेद्देवीं गायत्रीं वेदमातरम् । इति वचनबलाद्गायत्रीं जले कदाचिन्न जपेदित्यर्थः । संकटेषु **व्यासः**—यदि स्यात्क्लिन्नवासा वै वारिमध्यगतो जपेत् । अन्यथा तु शुचौ भूम्यां दर्भेषु सुसमाहितः ॥ जपेद्गायत्रीमिति शेषः । अत्र **हारीतः**—आर्द्रवासा जले कुर्यात्तर्पणाचमने जपम् । उपस्थानं न निर्गच्छेद्वर्जयेच्च प्रदक्षिणम् ॥ अतो जले गायत्रीजपनिषेधोऽसंकटविषयः । **योगः**—तिष्ठंश्चेदीक्षमाणोऽर्कमासीनः प्राङ्मुखो जपेत् । प्रागग्रेषु कुशाग्रेषु आसीनस्त्वासने शुभे ॥ आसीन इति मध्याह्नापरविषयम् । इदं चासनमशक्तविषयम्, शक्तस्त्वादित्याभिमुखश्चेत् स्थित एव जपेदित्यर्थः । सावित्र्यादिक्रियाः सर्वा आदित्याभिमुखश्चरेत् । देवालयसमीपे तु तमेवाभिमुखश्चरेत् ॥ इति स्मृतेः । जपभोजनहोमांश्च देवस्याभिमुखश्चरेत् । सावित्र्यास्तु जपं कुर्यादादित्याभिमुखः सुधीः ॥ इति **शाण्डिल्यवचनाच्च** । ध्यानविषये **विश्वामित्रः**—सुप्रभं सच्चिदानन्दं हृदये मण्डलेपि वा । ध्यायञ्जपेत्तदित्येतां निष्कामो मुच्यतेऽचिरात् ॥ एतां गायत्रीम्, हृदये मण्डलेपीत्युभयावस्थानोक्त्या "स यश्चायं पुरुषे, यश्चासावादित्ये, स एकः" इति श्रुत्युक्तध्यानार्थः प्रदर्शितः । सः नारायण एव । "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः । सर्वस्य चाहं हृदि संनिविष्टः । य एषोन्तरादित्ये हिरण्मयः पुरुषः । ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः" इत्यादिश्रुतिस्मृतिभ्यः । **सनकस्मृतावपि** चेदं सुस्पष्टम्—रश्मिज्वालासहस्राढ्यं मण्डलं विपुलं रवेः । तदन्तः शीतलाङ्गं तु सोमस्यापि तु मण्डलम् ॥ स्फुरत्स्फुलिङ्गमनलज्वालामालासहस्रकम् । तस्य मध्ये समासीनं तप्तहाटकसन्निभम् ॥ चतुरंगुलमात्राङ्गं शुकवक्त्रनिभाम्बरम् । रक्तनेत्राम्बरं रक्तपाणिपादनखं शुभम् ॥ शङ्खचक्रगदापाणिं श्रीवत्साङ्कितवक्षसम् । रत्नदामविलसन्मुक्ताछन्नहारोपशोभितम् ॥ किरीटकेयूरयुतं कटिसूत्रोपशोभितम् । एवं ध्यात्वा जपेन्नित्यं गायत्रीं नियतः शुचिः ॥ इति । किंच, यो देवः सवितास्माकम् । आदित्यमण्डले ध्यायेत्परमानन्दमव्ययम् । विष्णुं चतुर्भुजम् । इत्यादिकं चात्रानुसंधेयम् । एवं ध्यात्वा यथाशक्ति

जपित्वा आदित्यायार्घ्यं दत्त्वा उपतिष्ठेत । अत्र **व्यासः**—अथोपतिष्ठेदादित्यं क्षिप्त्वा पुष्पान्वितांजलिम् । आसत्येतीक्षयन्नर्कमुद्वयन्तमसस्परि ॥ उदुत्यं चित्रमित्येतत्तच्चक्षुरिति मन्त्रतः । हंसः शुचिषदित्येतत्सावित्र्या च विशेषतः ॥ अन्यैश्च वैदिकैर्मन्त्रैः सौरैः पापप्रणाशनैः । प्रदक्षिणं समावृत्य नमस्कुर्यात्ततः क्षितौ ॥ निष्पीड्य स्नानवस्त्रं वै द्विराचम्यार्चयेद्धरिम् । **पाद्मे**—प्रदक्षिणप्रणामांश्च युग्मानेव तु कारयेत् । अन्यथा कुरुते मोहाद्ब्रह्महत्यां स विन्दति ॥ **वासिष्ठे**—युग्मानेव प्रणामांश्च कारयेद्द्विजसत्तमः । प्रदक्षिणं च तद्वच्च नान्यथा सिद्धिमाप्नुयात् ॥ **चन्द्रिकायाम्**—ततः पुष्पाञ्जलिं दद्याद्भानवे चोर्ध्वबाहुकः । आदित्यमुपतिष्ठेत तन्मना नान्यमानसः ॥ अत्रोपस्थानमन्त्रेषु यथोपदेशं कार्यम् । **पितामहः**—आसत्याद्यृक्षुपूर्वे द्वे त्रिष्टुभौ कवयो विदुः । गायत्री तु तृतीया स्याच्चतुर्थी जगती स्मृता ॥ उष्णिक् तच्चक्षुरास्य चच्छन्द इत्युच्यते बुधैः । हिरण्यस्तूप इत्येष ऋषिर्देवोऽत्र भास्करः ॥ **भरद्वाजः**—अथोपतिष्ठेदादित्यमासत्येनेति मन्त्रतः । आसत्येनेति षडृचां हिरण्यस्तूप इत्यृषिः ॥ पूर्वे द्वे त्रिष्टुभौ पश्चाद्गायत्री जगती ततः । उष्णिक् त्रिष्टुबिरयुक्तानि छन्दांस्यर्कोऽधिदेवता ॥ अन्यत्सर्वं यथापूर्वं कर्म कुर्याद्द्विजोत्तमः । अन्यत् ऋष्यादिकम्, दिक्प्रणामादिकं प्रातःसंध्यावदित्यर्थः । **आश्वमेधिके**—जलवादाय स पुष्पाणि तोयान्यञ्जलिना द्विजः । प्रक्षिप्य प्रतिसूर्यं तु व्योममुद्रां प्रदर्शयेत् ॥ ऊर्ध्वबाहुस्ततो भूत्वा सूर्यमीक्षेदुपस्थितौ । तन्मण्डलस्थमाध्यायेत्तेजोमूर्तिं चतुर्भुजम् ॥ **योगयाज्ञवल्क्यः**—जपयज्ञो हि कर्तव्यः सर्ववेदप्रणीतकैः । पवित्रैर्विविधैश्चान्यैस्तथोपनिषदां गणैः ॥ अध्यात्मविद्या विविधा जप्तव्या जपसिद्धये । अन्यैश्च पावनैर्नित्यं देवतास्तवनादिभिः ॥ **विष्णुश्च**—स्नातश्च पवित्रपाणिर्यथाशक्ति जपेद्विशेषतः सावित्रीं पुरुषसूक्तं वा, नैताभ्यामधिकमस्तीति । अनेन जप्यान्तरप्रसङ्गो मुद्रितः । अथापि किंचिदुच्यते । अत्र **मनुः**—एकाक्षरं परं ब्रह्म प्राणायामः परं तपः । गायत्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते ॥ ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः । सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥ **वसिष्ठः**—सर्ववेदपवित्राणि वक्ष्याम्यहमतः परम् । एषां जपैश्च होमैश्च पूयन्ते नात्र संशयः ॥ अघमर्षणं देवकृतः शुद्धवत्यस्तरत्समाः । कूष्माण्डयः पावमान्यश्च दुर्गा सावित्र्यथैव च ॥ अभीषङ्गपदस्तोभः सामानि व्याहृतिस्तथा । वारुणानि च सामानि गायत्रं रैवतं तथा ॥ अब्लिङ्गा बार्हस्पत्यं च वाक्सूक्तं मध्वृचं तथा । शतरुद्रीयमथर्वशिरास्त्रिसुपर्णं महाव्रतम् ॥ गोसूक्तमश्वसूक्तं च इन्द्रशुद्धे च सामनि । त्रीण्याज्यदोहानि रथन्तरं च अग्नेर्व्रतं वामदेव्यं बृहच्च । एतानि जप्यानि पुनन्ति जन्तून् जातिस्मरत्वं लभते य इच्छेत् ॥ विष्ण्वाद्युक्तपुरुषसूक्तगायत्रीजपे दुर्बलबुद्धेरेतानि जप्यानि, बहुमन्त्रजपस्य मनस्तृप्तिकरत्वात् । अघमर्षणम् ऋतं चेत्याद्यास्तिस्रः, देवकृतः देवकृतस्यैनस इत्यादयः, शुद्धवत्यः एतोन्विन्द्रं स्तवाम इत्यादयः, तरत्समाः तरत्समन्दी धावतीत्याद्याश्चतस्रः, कूष्माण्डयः यद्देवा देवहेळनमित्यनुवाकत्रयम्, पावमान्यः पवमानः सुवर्जन इत्यनुवाकः, स्वादिष्ठया मदिष्ठयेत्यन्ये, यदन्ति यच्चेत्यपरे । दुर्गा सावित्री

जातवेदसे सुनवामसोममित्येका ऋक् । अभीपङ्गादयो रैवतान्ताः सामविशेषाः । अग्लिङ्गाः आपो हिष्ठेत्याद्यास्तिस्रः, बार्हस्पत्यम् यस्तस्तम्भ सहसा विजमो अन्तानित्येकादशर्चम्, वाक्सूक्तम् अहंरुद्रेभिर्वसुभिरित्यष्टर्चम्, शतरुद्रीयं नमस्ते रुद्र मन्यव इत्येकादशानुवाकाः, त्रिसुपर्ण-ब्रह्ममेतुमामित्यनुवाकत्रयम्, महाव्रतं नाम साम, गोसूक्तम् आगावो अग्मन्नित्यष्टर्चम्, अश्वसूक्तं मनो .मित्रो वरुण इति द्वादशर्चम्, इन्द्रशुद्धादयो बृहदन्ताः सामविशेषाः, एतानि पापक्षयार्थिना जप्यानि । येषां जपैश्च होमैश्च पूयन्त इत्युपक्रमात्, एतानि जप्यानि पुनन्तीत्युपसंहाराच्च, एते जपाः काम्याः । अत एव शिष्टा गायत्रीमात्रं जपन्ति, नित्यत्वात् प्रत्यवायस्मृतेश्च ॥ तथा **भरद्वाजः**-वेदाग्निकां परित्यज्य गायत्रीं ये द्विजाधमाः । पठन्ति वेदांस्तेषां तु भवेयुर्गर्दभस्वनाः ॥ द्विजस्य जप्यं ध्येयं च न गायत्र्याः परं परम् । सर्वप्रकाराल्लोकेषु त्रिषु सत्यं न संशयः ॥ **हारीतः**-गायत्रीं मातरं त्यक्त्वा पतते नात्र संशयः । योन्यमन्त्रपरो मूढः सर्वास्ता निष्फलाः क्रियाः ॥ गायत्र्या न परं जप्यं गायत्र्या न परं तपः । गायत्र्या न परं ज्ञानं गायत्र्या न परो जपः ॥ **संवर्तः**-तदित्यृचः समो नास्ति मन्त्रो वेदचतुष्टये । सर्वे यज्ञाश्च वेदाश्च दानानि च तपांसि च ॥ समानि कलयाप्याहुर्मुनयो न तदित्यृचः । **मनुः**-वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः । न ह्यस्याहुः परं धर्ममुपधर्मोन्य उच्यते ॥ ब्रह्माभ्यासेन चाजस्रमनन्तसुखमश्नुते । **वसिष्ठः**-ऋक्सामाथर्ववेदोक्तान् जपेन्मन्त्रान् यजूंषि च । जपित्वैवं ततः कुर्याद्देवर्षिपितृतर्पणम् ॥ **योगयाज्ञवल्क्यः**-जपेद्वेदादिमेकाग्रस्तटे बद्धाञ्जलिः शनैः। ब्रह्मयज्ञप्रसिद्ध्यर्थं ब्रह्मविद्यामथापि वा ॥ जप्त्वा वा प्रणवं शक्त्या ततस्तर्पणमाचरेत् । अत्र प्रातःकाले ब्रह्मयज्ञाकरणे माध्याह्निकानन्तरं तर्पणात्प्राक् ब्रह्मयज्ञः कार्यः । स चार्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः । वैश्वदेवावसाने वा नान्यदत्र निमित्ततः ॥ इति स्मृतेः । अत्र तर्पणीयेषु यथास्वशाखं व्यवस्था, यजुःशाखिनां तु काण्डऋषितर्पणं कार्यमिति प्रागेव निर्णीतम् । अत्र **विष्णुः**-स्वशाखाध्ययनं कृत्वा ततस्तर्पणमाचरेत् । इति । **विष्णुधर्मोत्तरे**-स्वशाखाध्ययनं विप्रो ब्रह्मयज्ञं प्रचक्षते । ब्रह्मयज्ञपरो विप्रो ब्रह्मभूयाय कल्पते ॥

## ❀ अथ देवपूजा ❀

अत्र **महोपनिषदि** श्रुतिः । धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं पूजयति स्म भक्त्या । अर्घ्यादिभिः पौरुषसूक्तमन्त्रैः समाप्नुयाद्विष्णुपदं महात्मा ॥ **कठवल्ल्याम्**-धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं सांख्ययोगादिगम्यम् । ज्ञात्वा विमुच्येत नरः समस्तैः संसारपाशैरिह चैव विष्णुः ॥ **अथर्वणि**-धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा । स्वरेण मन्त्रेण सदा हृदिस्थं परात्परं यन्महतो महान्तम् ॥ **ऋचि**-प्रवः पान्तमन्धसो धियायते महेशूराय विष्णवे चार्चत । **यजुषि**-भवामित्रो न शेव्यो घृतासुतिः,विभूतद्युम्न एवया उ सप्रथाः, अथा ते विष्णो विदुषा चिदर्ध्यः।

पृहन्ते विष्णो सुमतिं भजामहे । **श्रीनारसिंहे**–जलदेवं नमस्कृत्य ततो गच्छेद् गृहं पुनः । पौरुषेणैव सूक्तेन ततो विष्णुं समर्चयेत् ॥ **नारदश्च**–सर्वेषामेव लोकानां गुरुर्नारायणो हरिः । तस्य संपूजनं कार्यं सर्वपापहरं हि तत् ॥ **व्यासः**–निष्पीड्य स्नानवस्त्रं वै द्विराचम्यार्चयेद्धरिम् । न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम् ॥ तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् । तद्विष्णोरिति मन्त्रेण सूक्तेन पुरुषेण वा ॥ नैताभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि । **शौनकः**–शौनकोऽहं प्रवक्ष्यामि नित्यं विष्ण्वर्चनं परम् । प्रवः पान्तमन्धस इत्यर्धर्चविधानतः ॥ **पाद्मे**–पौरुषेणैव सूक्तेन प्रपूज्यं कमलासन । नारायणानुवाकेन विष्णुसूक्तेन वार्चयेत् ॥ **नारदः**–अभिषेकं ततश्चक्रुर्विष्णोर्मूर्ध्नि सुधामयैः । वैष्णवैरनुवाकैश्च श्रीसूक्तेन महर्षयः ॥ ततः क्षीराब्धिमथने सुधोत्पत्त्यनन्तरं, वैष्णवैरनुवाकैः सहस्रशीर्षा, अद्भ्यः संभृतः, सहस्रशीर्षं देवं, इति त्रिभिरनुवाकैः श्रीसूक्तेन–हिरण्यवर्णां हरिणीमिति सूक्तेन । एवं च एतैरनुवाकैर्विष्णुसूक्तेन श्रीसूक्तेन च विष्ण्वभिषेचनं कार्यम्, न पुंसूक्तमात्रेण । **श्रीविष्णुधर्मोत्तरे**–हविषाग्नौ जले पुष्पैर्ध्यानेन हृदये हरिम् । अर्चन्ति सूरयो नित्यं जपेन रविमण्डले ॥ **नारदः**–अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम् । प्रतिमास्वप्रबुद्धानां योगिनां हृदये हरिः ॥ अनेनाभिप्रायेण **हारीतः**–कुर्वीत देवतापूजां जपयज्ञादनन्तरम् । स्थण्डिले प्रतिमायां वा जलेऽग्नौ हृदयेऽपि वा ॥ स्थण्डिलादिष्वर्चनेनावश्यकार्ये तत्र तत्र विष्णुमावाह्य यजेदित्यर्थः । तथा **शाण्डिल्यः**–शरीरं निर्मलीकृत्य तीरे मृद्गोमयादिभिः । शुद्धावगाहनं कृत्वा द्विराचम्य यथाविधि ॥ ध्यायन् ब्रह्म जपेन्मौनी ततो वै ध्यानमाचरेत् । पौरुषेणैव सूक्तेन ततो विष्णुं समर्चयेत् ॥ आवाह्याग्नौ जगन्नाथं मनसाभ्यर्च्य शक्तितः । जुहुयात्काष्ठपुष्पान्नतिलक्षीरघृतादिकम् ॥ अतः स्वस्वाधिकारानुगुणं तत्र तत्र विष्णुं ध्यात्वा कुर्यादिति सिद्धम् । अकरणे प्रत्यवायमाह **व्यासः**–यो मोहादथ वालस्यादकृत्वा विष्णुपूजनम् । भुंक्ते स याति नरकान् सूकरेष्वभिजायते ॥ **श्रीभागवते**–गृहं श्मशानं तत्र विष्णुवर्जितं कथाविहीनाश्च गिरः शिवारुतम् । असञ्छवो दारयविनाकृतं वपुर्वदन्ति हि सम्यनिवेदितं विषम् ॥ **आश्वमेधिके**–विष्णुं ब्रह्मण्यदेवेशं भजध्वं पुरुषोत्तमम् । लोकनाथमनाद्यन्तं जगतः कारणं परम् ॥ नार्चयन्ति हि ये मूढाः परमात्मानमव्ययम् । ते यान्ति नरकान् घोरानक्षयान् पुरुषर्षभ ॥ एवं गृहे विष्ण्वर्चनस्यैव यद्वस्मृतिसिद्धत्वेपि, ततो गृहार्चनं कुर्यादभीष्टसुरपूजनम् । " अथातो महादेवस्य अहरहः परिचर्याविधिं व्याख्यास्यामः " अथवा देवमीशानम् । इति दक्षादिभिरुक्तत्वाद्गुरुभक्ततया रुद्रार्चनेपि पूजासाङ्कर्यं न कार्यम्, महाविरोधश्रुतेः । "यः कामयेत क्षत्राय च विशे च समदं दध्यामित्यैन्द्रस्यावद्यन् ब्रूयादिन्द्रायानुब्रूहीत्याश्राव्य ब्रूयान्मरुतो यजेति मारुतस्यावद्यन् ब्रूयान्मरुद्भ्योनुब्रूहीत्याश्राव्य ब्रूयादिन्द्रं यजेति स्व एवैभ्यो भागधेये समदं दधाति वित्र॰हाणारितष्ठन्त्येतामेव निर्वपेद्यः कामयेत कल्पेरन्निति यथादेवतमवदाय यथादेवतं यजेद्भागधेयेनैवैनान् यथायथं कल्पयाति कल्पन्त एव " इति । अतो द्रव्यमन्त्रपात्रैर्नवधादिसंकरो न कार्यः । **नारद**-

स्तु–स्नात्वा यथोक्तविधिना प्रयतः शुद्धमानसः । स्वशाखोक्तक्रियां कृत्वा हुत्वा चैवाग्निहोत्रकम् ॥ कुर्यादाराधनं विष्णोर्देवदेवस्य शार्ङ्गिणः । वेदेषु पौरुषं सूक्तमर्चितं गुह्यमुत्तमम् ॥ अनुष्टुभस्य सूक्तस्य च्छन्दस्तस्याधिदेवता । पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ॥ अत्र विशेषः–श्रीमत्पुरुषसूक्तस्य श्रीमन्नारायणो मुनिः । छन्दोनुष्टुप् पञ्चदशर्चा तिसृणां त्रिष्टुबन्ततः ॥ नारायणोस्य भगवान् परमात्मा तु देवता । भगवच्छास्त्रे प्रत्यृचमृषिभेद उक्तः–बृहस्पतिर्मनुर्दक्षः शौनकोत्रिश्च मुद्गलः । शातातपो वसिष्ठश्च याज्ञवल्क्यश्च नारदः ॥ गौतमश्च भरद्वाजः शुक्रगर्गोशनाङ्गिराः । व्यासः पराशरश्चैव ऋषयोष्टादश स्मृताः ॥ मत्स्यः कूर्मो वराहश्च नारसिंहश्च वामनः । रामो रामश्च रामश्च कृष्णः कल्की च ते दश ॥ श्रीवल्लभो हरिः शौरिरच्युतो धरणीधरः । जनार्दनो हृषीकेशो माधवश्च तथैव च ॥ देवा अष्टादश प्रोक्ता न्यासं वक्ष्ये यथाक्रमम् । प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ॥ तृतीयां वामपादे तु चतुर्थी दक्षिणे पदे । पञ्चमीं वामजङ्घायां दक्षिणस्यां तथोत्तराम् ॥ सप्तमीं वामऊर्व्यां तु दक्षिणस्यां तथाष्टमीम् । नवमीं नाभिदेशे तु दशमीं हृदि विन्यसेत् ॥ एकादशीं कण्ठदेशे द्वादशीं वामबाहुके । त्रयोदशीं दक्षिणे तु तथास्ये तु चतुर्दशीम् ॥ अक्ष्णोः पञ्चदशीं न्यस्य न्यसेन्मूर्धनि षोडशीं । आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमम् ॥ द्वितीययासनं दद्यात्पाद्यं दद्यात्तृतीयया । चतुर्थ्यार्घ्यं प्रदातव्यं पञ्चम्याचमनीयकम् ॥ षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च । यज्ञोपवीतमष्टम्या नवम्या गन्धमेव च ॥ दशम्या पुष्पदानं स्यादेकादश्या तु धूपकम् । द्वादश्या तु तथा दीपं त्रयोदश्या चरुं तथा ॥ चतुर्दश्या नमस्कुर्यात्पञ्चदश्या प्रदक्षिणम् । षोडश्योद्वासनं कुर्याच्छेषकर्माणि पूर्ववत् ॥ स्नानवस्त्रोपवीतेषु चराचाचमनीयकम् । पुनः षोडशभिर्मन्त्रैर्दद्यात्पुष्पाणि षोडश ॥ तच्च सर्वं जपेद्भूयः पौरुषं सूक्तमुत्तमम् । ततः प्रदक्षिणं कृत्वा नारायणमनामयम् ॥ शङ्खचक्रगदापाणिं नत्वा विष्णुं समापयेत् । षण्मासात्सिद्धिमाप्नोति ह्येवमेव समर्चयन् ॥ इति । पाद्मे–उपचारानहं वक्ष्ये द्वात्रिंशत्संख्यया तथा । आवाहनासने चैव ह्यर्घ्यं पाद्यमनन्तरम् ॥ आचामो मधुनासश्च पादुके दन्तधावनम् । जिह्वानिर्लेखनं चैव धाव्या स्नानं हरिद्रया ॥ वस्त्रं चैवोत्तरीयं च गन्धलेपश्च भूषणम् । माल्यं चैव महादर्शदर्शनं धूपदीपकौ ॥ मात्रादानं, रथच्छत्रे चामरं तूर्यघोषणम् । मधुपर्कप्रापणे च निवेदनमनन्तरम् ॥ भक्ष्यं पानं नागवल्ली विसर्जनमथाचरेत् । उपचारैः षोडशभिरात्मनः शक्त्यपेक्षया ॥ आवाहनासने पूर्वमर्घ्यं पाद्यमनन्तरम् । उपस्पर्शस्तथा स्नानं वस्त्रं यज्ञोपवीतकम् ॥ गन्धालेपस्तथा भूषा माल्यं धूपप्रदीपकौ । मधुपर्कप्रापणे च विसर्जनमथान्तिमम् ॥ अर्घ्यमाचमनं चैव हविस्ताम्बूलमेव च । दक्षिणे देवदेवस्य हस्ते दद्याद्विचक्षणः ॥ शालिग्रामशिला यत्र यत्र द्वारवती शिला । उभयोः सङ्गमो यत्र तत्र मुक्तिर्न संशयः ॥ बोधायनः–अथातो महापुरुषस्याहरहः परिचर्याविधिं व्याख्यास्यामः, इत्युपक्रम्य मन्त्रभेदेनावाहनाद्युपचारानुक्त्वा " प्रतिमास्थानेष्वप्स्वग्नावावाहनविसर्जनवर्ज्यं सर्वं समानम् " इत्याह । तत्र नित्यसन्निहितत्वादावाहनोद्वासन-

द्यते ॥ अतः स्त्रीशूद्रपूजितं तन्निवेदितं च स्त्रीशूद्रयोरेवार्हं न वैदिकानामिति । किं च–जपस्तपस्तीर्थसेवा प्रव्रज्या मन्त्रसाधनम् । देवताराधनं चैव स्त्रीशूद्रपतनानि षट् ॥ इति वचनं वैदिकाभिप्रायम् । **नारदः**–वैदिकं ब्राह्मणानां स्यात् राज्ञां वैदिकतान्त्रिकम् । तान्त्रिकं वैश्यशूद्राणां सर्वेषां तान्त्रिकं तु वा ॥ इति स्त्रीशूद्रयोस्तान्त्रिकाभ्यनुज्ञानात् ॥

## ❀ धनुर्मासपूजा ❀

मार्गशीर्षार्चनविषये किंचिदुच्यते । **ज्योतिःशास्त्रे भास्करीये**–अयनं दक्षिणं रात्रिरुत्तरं तु दिवा भवेत् । दैवतं तदहोरात्रं तत्त्रिंशन्मास उच्यते ॥ तद्दिनस्य उषःकालं चापमासं विदुर्बुधाः । तस्मात्सर्वप्रयत्नेन चापमासे दिने दिने ॥ उषःकाले तु संप्राप्ते बोधयित्वा जगत्पतिम् । समभ्यर्च्य भजेद्विष्णुं जनानां दोषशान्तये ॥ **ब्रह्माण्डे**–आषाढादिषु मासेषु शयानं कार्तिकावधि । चापं गते दिवानाथे उत्थाप्य शयनाद्धरिम् ॥ सविष्णुलक्षणैः स्तोत्रैर्बहुभिः परिगीयते । उषःकाले तु संप्राप्ते अर्चयित्वा जनार्दनम् ॥ उपचारैः षोडशभिर्मुद्गान्नं च निवेदयेत् । **आदित्यपुराणे**–चापं गते ततः सूर्ये प्रत्यूषे स्नानमाचरेत् । अर्चयेत्तु जगन्नाथं यावत्सूर्योदयात्पुरा ॥ ततः प्रभातसमये ह्यर्घ्यं प्रक्षिप्य वैष्णवः । गायत्रीं च ततो जप्त्वा ह्युपतिष्ठेत भास्करम् ॥ अतः प्रागुदयादेवार्चनं विष्ण्वर्चानन्तरमेव संध्योपासनमिति सिद्धम् । **श्रीभागवते**–कोदण्डस्थे सवितरि प्रत्युषःपूजनाद्धरेः । सहस्राब्दार्चनफलं दिनेनैकेन लभ्यते ॥ **वैखानसे**–ब्राह्मे मुहूर्ते संप्राप्ते रवौ धनुषि संस्थिते । स्नानं कृत्वा नृसूक्तेन षोडशैरुपचारकैः ॥ नगरग्रामरक्षार्थमर्चयित्वा श्रियः पतिम् । सहस्रवार्षिकी पूजा दिनेनैकेन लभ्यते ॥ **पारमेष्ठ्ये**–एकादश्यां सिते पक्षे चापे तिष्ठति भास्करे । उत्सवं कारयेद्धीमान् वेदपारायणैः सह ॥ **वासिष्ठे**–चापे स्थिते उषःकाले रवौ प्रतिदिनं हरिम् । स्नात्वा गृहस्थः शुद्धात्मा समभ्यर्च्य निवेदयेत् ॥ गृहस्थग्रहणमन्येषामप्युपलक्षणम्, चापस्थित्यवलम्बनेनैवार्चनविधानाद्वृश्चिकमार्गशीर्षव्युदासः । अत्र–" तदस्य प्रियमभिपाथो अश्याम्, नरो यत्र देवयवो मदन्ति, उरुक्रमस्य स हि बन्धुरित्था, विष्णोः पदे परमे मध्व उत्सः॥" इति श्रुत्यर्थ उक्तः । अयमत्र श्रुत्यर्थः–अस्य विष्णोः प्रियं तत्पाथः तन्निवेदितमन्नादिकमश्याम्, देवयवो नरः देवाराधका जनाः, यत्र मदन्ति यस्मिन्निवेदिते हृष्यन्ति, निवेदितं तीर्थप्रसादादिकं स्वीकृत्य हृष्टा भवन्तीत्यर्थः, इत्था इत्थं प्रतिदिनं वर्तमानः, उरुक्रमस्य विष्णोः, बन्धुः स एवातीवाभिमतः, परमे सर्वोत्कृष्टे, मध्वे मधुवद्भोग्यतमे विष्णोः पदे, उत्सः उत्सुकः, इति ॥ त्वयोपभुक्तस्रगन्धवासोलंकारचर्चिताः । उच्छिष्टभोजिनो दासास्तव मायां तरेमहि ॥ इत्युक्तरीत्या परमपदोत्सुको वर्तेतेत्यर्थः । **शैवे** च–चापराशौ स्थिते सूर्ये उषःकाले दिने दिने । अभिषेकं ततः कुर्याद्रौद्रमन्त्रेण मन्त्रवित् ॥ अर्कपुष्पैश्च बिल्वैश्च पूजयित्वा महेश्वरम् । नैवेद्यं च ततः कुर्याल्लोकसंहारशान्तये ॥ कोदण्डस्थे सवितरि स्तोत्रैः संबोध्य केशवम् । उषःकाले,

वर्ज्यमित्युक्तम् । पाद्यादिवदुपचाराभिप्राये न विरोधः । पूजानन्तरं **योगयाज्ञवल्क्यः**-एवं संपूज्य देवेशं क्षणं ध्यात्वा निरञ्जनम् । ततोवलोकयेदर्कं हंसः शुचिषदित्यृचा ॥ स याति ब्रह्मणः स्थानं स्वात्वेक्षेतानया तु यः । **श्रीविष्णुमन्दिरे**-हविर्दानं त्रिकाले तु उत्तमोत्तममुच्यते । द्वयोश्च मध्यमं प्रोक्तमेककालेऽधमं हविः॥ **श्रीविष्णुधर्मोत्तरे**-विष्णुपूजाविहीनस्य दत्तं चेष्टं हुतं श्रुतम् । तपश्च व्यर्थतां याति प्रेतालंकारवद्द्विज ॥ मातृवत्परिरक्षन्तं सृष्टिसंहारकारणम् । यो नार्चयति वै विष्णुं सोक्षय्यं नरकं व्रजेत् ॥ अत्र कारणत्वोक्त्या "कश्च ध्येयः कारणं तु ध्येयः" इति श्रुत्यर्थ उक्तः । **नारायणीये**-तं देवा ऋषयश्चैव नानातनुसमाश्रिताः । भक्त्या संपूजयन्त्येनं गतिं चेषां ददाति सः ॥ **श्रीविष्णुधर्मोत्तरे**-युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः । पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम ॥ शक्रः क्रतुशतेनेत्थमाराध्य गरुडध्वजम् । देवेन्द्रत्वं गतस्तस्मान्नान्यः पूज्यतमः क्वचित् ॥ देवत्वं मनुजाः केचिद्गन्धर्वत्वमथापरे । यक्षत्वमथ सिद्धत्वमाराध्यापुर्जनार्दनम् ॥ **एवमितिहासोत्तमे च**-संस्मृतः पूजितो वापि यः पुंसां भवहानिदः । तमाराधय गोविन्दं यदीच्छसि परां गतिम् ॥ तथा मार्कण्डेयं प्रति रुद्रः-मुहूर्तं स्थीयतां तावन्मार्कण्डेयात्र सुव्रत । करोम्याराधनं यावद्देवदेवस्य शार्ङ्गिणः ॥ किमाराध्यः परो देवस्तवाप्यस्ति जगत्पते । त्वमेव सर्वभूतानां पूज्यश्चेति मतिर्मम ॥ आराध्यो भगवान् विष्णुरेक एव मयाच्युतः । आराधय हृषीकेशं यदीच्छसि परां गतिम् ॥ पाद्मे पार्वतीं प्रति रुद्रः-कैलासशिखरे रम्ये विष्णुमाराध्य भक्तितः । उपविष्टस्ततो भोक्तुं पार्वतीं शंकरोऽब्रवीत् ॥ आराधयामि देवेशि वासुदेवं सनातनम् । इत्यादि । मार्कण्डेये **उमारुद्रसंवादे**-नित्यमर्चयसे देव कं देवमधिकं तव । यस्मान्मानसमव्यग्रं कृत्वा त्रिभुवनेश्वर ॥ जपहोमनमस्कारैस्तं वदस्व तथा मम । शृणुष्व त्वं महाभागे यथा नित्यं नमाम्यहम् ॥ अज्ञानार्णवमग्नानां सर्वेषामात्मनामयम् । विष्णुर्धर्मोडुपः श्रीमानुत्तारार्थं उदाहृतः ॥ इति । तस्माद्विष्णुं नित्यमर्चयामीत्युत्तरं सिद्धम् । **इतिहाससमुच्चये**-ब्रह्मादयः सुराः सर्वे विष्णुमाराध्य ते पुरा । स्वं स्वं पदमनुप्राप्ताः केशवस्य प्रसादतः ॥ **श्रुतिश्च**-अस्य देवमीढुषो वयाविष्णोरेषस्य प्रभृतयेहाविभिः । विन्देद्धि रुद्रो रुद्रीयं महित्वामिति । एवं तव श्रिये मरुत इत्यादिषु च विष्णुप्रसादेन रुद्रस्योत्कर्षादिकमिति स्पष्टम् । क्वचिद्विष्णो रुद्रानुधावनं रुद्रप्रार्थनया रुद्रोत्कर्षापादनार्थमिति । **श्रीवाराहपुराणादौ**-एवमुक्तः पुनर्वाक्यमुवाचोमापतिर्मुदा । अन्यं देहि वरं विष्णो प्रसिद्धं सर्वजन्तुषु ॥ मर्त्यो भूत्वा भवानेव मामाराधय केशव । मां वहस्व च देवेश वरं मत्तो गृहाण च ॥ येनाहं सर्वदेवानां पूज्यात्पूज्यतमो भवेत् । इत्यादिषु स्पष्टम् । भवेयमित्यर्थः । **महाभारते**-ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः । अर्चनीयश्च सेव्यश्च नित्ययुक्तैः स्वकर्मभिः ॥

## ❀ स्त्रीशूद्राराधितविष्ण्वादिवन्दननिषेधः ❀

स्त्रीशूद्रपूजितं लिङ्गं विष्णुं वापि नमेत्तु यः । त्रिःसप्तकुलसंयुक्तो नरकं प्रतिप-

यते ॥ अतः स्त्रीशूद्रपूजितं तन्निवेदितं च स्त्रीशूद्रयोरेवार्हं न वैदिकानामिति । किं च-जपस्तपस्तीर्थसेवा प्रव्रज्या मन्त्रसाधनम् । देवताराधनं चैव स्त्रीशूद्रपतनानि षट् ॥ इति वचनं वैदिकाभिप्रायम् । **नारदः**-वैदिकं ब्राह्मणानां स्यात् राज्ञां वैदिकतान्त्रिकम् । तान्त्रिकं वैश्यशूद्राणां सर्वेषां तान्त्रिकं तु वा ॥ इति स्त्रीशूद्रयोस्तान्त्रिकाभ्यनुज्ञानात् ॥

## ❀ धनुर्मासपूजा ❀

मार्गशीर्षार्चनविषये किंचिदुच्यते । **ज्योतिःशास्त्रे भास्करीये**-अयनं दक्षिणं रात्रिरुत्तरं तु दिवा भवेत् । दैवतं तदहोरात्रं सत्रिंशन्मास उच्यते ॥ तद्दिनस्य उषःकालं चापमासं विदुर्बुधाः । तस्मात्सर्वप्रयत्नेन चापमासे दिने दिने ॥ उषःकाले तु संप्राप्ते बोधयित्वा जगत्पतिम् । समभ्यर्च्य भजेद्विष्णुं जनानां दोषशान्तये ॥ **ब्रह्माण्डे**-आषाढादिषु मासेषु शयानं कार्तिकावधि । चापं गते दिवानाथे उत्थाप्य शयनाद्धरिम् ॥ सविष्णुलक्षणैः स्तोत्रैर्बहुभिः परिगीयते । उषःकाले तु संप्राप्ते अर्चयित्वा जनार्दनम् ॥ उपचारैः षोडशभिर्मुद्गान्नं च निवेदयेत् । **आदित्यपुराणे**-चापं गते ततः सूर्ये प्रत्यूषे स्नानमाचरेत् । अर्चयेत्तु जगन्नाथं यावत्सूर्योदयात्पुरा ॥ ततः प्रभातसमये ह्यर्घ्यं प्रक्षिप्य वैष्णवः । गायत्रीं च ततो जप्त्वा ह्युपतिष्ठेत भास्करम् ॥ अतः प्रागुदयादेवार्चनं विष्ण्वर्चनानन्तरमेव संध्योपासनमिति सिद्धम् । **श्रीभागवते**-कोदण्डस्थे सवितरि प्रत्युषःपूजनाद्धरेः । सहस्राब्दार्चनफलं दिनेनैकेन लभ्यते ॥ **वैखानसे**-ब्राह्मे मुहूर्ते संप्राप्ते रवौ धनुषि संस्थिते । स्नानं कृत्वा नृसूक्तेन षोडशैरुपचारकैः ॥ नगरग्रामरक्षार्थमर्चयित्वा श्रियः पतिम् । सहस्रवार्षिकी पूजा दिनेनैकेन लभ्यते ॥ **पारमेष्ठ्ये**-एकादश्यां सिते पक्षे चापे तिष्ठति भास्करे । उत्सवं कारयेद्धीमान् वेदपारायणैः सह ॥ **वासिष्ठे**-चापे स्थिते उषःकाले रवौ प्रतिदिनं हरिम् । स्नात्वा गृहस्थः शुद्धात्मा समभ्यर्च्य निवेदयेत् ॥ गृहस्थग्रहणमन्येषामप्युपलक्षणम्, चापस्थित्यवलम्बनेनैवार्चनविधानाद्वृश्चिकमार्गशीर्षव्युदासः । अत्र-" तदस्य प्रियमभिपाथो अश्याम्, नरो यत्र देवयवो मदन्ति, उरुक्रमस्य स हि बन्धुरित्था, विष्णोः पदे परमे मध्व उत्सः" इति श्रुत्यर्थ उक्तः । अयमत्र श्रुत्यर्थः-अस्य विष्णोः प्रियं तत्पाथः तन्निवेदितमन्नादिकमश्याम्, देवयवो नरः देवाराधका जनाः, यत्र मदन्ति यस्मिन्निवेदिते हृष्यन्ति, निवेदितं तीर्थप्रसादादिकं स्वीकृत्य हृष्टा भवन्तीत्यर्थः, इत्था इत्थं प्रतिदिनं वर्तमानः, उरुक्रमस्य विष्णोः, बन्धुः स एवातीवाभिमतः, परमे सर्वोत्कृष्टे, मध्वे मधुवद्भोग्यतमे विष्णोः पदे, उत्सः उत्सुकः, इति ॥ त्वयोपभुक्तस्रग्गन्धवासोऽलंकारचर्चिताः । उच्छिष्टभोजिनो दासास्तव मायां तरेमहि ॥ इत्युक्तरीत्या परमपदोत्सुको वर्ततेत्यर्थः। **शैवे** च-चापराशौ स्थिते सूर्ये उषःकाले दिने दिने । अभिषेकं ततः कुर्याद्रौद्रमन्त्रेण मन्त्रवित् ॥ अर्कपुष्पैश्च बिल्वैश्च पूजयित्वा महेश्वरम् । नैवेद्यं च ततः कुर्याल्लोकसंहारशान्तये ॥ कोदण्डस्थे सवितरि स्तोत्रैः संबोध्य केशवम् । उषःकाले

समभ्यर्च्य मुद्गान्नं च निवेदयेत् ॥ पुराणान्तरे च–चापमासे तु संप्राप्ते स्नानं कृत्वारुणोदये । वासुदेवं समभ्यर्च्य शर्करान्नं निवेदयेत् ॥ इति । प्रकृतमुच्यते । पुराणे–विष्ण्वर्चनं ततः कुर्याद्गन्धमाल्यैः सुगन्धिभिः । गुग्गुलुप्रमुखैर्धूपैर्दीपैर्वाद्यैश्च नर्तनैः ॥ सुसंस्कृतान्नमाज्याढ्यं दधिक्षीरमधूनि च । फलमूलव्यञ्जनानि मोदकांश्च निवेदयेत् ॥ ततः माध्याह्निकानन्तरम् । व्यासः–निवेदयीत चात्मानं विष्णावमलतेजसि । तदात्मा तन्मनाः शान्तस्तद्विष्णोरिति मन्त्रतः ॥ शौनकः–दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा । अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥ अन्यत्पूर्णादपां कुम्भादन्यत्पादावनेजनात् । अन्यत्कुशलसंप्रश्नात् न चेच्छति जनार्दनः ॥ विष्णुरहस्ये–भक्त्या दत्तं फलं पुष्पं पत्रं दूर्वाकुरं जलम् । अचिरात्प्रतिगृह्णाति भक्तिग्राह्यो हि केशवः ॥ शाण्डिल्यः–न शब्दयेत्पात्रसंघममुना नार्द्रयेन्महीम् । न हुंकुर्यान्न वा जल्पेद्वशी मौन्यर्चयेद्धरिम् ॥ त्रिसंध्यं कारयेद्बालान् प्रणामं देवपादयोः । पुत्रः प्रेष्यस्तथा शिष्य इत्येवं च निवेदयेत् ॥ वैशेषिके तु कुर्वीत दिवसेषु विशेषवित् । पाकं पायसपूर्वाणां सर्वेषां वा यथाबलम् ॥ संक्रान्तिर्जन्मनक्षत्रं श्रवणं द्वादशीद्वयम् । पर्वद्वयं समुद्दिष्टं सविशेषक्रियाविधौ ॥ चन्द्रसूर्योपरागे च प्रादुर्भावदिने हरेः । मासर्क्षेषु च पुण्येषु विशेषाराधनं विदुः ॥ दुर्निमित्ते च दुःस्वप्ने संजाते च महाभये । आगतेषु च भक्तेषु कुर्याद्वैशेषिकीः क्रियाः ॥ पाद्मे–विष्णोर्भागवतैरेव पञ्चरात्रपरायणैः । पूजा कार्या न सामान्यदेवतामात्रपूजकैः ॥ शालिग्रामशिलायास्तु न च संप्रोक्षणं स्मृतम् । न प्रतिष्ठा विधातव्या न चैवावाहनादिकम् ॥ शालिग्रामशिला यत्र पूज्यते भगवन्मयैः । तद्देशे योजनादर्वाङ्मृतो निर्वाणमश्नुते ॥ द्वारवत्याश्च शिलया शालिग्रामशिला समा । श्रीविष्णुरहस्ये–इति विष्ण्वर्चनं ये तु प्रकुर्वन्ति नरा भुवि । ते यान्ति शाश्वतं विष्णोरनन्तपदमव्ययम् ॥

## ❀ नैवेद्यनियमः ❀

अथ निवेदनार्हानर्हपदार्थविषये किंचिदुच्यते । अत्र मरीचिः–अथ हविर्विधिं वक्ष्ये वैणुकान्[1] यवान् षाष्टिकान् नीवारान् प्रियंगून् शालिभेदानन्यान् व्रीहीन्याप्येकजातीयांश्चतुर्वर्णैरेवानयेदेतेषां पूर्वं पूर्वं श्रेष्ठं तस्माद्वरककोद्रवादिकुधान्यानि प्रतिलोमानि, तानि च वर्जयेत्, कदलीचूतपनसनारिकेलतिन्त्रिणीकारवल्लीव्याघ्रीशिम्बभेदबृहतीभेदसिंहीव्याघ्रनखीकर्कन्धूर्वारुककूश्माण्डकार्कोटकानि, सूरणकन्दक्षुद्रकन्दमहाकन्दवल्लीकन्दशृङ्गिबेरोत्पलकन्दपिण्डीतकशाकुटकन्दानि च मरीचसर्षपाणि मुद्गाढककुलित्थतिलमाषमसूरकादीनि, शाकेषु जीवन्तीक्षारस्वरक्तबाष्पाणि चान्यानि भक्ष्याणीति मन्वाद्यैरुक्तानि यथालाभमाहरेत्, कोशातकीमलाबुं च विशेषेण वर्जयेदिति । भृगुः–अत ऊर्ध्वं प्रवक्ष्यामि हविष्पाकविधिक्रमम् । वरकं कोद्रवादीनि वर्जयेत्तु विचक्षणः ॥ कुलित्थजातिभेदं च प्रियंगुं चैव वर्जयेत् । सूरणद्वयकन्दं च लशुनं हिंगुमेव च ॥ गृञ्जनादिकशाकांश्च वर्जयेत्तु विचक्षणः । आरनालद्वयं चैव कोशातक्यादि वर्जयेत् ॥ शर-

---

[1] वैणुकादीनां भारान्तो अर्थः मन्थान्ते द्रष्टव्यः ।

स्य रक्तवाष्पं च शाकेषु ग्राह्यमुच्यते । कन्दस्य शाकुटैर्भेदैः सर्वं ग्राह्यमुदीरितम् ॥ बिम्बालकफलादीनि वर्जयेदिति केचन । उत्पलत्रयकन्दं च कुमुदद्वयकं तथा ॥ एषां कन्दं तु न ग्राह्यमिति काश्यपचोदितम् । भेदैश्च बृहती सर्वं ग्राह्यमित्युच्यते बुधैः ॥ भेदैस्तु कारवल्यादि सर्वं ग्राह्यमितीरितम् । कन्दं पिण्डीतकं चैव क्षुद्रकन्दं तथैव च ॥ महाकन्दादिकं कन्दमाहरेत विचक्षणः । सहकारश्च तद्भेदैस्तथैव पनसद्वयम् ॥ कदल्यादि तु भेदैश्च गृहीयात्तु प्रयत्नतः । कूष्माण्डोर्वारुके चैव सिंही व्याघ्री तथैव च ॥ कार्कोटकादि संग्राह्यं कलंजादीनि वर्जयेत् । यथोक्तं वैदिकाचारं यथोक्तं द्रव्यमाहरेत् ॥ आढकक्षीरसंयुक्तमाढकार्धजलैर्युतम् । गुडं पलं च निक्षिप्य तण्डुलैराढकैर्युतम् ॥ पायसं पाचितं कुर्याल्लवणं तत्र योजयेत् । इति । कोद्रवादिरयादिशब्दात् यावनालादय उच्यन्ते । यस्यामन्तः कुण्डिकायां त्रिफला मिश्रिता भवेत् । तस्यास्तु काञ्जिका ग्राह्या नेतरस्याः कदाचन ॥ इति विज्ञानेश्वरोक्तमापदि स्वार्थे न देयाहमित्यर्थः । आढकं मागधप्रस्थचतुष्टयम्, लवणमिति केवलक्षीरयोगे दोषः, न पायस इत्यर्थः । धान्यानामपि सर्वेषां कृष्णधान्यं विवर्जयेत् । अथवा न्यायलब्धं च धान्यं शुद्धं समाहरेत् ॥ शुद्धं कृष्णं धान्यं ग्राह्यमित्यर्थः । त्रिवर्षातीतधान्यानि न प्रशस्तानि वैदिके । तण्डुलानपि सर्वांश्च मासादूर्ध्वं विवर्जयेत् ॥ तण्डुलानां शतप्रस्थं प्रभूतमिति कीर्तितम् । सहस्रप्रस्थसंयुक्तं महाहविरिति स्मृतम् ॥ शुद्धैस्तु तण्डुलैस्तोयैः पक्वं शुद्धान्नमुच्यते । मृण्मये तु नवे पात्रे पाचनं श्रेष्ठमुच्यते ॥ अलाभे लोहपात्रे वा पाचयेत विधानतः । मृद्भाण्डेषु पुराणेषु पचनं नैव कारयेत् ॥ द्रोणार्धादधिकं यत्तदेकपात्रे न पाचयेत् । अथवा पाचयेद्भाण्डे चतुःप्रस्थविधानतः ॥ उद्धारेणैव शुद्धेन प्राङ्मुखो वाप्युदङ्मुखः । पचेद्व्रीहीन् सर्वाणि क्रमादस्कन्दयन् क्वचित् ॥ देवाःस्वस्कन्नमश्नन्ति तानि सर्वं विवर्जयेत् । कदलीजातयः सर्वाश्चूतं च पनसद्वयम् ॥ उर्वारुकं च बृहती क्षुद्रा च बृहती तथा । कारवल्लीत्रयं सिंही कर्कन्धूर्बेसरी तथा ॥ गृध्रनखी च कूष्माण्डं कार्कोटं तिन्त्रिणीफलम् । नारिकेलमलकं च फलान्येतानि चाहरेत् ॥ कोशातकीमलाबुं च विशेषेण विवर्जयेत् । उत्पलस्य च कन्दं च वल्लीनां कन्दमेव च ॥ क्षुद्रकन्दं महाकन्दं कन्दं पिण्डीतमेव च । आर्द्रकं जीरकं चैव मरीचं सर्षपं तथा ॥ राजमाषं महामाषं श्यामाकं कृष्णयावकम् । माषमुद्गं महामुद्गं निष्पावं तिलतिल्लकौ ॥ क्षारस्य रक्तवाष्पं च शाकेषु ग्राह्यमेव च । हविष्याणीति मन्वाद्यैः प्रोक्तान्यन्यानि चाहरेत् ॥ आहृत्य क्षालयित्वा तु पृथक्पात्रे यथाविधि । मरीचजीरकैर्युक्तं सुगन्धि सरसं शुभम् ॥ शाकौ द्वौ त्रीस्तथा सम्यक् चतुरो वा ततोऽधिकान् । विभवानुगुणं सम्यगुपदेशान् पचेत्क्रमात् ॥ फलानि चूतकदलीपनसानां समाहरेत् । सुपक्वानि च शुद्धानि यथालाभं निवेदयेत् ॥ सूपं च सगुडं चैव यथाविभवमाचरेत् । स्नात्वा संध्यामुपास्यैव तर्पयित्वा विधानतः ॥ ब्रह्मयज्ञं च कृत्वैव विष्णोरर्चनमाचरेत् । प्रातरावाहयेद्देव त्रिषु कालेषु चार्चनम् ॥ आचरेदन्त्यवेलायामुद्वासनमिति स्थितिः । हविष्काले विहीनं चेन्महादोषो भविष्यति ॥ तस्मात्सर्वप्रयत्नेन पूजयेद्धविषा युतम् । तदभावे तु सर्वत्र पुष्पयुक्तं जलं दिशेत् ॥ इति मनुहारीतयमाः ।

अथ वेति शाल्याद्यभावे शुद्धं कृष्णं धान्यं ग्राह्यमित्यर्थः । अन्यानि कोद्रवादीनि, उर्वारुकं उर्वाफलसदृशम्, यत् पक्वं सत्स्वयमेव वृन्तात् श्लथं भवति । उक्तानि नीवारफलमूलानि वन्यानि, सगुडमिति फलमूलाद्युपलक्षणम् । पाद्मे–हविर्योग्या याज्ञियाः स्युर्धान्यभेदांस्त्यजेदिमान् । नीचैर्दत्तांस्तथा स्पृष्टान् पतितैः प्रतिलोमजैः ॥ आशौचवद्भिरपरैरपक्वाः कलमादयः । शस्यन्ते चरुपाकेषु पक्वाश्च तदलाभतः ॥ चातुर्वर्ण्यैरुपहृतास्तण्डुला दोषवर्जिताः । अखण्डिताः खण्डिता वा साधनैर्निष्फलीकृताः ॥ पक्वाज्जलं विनिस्राव्य सिक्त्वाज्येन चरुं पुनः । यद्वा तूष्णीं साधयेयुरुपदंशांश्च चोदितान् ॥ फलमूलादि तत्रादौ फलानि कदलीफलम् । आम्रं पनसमूर्वारुं बृहतीं कर्करीमपि ॥ कारवल्लीमलाबुं च कूष्माण्डं तिन्त्रिणीमपि । करवन्तीं च निष्पावं गवाक्षं त्रपुसं तथा ॥ मुद्गभेदांश्च निर्दोषान् सदोषान् परिवर्जयेत् । घ्रातं लालाजलस्पृष्टममेध्यप्रभवं तथा ॥ पदा स्पृष्टं च फलितमकाले चाशुचिस्थितम् । भुक्तशिष्टं तथास्पृश्यस्पृष्टं दत्तावशिष्टकम् ॥ वर्ज्यं वल्लीत्रयीकन्दं सूरणद्वयमुत्पलम् । कुमुदाद्वितयं चैव हविर्योग्यं चतुर्मुख ॥ जीवन्ती वास्तुकं शाकं कारवल्लीदलं तथा । तुम्बीदलं च बीजं च शिम्बमुद्गदलानि च ॥ शाकिनीं शतपर्वाणमभ्रं चाश्वासनन्दनीम् । आगस्त्यं शाकुटं शाकं विहितं ब्राह्मणस्य च ॥ शाकमूलानि चान्यानि गृह्णीयादनिषेधितान् । सर्षपैर्जीरकैर्हिंगुकालशाकविमिश्रितैः ॥ नारिकेलफलैराज्यैर्यथायोगं विमिश्रितैः । संस्कार्यं व्यञ्जनं यूपयुतं वियुतमेव वा ॥ त्वचापेतं च कुल्माषं कुर्याद्वाथ यथोचितम् । आम्रादीनि च शुष्काणि शुद्धानि फलतिन्त्रिणीम्॥ मिश्रितं पचनीयानि यथा लवणवासितम् । अंकुराण्यपवित्राणि वस्तूनां कमलासन ॥ शृङ्गाटं लशुनं शिग्रुं नालिकासुनिषण्णकम् । शोभाञ्जनं रक्तवाष्पं ग्रामपुष्पं त्रिवर्णकम् ॥ द्रोणपत्रं लिलिङ्गं च तण्डुलीयं तपस्विनीम् । कोशातकीयं वर्ज्यानि फलेषु त्याज्यमुच्यते॥ छागं च लशुनं तालफलमूले पटोलिका । बिम्बकुम्भाण्डनारन्दफलानि परिवर्जयेत् ॥ अन्यानि च निषिद्धानि वर्जयेत्कमलासन । कलमाः नीवारभेदाः, घ्रातं गोमहिष्यादिभिरिति शेषः । वर्ज्यमित्युत्तरेण संबन्धः । अमेध्यप्रभवम् अत्र बोधायनः–अमेध्येषु च ये वृक्षा उप्ताः पुष्पफलोपगाः । तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च ॥ वृक्षग्रहणात्पटोलादिफलनिषेधः । वर्ज्यमिति पूर्वेण घ्रातादिना संबन्धः ॥ वल्लीत्रयादिकं ग्राह्यम् । सूरणद्वयं अलाबुवद्विधिप्रतिषेधाद्विकल्पः । नारदः–कालायमुद्गनिष्पावशिम्बमाषकुलित्थकाः । सयूषा वा वियूषा वा पचनीया गुणान्विताः ॥ आम्रं च शृङ्गिबेरं च तथा केवलमिष्यते । (अभ्रं कपित्थं बदरीफलम्) द्राक्षा राजादनं जम्बूफलं ताटङ्कमप्यथ॥ खर्जूरं वेत्रजं चैव मातुलुङ्गं च दाडिमम् । फलान्येतानि पक्वानि कालपक्वानि चाहरेत्॥ काश्यपः–अथातो हविषां विधिस्तदर्थं व्रीहिशालिप्रियंगुनीवारषाष्टिकयववेणूनि प्रशस्तानि धान्यानि, कृष्णानि वर्जयेत् । व्रीहिभ्यो दशगुणः शालिस्तद्दशगुणः प्रियंगुस्तत्सहस्रगुणो नीवारस्तद्द्विगुणं षाष्टिकमनन्तो वेणुयवावेतानि चातुर्वर्ण्यैरेवावहानयेत्, तदलाभे पण्यधान्यानि वा वदतीति, तथान्यान्यप्रशस्तानि त्रिवर्षातीतानि धान्यानि मासातीततण्डुलाश्च, बृहतीचूतपनसोर्वारुकूश्माण्डक्षुद्र-

कन्दमहाकन्दकुलित्थवत्सरीब्रह्मपिण्डीराजमाषमहामाषश्यामाकतिलतिल्वकाः, येन्ये हविष्याश्चोपदंशाः। शाण्डिल्यः—व्रीहिमुद्गादिकं सर्वमवहन्युः कुलाङ्गनाः। अस्पृशन्त्यो निजं देहमजल्पन्त्यस्तथा स्त्रियः॥ अवहन्युः श्रमाम्बूनि जीर्णवस्त्रैर्निमृज्य च। न पचेयुर्व्रीहियवान्नावहन्युरतापितान्॥ पचेयुर्वापितानन्नं येषां न हृदयोद्गतम्। यत्नेन सर्वशाकानां कृमिकीटादिवीक्षणम्॥ विधायाहत्य बहुशः पुनः पुनरुदीक्षयेत्। सतण्डुलानि मुद्गानि शाकानि च फलानि च॥ चतुः प्रक्षाल्य शुद्धाद्भिर्गालिताभिस्तथैव च। गालिताभिः—यः कुर्यात्सर्वकर्माणि वस्त्रपूतेन वारिणा। स मुनिः स महासाधुः स योगी स हरिं व्रजेत्॥ इति स्मृतेः। जलं वस्त्रपूतं कृत्वा तेन गालितेन सर्वकर्म कुर्यादित्यर्थः। तण्डुलाम्भःकणं तद्वदन्नंनिस्रावमेव च। संविभागात्पुरा सर्वमुपयोगं न चार्हति॥ अन्नं निस्रावमित्युक्तं स्रावि सर्वं विवर्जयेत्। इति निषेधः पाक्षिकोवगम्यते। संविभागः निवेदनम्। मृण्मयेषु नवेष्वेव शक्तश्चेत्पाचयेद्धविः॥ पक्षादूर्ध्वं न कर्तव्या मृण्मये पचनक्रिया॥ पक्षादूर्ध्वं न संग्राह्यं मुद्गसारं घृतं तथा। तांबूलं तण्डुलं चैव मासादूर्ध्वं न संचयेत्॥ अग्नौ प्रज्वलिते सम्यक् पाचयेदोदनादिकम्। वस्त्रं केशं शरीरं वा स्पृष्ट्वा प्रक्षालयेत्करम्॥ नासोदकं नेत्रवारि स्वेदाम्बूनि निमृज्य च। प्रक्षाल्य हस्तं वस्त्रेण मार्जयेच्छोधयेत्करम्॥ व्यञ्जनादीनि शस्तानि शाकादीन्यपि पाचयेत्। कदलीजातमः सर्वाश्चूतं च पनसद्वयम्॥ उर्वारुं चापि बृहतीं कारवल्लीत्रयं तथा। कर्कन्धूं क्षुद्रबृहतीं कूष्माण्डं तिन्त्रिणीफलम्॥ नारिकेलं च सिंहीं च महाकन्दं तथैव च। कन्दं पिण्डीतकं चैव सूरणं कूलमेव च॥ मरीचं जीरकं चैव निष्पावं राजमाषकम्। महामाषं सर्षपं च कृष्णमाषं तथैव च॥ माषमुद्गं महामुद्गं झरसी शाकिनी तथा। शकुटं शिग्रुकं चाम्रं जीवन्त्यागस्त्यपक्फलाः॥ शृङ्गिबेरं कुलित्थं च व्याघ्री सिंही तथैव च। शस्तान्यन्यान्यदुष्टानि सुशृतं कारयेद्बुधः॥ कोशातकीमलाबुं च दूरतः परिवर्जयेत्। जीरकाद्यविमिश्राणि नारिकेलयुतानि च॥ समरीचानि कार्याणि व्यञ्जनानि रसैः सह। पयोमिश्राणि शाकानि हिंगुमिश्राणि साधयेत्॥ आसुरं स्याद्विदग्धं यदपक्वं रौद्रमुच्यते। दैवं सुशृतमेवान्नं कर्तव्यं सुशृतं हविः॥ केशकीटादिभिर्दुष्टं विदग्धमशृतं तु यत्। शाकौदनादिकं सर्वं सर्वथा परिवर्जयेत्॥ मुद्गान्नं च गुडान्नं च पायसान्नं विशेषतः। शक्तश्चेत्पाचयेन्नित्यमपूपान् भक्ष्यमेव च॥ कृष्णमाषादिस्मरणात्कृष्णधान्यानि वर्जयेदिति निषेधो मुद्गमाषव्यतिरिक्तकुलित्थानिष्पावचणकराजमाषादिविषयः॥

## ❀ भक्ष्याभक्ष्यवस्तुविवरणम् ❀

अथान्यदपि भक्ष्याभक्ष्यविषये किंचिदुच्यते। अत्र जातिदुष्टमाश्रयदुष्टं निमित्तदुष्टं कालदुष्टं भावदुष्टमित्यभक्ष्यं बहुविधम्। अन्येषामभक्ष्याणां यथायथमत्रैवान्तर्भावो द्रष्टव्यः। स्मृतिमाधवीये—जातिदुष्टादिभेदेनाभक्ष्यं बहुविधं स्मृतम्। अभक्ष्यस्य निवृत्त्या तु विशुद्धं हृदयं भवेत्॥ अभक्ष्यभक्षणाच्चित्तमशुद्धं भवति ध्रुवम्। अशुद्धं भ्रान्तविज्ञानं जायते सततं नृणाम्॥ तस्मादभक्ष्यं यत्नेन दूरतः परिवर्जयेत्।

विविधं गर्हितं प्राहुर्नित्यमन्नं मनीषिणः ॥ जातितो गर्हितं चैव तथैवाश्रयगर्हितम् । लशुनादिकमन्नं यत्तज्ज्ञेयं जातिगर्हितम् ॥ अभोज्यानां द्विजातीनामन्नमाश्रयगर्हितम् । जातिदुष्टं क्रियादुष्टं कालाश्रयविगर्हितम् ॥ संसर्गाश्रयदुष्टं च सुहृल्लेख्यं परित्यजेत् । न भक्षयेत्क्रियादुष्टं यद्दुष्टं पतितैः पृथक् ॥ कालदुष्टं तु तज्ज्ञेयमस्तुतं चिरसंस्थितम् । अस्तुतम् अस्नेहाक्तम् । सुराल्लशुनसंस्पृष्टं पीयूषादिसमन्वितम् । संसर्गाद्दुष्यते तद्धि शूद्रोच्छिष्टवदाचरेत् ॥ विचिकित्सा तु हृदये अन्ने यस्मिन् प्रजायते । सुहृल्लेख्यं तु तज्ज्ञेयं पीयूषं तु स्वभावतः ॥ इदमेव क्रियादुष्टम् । भावदुष्टं च, पराशरः–लशुनं गृञ्जनं चैव पलाण्डुकवकानि च । वार्ताकवालिकालाबून् जानीयाज्जातिदूषितम् ॥ निमित्तदुष्टमाह देवलः विशुद्धमपि चाहारं मक्षिकाकृमिजन्तुभिः । केशरोमनखैर्वापि दूषितं परिवर्जयेत् ॥ अवलीढं श्वकाकाद्यैर्ध्वाङ्क्षकुक्कुटमूषकैः । भोजने नोपयुञ्जीत तदमेध्यं हि सर्वदा ॥ संवर्तः–घ्राणेन सूकरो हन्ति पक्षपातेन कुक्कुटः । श्वा तु दृष्टिनिपातेन स्पर्शेनावरवर्णजः ॥ इदमनापदि । आपदि तु–यदन्नांशे नखकेशकीटाखुपुरीषाणि दृश्येरंस्तस्मादंशात्पिण्डमात्रमुद्धृत्यावशिष्टमन्नमद्भिरभ्युक्ष्य भस्म मृदं वा प्रक्षिप्य वाचा प्रशस्तमुपयुञ्जीत । गोघ्रातेन्ने तथा केशमक्षिकाकीटदूषिते । सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये ॥ बालैर्नकुलमार्जारैरन्नमुच्छिष्यते यदि । तिलदर्भोदकैः प्रोक्ष्य शुध्यते नात्र संशयः ॥ अन्नाद्ये कीटसंयुक्ते मक्षिकाकेशदूषिते । तदन्तरा स्पृशेच्चापस्तच्चान्नं भस्मना स्पृशेत् ॥ इति बोधायनयाज्ञवल्क्यपराशरादिभिरुक्तं द्रष्टव्यम् । संवर्तः–केशकीटादिसंसर्गे शुद्धिरेवं विधीयते । भाण्डस्थमिति कर्तव्यं हस्तस्थं तु परित्यजेत् ॥ मुखस्थमपि निष्ठीव्य घृतप्राशनमाचरेत । भक्षितं तद्विरेत्तूर्णं जीर्णे कृच्छ्रं समाचरेत् ॥ कालदुष्टमुक्तमपरार्के–दिवा कपित्थफलकं रात्रौ दधि मधूनि च । धात्रीफलं च सप्तम्यामलक्ष्मीर्नसते सदा ॥ भुञ्जानस्येति शेषः । भानुवारे दिवारात्रं सप्तम्यां च तथा दिवा । धात्रीफलं नरः खाद ह्यलक्ष्मीको भवेत्सदा ॥ वीर्यहानिर्यशोहानिः प्रज्ञाहानिस्तथैव च । भवेद्यस्मात्ततो रात्रौ धात्रीं यत्नेन वर्जयेत् ॥ मनुः–धानाः रात्रौ न तु दिवा दधि सक्तूंस्तथा निशि । सर्वं च तिलसंबद्धं नाद्यादस्तमयं प्रति ॥ तिलकाद्रकदधिश्राणातिलशाकानि निश्यदन् । त्यज्यते रूपवाक्छ्रीभिः पुष्टिनः क्षीरताद्यथा ॥ स्मृत्यन्तरे–अपि प्रस्थानसमये रात्रौ दधि न भक्षयेत । मधुपर्कप्रदानं तु वर्जयित्वा विशेषतः ॥ सुमन्तुः–कूश्माण्डं बृहतीं चैव तरुणीं मूलकं तथा । श्रीफलं च कलिङ्गं च धात्रीं प्रतिपदादिषु ॥ शिरःकपालमान्त्रं च नरचर्मतिलानि च । आम्लमामलकं चैव अष्टम्यादिषु वर्जयेत् ॥ अत्र निषिद्धानामपि तिथिनिबन्धनत्वेन निषेध आहिताग्न्यनृतनिषेधवद्दोषाधिक्यपरः । वैखानसे–निर्यासं लशुनं श्वेतवृन्ताकं सनिषण्णकम् । श्लेष्मातकं व्रजकरिच्छत्राकं शिग्रु भूस्तृणम ॥ अमाषमुद्गं कृष्णानि कोविदारं च वर्जयेत् । बोधायनः–लशुनादिषु ये तुल्या गन्धवर्णरसादिभिः । अभक्ष्यास्ते द्विजातीनां भुक्त्वा सान्तपनं चरेत ॥ शणपुष्पं शाल्मलीं च करनिर्मथितं दधि । बर्हिर्वेदिपुरोडाशं जग्ध्वा नाद्यादहर्निशम् ॥ यमः–शूद्रान्नं च द्विजोन्नानि न भुञ्जीत

कदाचन । प्रक्षालितानि निर्दोषाण्यापद्धर्मोयमुच्यते ॥ शुक्तं स्वयमेवाम्लीभूतम् ॥ ओदनं तु पुनः पक्कं नारिकेलासवं तथा । तथा तोयमभूमिष्ठं ब्राह्मणो नैव भक्षयेत् ॥ **व्यासः**—ब्रश्चनप्रभवं सर्वं हिंगुद्रव्यं विनेत तु । भूस्तृणं शिग्रुकं चैव ब्राह्मणो नैव भक्षयेत् ॥ अलाबुं गृञ्जनं चैव पलाण्डुं पिण्डमूलकम् । गान्धारीककराञ्श्च लवणान्यौषराणि च ॥ लशुनं भूस्तृणं विप्रो मोहेनापि न भक्षयेत् । **पाद्मे**—येषां गृहान्तरे नित्यं कलहः संप्रवर्तते । तत्ते स्थानं प्रयच्छामि वस तत्राशुभान्विता ॥ यस्य देहे कपालास्थिभस्मकेशादि वाञ्छितम् । तं भजस्वाशुभे नित्यं कलिना सह नित्यशः ॥ तिलपिष्टं गृञ्जनं च मूलकं शिग्रु गृञ्जनम् । छत्राकं विड्वराहं च विम्बं कोशातकीफलम् ॥ अलाबुं श्रीफलं ये वै खादयन्ति नराधमाः । तेषां गेहं तव स्थानं ज्येष्ठे दारिद्र्यसोद्दे ॥ एतेषां निषेधविषय **स्मृतिसारसमुच्चये** दर्शितः । बिम्बं च श्वेतवृन्ताकमलाबुं वर्तुलं तथा । छत्राकं लशुनं चैव मधूकं सुरसं त्यजेत् ॥ **सायणीये** च—वर्जयेच्छ्वेतवृन्ताकमलाबुं वर्तुलं तथा । छत्राकं लशुनं चैव उद्भिदं चातुरीं तथा ॥ **स्मृतिचन्द्रिकायाम्**—कुम्भीकंचुकवृन्ताककोविदारांश्च वर्जयेत् । कंचुकं वर्तुलालाबुफलम् । "वृत्ततुम्ब्यां तु कंचुकम्" इति वैजयन्ती । **हारीतः**—कुम्भीफलं च बिल्वं च विड्जं निर्यासमेव च । रक्तागस्त्यं कृष्णकुलत्थं रक्तशाकं तथैव च ॥ आरग्वधं च निर्गुण्डीं कलिङ्गं नालिकं तथा । वंशांकुरं च वार्ताकं दूरतः परिवर्जयेत् ॥ **मनुः**—दधि भक्ष्यं च शुक्तेषु सर्वं च दधिसम्भवम् । यानि चैवाभिषूयन्ते पुष्पमूलफलैः शुभैः ॥ यत्किंचित्स्नेहसंयुक्तं भक्ष्यं भोज्यमगर्हितम् । तत्पर्युषितमप्याद्यं हविःशेषं च यद्भवेत् ॥ यानि पक्वानि पुष्पमूलफलानि अभिषूयन्ते शुक्तानि भवन्ति तेषु दधि च दधियुक्तं स्नेहयुक्तं भक्ष्यभोज्यादिकमगर्हितम् । ग्राह्यमित्यर्थः । पर्युषितत्वदोषाभावात् । **गौतमः**—न पापीयसोन्नमश्नीयान्न द्विःपक्वं न शुक्तं न पर्युषितमन्यत्र रागषाडवसक्तुदधिगुडगोधूमयवपिष्टविकारेभ्यः । इति । अतो द्रव्यान्तरसंयोगादम्लीभूतं भोज्यमेव । तथा **आपस्तम्बः**—शुक्तं चापरयोगम् । इति । परयोगरहितं शुक्तम्, वस्त्वन्तरयोगरहितेन स्वयमेवाम्लीभूतं नाद्यादित्यर्थः । अपूपाः सक्तवो धानास्तथा दधि घृतं मधु । एतत्पण्येषु भोक्तव्यं भाण्डलेपो न चेद्भवेत् ॥ इति केषुचित्पण्येषु भोज्यत्वाभ्यनुज्ञानमापद्विषयम्, अन्यदा वर्ज्यमेव । **तथापस्तम्बः**—नापणीयमन्नमश्नीयात्तथा रसानामाममांसमधुलवणानीति परिभाष्य तैलसर्पिषी तूपयोजयेदुदकेऽवधाय कृतान्नं पर्युषितमखाद्यापेयानाद्यं शुक्तं च फाणितपृथुकतण्डुलकरम्भभरुजसक्तुशाकमांसपिष्टक्षीरविकारौषधिवनस्पतिमूलफलवर्जम् । इति । अस्यार्थः—आपणीयं विक्रयवीथीस्थम्, सर्वमन्नं नाद्यात्, रसानां मध्ये आममांसादि ग्राह्यम्, तथा तैलसर्पिषी आपणीये सर्वथोपयोजयेत, तथा कृतान्नं पक्वान्नं पर्युषितं रात्र्यन्तरितं रात्रौ जले निहितमुपयोजयेत्, उदके निक्षिप्तस्य पर्युषितत्वं नास्तीत्यर्थः । अत्र **स्मृतिचन्द्रिकाकारः**—उपयोजयेदित्यनुवृत्तौ, **आपस्तम्बोपि**—उदकेऽवधाय कृतान्नं पर्युषितम् । इति । यदा कृतान्नमुदकेऽवधायाप्सु रात्रौ स्थापितं तदन्नं पर्युषितमप्युपयुञ्जीतेत्यर्थः । **स्मृत्यन्तरे**— शाकं पुनः शृतं वह्नौ जले सिक्तं तथौदनम् । तीर्थे

पर्युषितं भोज्यं यच्चान्यत्स्नेहसंयुतम् ॥ अतो जले निक्षिप्तान्नभोजने शिष्टगर्हा मध्याह्न-कृत्याकरणनिबन्धनैव । न हि प्रातर्वैश्वदेवपञ्चमहायज्ञाद्यनुष्ठानं सम्भवति, अकालत्वा-त् । प्रकृतं व्याख्यायते । शूक्तं पर्युषितं च न भक्ष्यम्, फाणितादि भक्ष्यमेव । हरिद्रा गोरसं चूर्णं लवणं धान्यमौषधम् । न त्वेषां पाकदोषोस्ति क्रमुकस्य गुडस्य च ॥ इति स्मृतेः । करम्भः दधिसक्तुसमाहारः, भरुजः धानाः, शाकम्—मण्डूकपर्णी जी-वन्ती कुबेराक्षी च पप्फली । अगस्ती वैष्णवी शाकी विष्णुभक्तिविवर्धिनी ॥ गौली भाण्डी च मत्स्याक्षी मुद्गशिम्बाप्रतुम्बिका । निर्लेतोपोतकी चैव कालङ्गालर्कशाकि-नी ॥ इति प्रसिद्धम् । याज्ञवल्क्यः—अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् । अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥ यमश्च—शाकं मांसमपूपं च सूपं कृसर-मेव च । यवागूः पायसं चैव यच्चान्यत्स्नेहसंयुतम् ॥ सर्वं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् । कृसरः गुडमिश्रतिलः । पराशरः—अपूपाश्च करम्भाश्च धाना वटक-सक्तवः । शाकं मांसं फलं मूलं सूपं च कृसरं यवाः ॥ पृथुकाः पायसं चैव पर्युष्य-न्ति न तु क्वचित् । वसिष्ठः—अपूपधानाः करम्भसक्तुयावकपायसशाकफलमूला-नि विकृतानि वर्जयेत् । इति । विकृतानि विकारान्तरमापन्नानि, अनुपयोग्यानीत्यर्थः । अनुपयोग्यं नष्टस्वादं विरसं च नाद्यादित्यर्थः । अतो वैरस्याभावाय शाकं पुनः पुनः पचनीयम्, तस्य पुनः पाकदोषाभावात् । "शाकं पुनः शृतं वह्नौ" इति स्मृतेः । यदेव स्वीकारार्हं पक्वमपि पुनः पच्यते तदेव द्विःपक्वम्, अतस्तैलघृताभ्यां मरीच-तण्डुलक्षोदाभ्यां वा विशेषोपयोगाय पुनः पच्यमानं न तद्द्विःपक्वम्, विशिष्टभोज्य-त्वौपयिकस्य पाकस्यैकत्वात्, उदकमात्रपाकेन विशिष्टभोज्यत्वानिष्पत्तेः । " सयूपा वा वियूपा वा " " मरीचैर्जीरकैः " इत्यादिवचनाच्च । एवं तर्हि जलेन यवाग्वा वा पक्व-स्य दध्यादियुक्तस्य शुष्कस्य तण्डुलवटकस्य द्विःपक्वत्वपर्युषितत्वादिदोषो नास्तीति चेत्, सत्यमेव । ननु शाकस्य पर्युषितत्वादिदोषाभावे तद्रसस्य कथमिति चेन्न, तस्या-पि तद्विकारत्वेन पर्युषितत्वदोषाभावात् । अत्र विज्ञानेश्वरः—विकारनिषेधे कृते प्रकृतेरनिषेधः, प्रकृतिनिषेधे तद्विकारस्यापि निषेधः । इति । अतः पर्युषितशाकनिषे-धाभावात्तद्विकारस्याप्यनिषेध इति सिद्धः । शंखः—दधिभक्तं च शूक्तेषु सर्वं च दधि-संभवम् । ऋजीषपक्वं भक्ष्यं स्यात्सर्पिर्युक्तमिति स्थितिः ॥ यमः—मसूरमाषसंयुक्तं तथा पर्युषितं च यत् । तच्च प्रक्षालितं कृत्वा भुञ्जीत ह्यभिघारितम् ॥ मनुः—वृथा कृसरसंयावपायसापूपमेव च । अनुपाकृतमांसानि देवान्नानि हवींषि च ॥ नाद्यादित्यनु-वर्तते । अतो देवान्नवर्ज्यत्वस्मरणमनिवेदितविषयम् । तथा व्याख्यातम् " देवतार्थं हविः शिग्रुं लोहितान् व्रश्चनांस्तथा । " इत्यत्र विज्ञानेश्वरेण । इदमत्र तद्वाक्यम् " दे-वतार्थं बल्युपहारनिमित्तं साधितं हविः हवनार्थं सिद्धं प्राग्घोमात् " इति । व्यासः—ओदनं तु पुनः पक्वं नारिकेलासवं तथा । पक्वं तोयमभूमिष्ठं ब्राह्मणो नैव भक्षयेत् ॥ उत्पलं च वटं चैव शणशाकं तथैव च । उदुम्बरं न खादेच्च श्रेयोर्थी पुरुषः क्वचित् ॥ चन्द्रिकायाम्—वृन्ताककतककालिङ्गबिम्बोदुम्बरभिःसटाः । उदरे यस्य वर्त-न्ते तस्य दूरतरो हरिः ॥ उशनाः—कुसुम्भं नालिकाशाकं वृन्ताकं पोतकं तथा ।

भक्षयन् पतितस्तु स्यादपि वेदान्तपारगः ॥ पोतकं सोमलता । **शंखः**–उत्पलं च षटं चैव शणशाकं तथैव च । प्लक्षाश्वत्थोदुम्बराणि श्रेयोर्थी वर्जयेत्सदा ॥ **देवलः**–उक्तमेतत्तु सर्वेषां भक्ष्याभक्ष्यमशेषतः । वर्णानां त्वनुलोमानां तत्स्त्रीणां च विशेषतः॥ कण्ठलं श्वेतवृन्ताकं कुम्भाण्डं चैव वर्जयेत् । कुम्भाण्डं वर्तुलालाबुफलम् । **वृद्धहारीतः**–निर्यासं वर्जयेन्नित्यं विना हिंगुं च गुग्गुलम् । कुम्भीतकं च पिण्याकं श्वेतवृन्ताकमूलके ॥ कोशातकीं बिम्बफलं मद्यमांससमानि तु । वंशांकुरमलाबुं च तालहिन्तालके फले ॥ अश्वत्थं प्लक्षनीपं च वटमारग्वधं तथा । औषरं लवणं चैव श्वेते च बृहतीफलम् ॥ श्लेष्मातकं च विड्जानि प्रत्यक्षलवणं तथा । ताम्रपात्रयुतं गव्यं क्षीरं च लवणान्वितम् ॥ घृतं लवणसंयुक्तं सुराकल्पं विवर्जयेत् । विड्जानि अत्र **विष्णुः**–मृद्वारिकुसुमादींस्तु फलकन्देक्षुमूलकान् । विण्मूत्रदूषितान् प्राश्य पादकृच्छ्रं समाचरेत् ॥ सन्निकृष्टेर्थमेव स्यात्कृच्छ्रस्याथ विशुद्धये । अल्पसंसर्गे तु कृच्छ्रपादः, महत्संसर्गेर्थमिति विज्ञेयम् । **व्यासः**–संसर्गदुष्टं यच्चान्नं क्रियादुष्टं च कामतः । भुक्त्वा स्वभावदुष्टं च तप्तकृच्छ्रं समाचरेत् ॥ अतश्चामेध्यप्रभवफलादिभक्षणे तप्तकृच्छ्रः कार्यः । तिस्रो गावः निष्कत्रयं वा शक्त्यपेक्षया प्रतिनिधिः कार्यः । एवमन्याभक्ष्यभक्षणे प्रायश्चित्तविशेषोस्मदुक्तदशनिर्णयग्रन्थे सुस्पष्टं द्रष्टव्यः । **आश्वमेधिके**–मद्भक्तः पाण्डवश्रेष्ठ व्रतानीमानि धारयेत् । नान्यदाच्छादयेद्वस्त्रं मद्भक्तो जलतारणे ॥ स्वस्थस्तु न दिवा सुप्यान्मधुमांसानि वर्जयेत् । प्रदक्षिणं व्रजेद्विप्रान् गामश्वत्थं हुताशनम् ॥ न धावेत्पतिते वर्षे नाग्रभिक्षाश्च लोपयेत् । प्रत्यक्षलवणं नाद्यान्न शोभाञ्जनगृञ्जने ॥ ग्रासमुष्टिं गवे दद्याद्धान्याम्लं चैव वर्जयेत् । तथा पर्युषितं नाद्यात्पक्वं परगृहागतम् ॥ अनिवेद्यं च यद्द्रव्यं तत्प्रयत्नेन वर्जयेत् । प्रत्यक्षलवणं–चक्षुर्ग्राह्यमेव दत्तं नाद्यम्, अत एवौदनान्तर्हितं प्रयच्छन्ति । पर्युषितं पक्वं रात्र्यन्तरितम्, न स्वपक्वं पूर्वेद्युः स्थापितम् । अनिवेद्यं निवेदनानर्हम्, अनिवेदितं च । अत्र **शाण्डिल्यः**–क्षुद्रं वस्तु समायातमनिवेदितमन्तरा । अश्नीयान्निर्मिश्रितं कृत्वा साक्षात्पूर्वनिवेदितैः ॥ विशिष्टं भोज्यमायातमनिवेदितमन्तरा । अर्चोपयेदनेनान्तः सुतशिष्यादिभिः परम् ॥ अश्नीयादिति शेषः । पर्युषितमिति दध्यादिव्यतिरिक्तम् । तथा **मनुः**–चिरस्थितमपि त्वाद्यं यत्स्नेहाक्तं द्विजातिभिः । यवगोधूमजं सर्वं पायसं चैव विक्रियाः ॥ स्नेहः दधिघृततैलानि । **वसिष्ठः**–अन्नं पर्युषितं काम्यं तु दध्ना घृतेन वाभिघारितमुपयुञ्जीत । इति । एवं दध्यादियुक्तं पर्युषितं कृसरवद्भोज्यमेव. कृसरं घृष्टतिलचूर्णमिश्रौदनम् । इति चन्द्रिकायाम् । **त्रिकाण्डी**–कलम्बिका च निर्गुण्डी मुण्डी वार्ताकमेव च । औषरं लवणं चैव श्वेतं च बृहतीफलम् ॥ नखचर्मकृतं चैव पिच्छिलं चैव वर्जयेत् ॥

## ❀ श्राद्धविषये ❀

*निगमे*–*गवां क्षीरं घृतं चैव क्षौद्रमिक्षुरसो गुडम् । उर्वारुः कारवल्ली च पटोलं*

कालपुत्रिका ॥ कदली कण्टकिफलं धात्री पिच्छालचूतिका । कारङ्गं द्रोणपुत्री च तण्डुली चक्रवर्तिका ॥ वालुका चर्मवलयं कोशातकिफलं तथा । श्राद्धे ह्येतानि देयानि तथा पितृरुचीनि च ॥ नागरं वै सदा देयं दीर्घमूलकमेव च । घृतेन भोजयेद्विप्रान् घृतं भूमौ समुत्सृजेत् ॥ शर्कराक्षीरसंयुक्ताः पृथुका नित्यमक्षयाः । सर्पिषा तानि सर्वाणि पाके संस्कृत्य भोजयेत् ॥ श्राद्धे ह्येतानि यो दद्यात्पितरः प्रणमन्ति तम् । इति । दक्षः—जलजं श्वेतवृन्ताकं कूश्माण्डं बृहतीद्वयम् । हरिततुण्डफलं चैव अलाबुद्वितयं तथा ॥ अविक्षीरं घृतं तैलं मसूरं राजमाषकम् । श्यामाकं कोद्रवोद्दालकुलित्थं च तथैव च ॥ निष्पावं च विशेषेण वर्जयेच्छ्राद्धकर्मणि । हरिततुण्डफलम् आहितुण्डिकस्य धमनसाधनमलाबुफलम् । तद्व्यतिरिक्तं द्विविधम्, दीर्घं वर्तुलं च । निष्पावं कृष्णनिष्पावम्, अन्यस्य ग्राह्यत्वात् । श्रीविष्णुपुराणे—प्रशान्तिकाः सनीवाराः श्यामाका द्विविधास्तथा । वन्यौषधिप्रधानाश्च श्राद्धार्हाः पुरुषर्षभ ॥ यवाः प्रियङ्गवो मुद्गा गोधूमा व्रीहयस्तिलाः । निष्पावाः कोविदाराश्च सर्षपाः श्राद्धशोभनाः । अन्यच्चात्र वर्ज्यावर्ज्यवस्तुजातमस्मदुक्ते पितृमेधसारप्रश्नव्याख्याने श्राद्धप्रकरणे प्रपञ्चितं द्रष्टव्यम् ॥

## ❀ व्रतस्थविषये किंचिदुच्यते ❀

व्रतचहपादौ—उपोष्य पूर्वदिवसे पुरश्चरणमाचरेत् । लवणं चारनालं च गृञ्जनं कांस्यभोजनम् ॥ ताम्बूलं च द्विभुक्तं च दुःसंवासं प्रमत्तताम् । क्षारं क्षौद्ररसं चैव कोद्रवांश्चणकानपि ॥ मसूरं चैव माषं च निष्पावं च विशेषतः । राजमाषान् क्षुद्रमाषान् पटोलालाबुपिण्डिकान्॥ कोशातकी च शांगुष्ठं तथा सर्वामुपोतकीम् । वर्जयेद्बृहतीभेदं कूश्माण्डं च त्यजेन्नरात्र ॥ क्षीरं फलं तथा शाकं मूलं यावकमेव च । हविष्यं वाथ भिक्षान्नं प्रशस्तं मन्त्रजापिनाम् ॥ अशूद्रोपहतं शुद्धं पद्मामन्यैरदूषितम् । दधि क्षीरं घृतं गव्यमैक्षवं गुडवर्जितम् ॥ तिलाश्चैवासिता मुद्गाः कन्दं अस्तवर्जितम् । नारिकेलफलं चैव क्षीरमभ्यङ्गमेव च ॥ कदली लवली चैव यानं मैथुनमेव च । अम्लमामलकं चैव पनसं बृहती तथा ॥ दक्षः—अम्लमामलकं चैव पन सार्द्रहरीतकी । प्रशस्तं सिन्धुलवणं घृतेनाभ्यञ्जनं तथा ॥ आह्नि स्वापमसभ्यं च न प्रशस्तं व्रतान्तरे । काव्यालापं गन्धलेपं पुष्पधारणमेव च ॥ नृत्तादिदर्शनं चैव क्षीरमभ्यङ्गमेव च । अनिवेदितभुक्तिं च वर्जयेन्मर्दनादिकम् ॥ त्यजेच्चोष्णोदकस्नानं सुगन्धामलकादिकम् । वर्ज्यमेवंविधं सर्वं यदीच्छेच्छ्रेय आत्मनः ॥ उपोष्य पूर्वदिवस इत्युपक्रम्य न प्रशस्तं व्रतान्तर इत्युपसंहारान्मध्ये च प्रशस्तं मन्त्रजापिनामित्युक्तत्वाच्च तत्र वर्ज्यत्वेनोक्तम्, पुरश्चरणं तु जपव्रतपरविषयमिति सुस्पष्टम् । अतोऽन्येषां बृहतीकूश्माण्डादिकं ग्राह्यमेव । कांस्यभोजनमन्यस्य न वर्ज्यमेव । एवं ताम्बूलद्विभुक्तादिकं च, दुःसंवादवर्जनं सर्वसमम् । अत्र नित्यवर्ज्यस्यापि वर्ज्यत्वस्मरणं दोषाधिक्यप्रदर्शनार्थम् । अत्रानतप्रत्तेन मुद्गग्रहणात्फलमूलादिभिः सह पाठाच्च एकादशीव्रते मुद्गादिकं प्रशस्तमेव, अत एव मुद्गमाषं स्वीकुर्वन्ति सन्तः । स्का-

न्दे-कांस्यं मांसं मसूरं च चणकं कोरदूषकम्। शाकं मधु परान्नं च त्यजेदुपोषितः स्त्रियम्॥ विष्णुधर्मे-कांस्यं मांसं मसूरं च पुनर्भोजनमैथुने। द्यूतमत्यम्बुपानं च फलप्रेप्सुर्विवर्जयेत्॥ इत्यादिकं च काम्यविषयं द्रष्टव्यम्। जात्यादिदुष्टं सर्वेषां त्याज्यं तु बहुबीजजम्। कूश्माण्डादिव्रतस्थानामन्येषां न निषिध्यते॥ पारमेश्वरे-मरीचशुण्ठीलिकुचतिन्त्रिणीरससमिश्रितम्। चूर्णेन जीरकोत्थेन संस्कुर्याद्रसवस्तुभिः॥ रसभेदसमुत्थानि पनसद्वितयोद्भवम्। चूतभेदसमुत्थानि तानि पक्वानि कालतः॥ बृहत्खुर्वारुवार्ताककूश्माण्डप्रभवानि च। कारवल्लीलतोत्थानि कार्कोटप्रभवानि च॥ पटोलद्वितयोत्थानि कोशातक्याः फलं तथा। अलाबुकर्करी शिम्बभेदोत्थ तिन्त्रिणीफलम्॥ क्षुद्रकन्दसमेतं च वल्लीकन्दद्वयं तथा। सूरणद्वयकन्दं च तथा पिण्डारकद्वयम्॥ पद्मोत्पलसमुत्थं च हविर्योग्यं विशेषतः। जीवन्ती वास्तुकं शाकं कारवल्लीदलं तथा॥ तुम्बीदलं च पिण्डीं च शिम्बमुद्गदलानि च। शाकिनीशतपर्वाणां तथैवाश्वासनन्दिनीम्॥ आगस्त्यं पाचयेच्छाकं विहितं ब्राह्मणस्य तु। इति। अत्र अलाबुकोशातकीफलं हविष्पाके विहितम्, अन्यत्र तु निषिद्धम्। तदेवं विधिप्रतिषेधाभ्यां विकल्पो वा पदार्थान्तरालाभविषयो वा विधिरिति न विरोधः। विनिवेद्यं शुभं द्रव्यं पायसं लवणान्वितम्। गव्यमाज्यं तथा क्षीरं शर्करा माहिषं तु वा॥ फलैश्च भक्ष्यभोज्यैश्च पानकैर्व्यञ्जनैः सह। शुद्धं हविष्यं द्रव्यं च सुरुच्यं च निवेदयेत्॥ पायसे लवणयोगस्य क्वचिदपवादः पारमेश्वरे दर्शितः। अक्षारलवणं शुद्धं घृतक्षीरफलान्वितम्। शान्तिके मखयज्ञे च साधितं हविरुत्तमम्॥ इति हविष्पाकविधिः॥

## ❋ अथ संविभागविधिरुच्यते ❋

अत्र दक्षः-पञ्चमे तु तथा भागे संविभागो यथार्हतः। पितृदेवमनुष्याणां कीटानां चोपदिश्यते॥ नृसिंहपुराणे-पौरुषेण सूक्तेन ततो विष्णुं समर्चयेत्। वैश्वदेवं ततः कुर्याद्बलिकर्म ततो मखान्॥ वैश्वदेवेन ये हीना आतिथ्येन बहिष्कृताः। सर्वे ते वृषला ज्ञेयाः प्राप्तवेदा अपि द्विजाः॥ व्यासः-सायं प्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च। अनश्नतापि सततमन्यथा किल्बिषी भवेत्॥ पञ्च सूना गृहस्थस्य वर्तन्तेऽहरहः सदा। कण्डनी पेषणी चुल्ली उदकुम्भ उपस्करः॥ एताभिर्वाहयन्विप्रो बध्यते वै मुहुर्मुहुः। एतासां पावनार्थं तु पञ्च यज्ञाः प्रकीर्तिताः॥ कण्डनी रुकखोलूखलादि, पेषणी दृषदादि, चुल्ली पाकस्थानम्, उदकुम्भः उदधानम्, उपस्करः शूर्पादिः, एवं पावनार्थत्वमात्रं न भवति, किं त्वकरणे प्रत्यवायस्मृतेः। तथाश्वमेधिके-पञ्च यज्ञान् परित्यज्य यो भुंक्ते तु द्विजाधमः। स भवेद्विड्वराहश्च श्वानयोनिषु जायते॥ व्यासश्च-पयोमूलफलैर्वापि पञ्च यज्ञान् समाचरेत्। अकृत्वा पञ्च यज्ञांस्तु भुक्त्वा चान्द्रायणं चरेत्॥ मनुः-ऋषयः पितरो देवा भूतान्यतिथयस्तथा। आशासते कुटुम्बिभ्यस्तेभ्यः कार्यं विजानता॥ स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान् यथाविधि। पितॄन् श्राद्धैर्नरानन्नैर्भूतानि बलिकर्मणा॥ एकमप्याशयेन्नित्यं पित्रर्थं पाञ्चयज्ञिके। न चैवात्राशयेत्किंचिद्वैश्वदेवं प्रति द्विजः॥ नामन्त्रणं न होमं च नाह्वानं न

विसर्जनम् । न पिण्डदानं न सुरो नित्ये कुर्याद्द्विजोत्तमः ॥ न सुरः पित्र्यर्थमेव भोजयेत् ॥ **कात्यायनः**–एकमप्याशयेद्विप्रं पितृयज्ञार्थसिद्धये । अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा ॥ अप्युद्धृत्य यथाशक्ति किंचिदन्नं यथाविधि । पितृभ्य इदमित्युक्त्वा स्वधाकारमुदाहरेत् ॥ अत्राप्यसामर्थ्ये **मनुः**–दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्वापि पितृभ्यः प्रीतिमाहरन् ॥ **कूर्मपुराणे**–शालाग्नौ लौकिके वापि जले भूम्यामथापि वा । वैश्वदेवस्तु कर्तव्यो देवयज्ञः स वै स्मृतः ॥ देवेभ्यस्तु हुतादन्नशेषाद्भूतबलिं हरेत् । भूतयज्ञः स वै ज्ञेयो भूतिदः सर्वदेहिनाम् ॥ **बौधायनः**–अहरहर्भूतेभ्यो बलिं हरेदापुष्पेभ्योऽथैनं भूतयज्ञं समाप्नोति । **यमः**–अतिथिभ्योऽन्नदानं तु नृयज्ञः स तु पञ्चमः । अनित्यं हि स्थितिर्यस्मात्तस्मादतिथिरुच्यते ॥ तस्मिंस्तुष्टेऽनृयज्ञोत्थान्मुच्येतर्णाद्गृहाश्रमी । इति । **कार्ष्णाजिनिः**–मनुष्याणां तथा कुर्यात्तर्पणं प्रत्यहं द्विजः । हन्तेति हन्तकारस्तु गृहस्थः प्रत्यहं यजेत् ॥ हन्तेत्युच्चार्य यजेदित्यर्थः । अत्र **कात्यायनः**–स्वाहाकारनमस्कारवषट्कारा दिवौकसाम् । स्वधाकारः पितॄणां तु हन्तकारो नृणां तथा ॥ **नारायणः**–सभार्यस्तु शुचिः स्नातो विधिनाचम्य वाग्यतः । प्रविश्य सुसमिद्धेऽग्नौ वैश्वदेवं समाचरेत् ॥ **शातातपः**–लौकिके वैदिके वापि हुतोत्सृष्टे जले क्षितौ । वैश्वदेवस्तु कर्तव्यः पञ्चसूनापनुत्तये ॥ सूनापनुत्तय इत्यानुषङ्गिकं फलम्, प्रत्यवायनिवृत्तेरेव प्रधानत्वात् । **तथागस्त्यः**–सूनानिर्णिक्तदोषा ये सर्वे ते वृषलाः स्मृताः । न तेषामधिकारोऽस्ति कचिद्धर्मे दुरात्मनाम् ॥ **व्यासः**–पञ्चयज्ञांश्च यो मोहान्न करोति गृहाश्रमी । तस्य नायं न च परो लोको भवति धर्मतः ॥ **श्रीविष्णुपुराणे**–देवादिनिश्वासहतं शरीरं यस्य वेश्म च । न तेन संकरं कुर्याद्गृहासनपरिच्छदैः ॥ **यमश्च**–अकृत्वा वैश्वदेवं च भुञ्जते ये द्विजाधमाः । वृथा तेनान्नपाकेन काकयोनिं व्रजन्ति ते ॥ **व्यासश्च**–अकृत्वा वैश्वदेवं तु यो भुंक्तेऽनापदि द्विजः । स मूढो नरकं याति कालसूत्रमवाक्छिराः ॥ वैश्वदेवश्च सायं प्रातः कर्तव्यः । सायं प्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च । इति स्मृतेः । **प्रजापतिश्च**–वैश्वदेवं बलिहृतं प्रत्यहं गृहमेधिनः । सायं प्रातश्च कुर्वीरन् सूनादोषापनुत्तये ॥ **आश्वलायनश्च**–अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात् । इति । पञ्चमहायज्ञास्तु दिवैव न रात्रौ। सायं प्रातस्तु कुर्वीत वैश्वदेवं यथाविधि । महतः पञ्च यज्ञांस्तु दिवैवेत्याह गौतमः ॥ इति स्मरणात् । अस्य च वैश्वदेवस्य पञ्चमहायज्ञवत्पुरुषार्थत्वमेव न संस्कारार्थता युक्ता, पुरुषार्थत्वे संस्कारकर्मतानुपपत्तेः। यथा अन्नसंस्कारपक्षे पुरुषार्थता न युक्ता वैश्वदेवकर्मणः, संस्कारकर्मतापक्षे पुरुषार्थत्वानुपपत्तेः । परस्परविरोधान्नोभयार्थत्वम्, किंतु पुरुषार्थत्वमेव युक्तम् । स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः । महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ इति मनुस्मरणात् । वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् । तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥ इति वचनाच्च। अतः पुरुषार्थत्वे वैश्वदेवकर्म न प्रतिपाकमावर्तनीयम्। "तस्मात्सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात" इत्यादेरसत्तिप्रयोगप्रदर्श-

नपरत्वात्, " तानेतान् यज्ञानहरहः कुर्वीत " इत्यधिकारविधिपरत्वाच्चेति सर्वमनवद्यम् । नन्विदं वैश्वदेवं पञ्चमहायज्ञेभ्यो न पृथग्भूतम्, " अहरहर्भूतबलिः " इत्यादयश्च पञ्चमहायज्ञानामुत्पत्तिविधयः । " आर्यां प्रयाता वैश्वदेवे " इत्यादिस्तु प्रयोगविधिः । तत्र यदग्नौ क्रियते स देवयज्ञः, यद्बलिहरणं स भूतयज्ञः, यस्तु दक्षिणतः पितृलिङ्गेन स पितृयज्ञः, यच्चान्नप्रदानं स मनुष्ययज्ञः, इति तन्न साधीयः, वैश्वदेवदेवताकत्वेन श्रुत्यादिचोदितत्वात्, तेभ्यः संकल्पितस्य हविषो देवतान्तरेभ्यो मन्त्रवर्णात्कल्पितेभ्यो दातुमयुक्तत्वाच्च, अथातः पञ्च महायज्ञाः सायं प्रातर्वैश्वदेवः कर्तव्य इति संज्ञाभेदाच्च । अतः कर्मभेदः सिद्धः, प्रकरणान्तराच्चेत्यलम् । अत्र **मनुः**—वैवाहिकेऽग्नौ कुर्वीत गृहकर्म यथाविधि । पञ्चयज्ञविधानं च पक्तिं चान्वाहिकीम् क्रियाम् ॥ पक्तिः होमार्थपाकः । **याज्ञवल्क्यः**—कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही । इति । कुर्वीतेत्यात्मनेपदश्रवणाद्यत्फलं जायापतिगाम्यन्यतरगामि वा शान्तिकं पौष्टिकं वा तत्कर्म विवाहाग्नौ कुर्यात् । एवं वश्वदेवपञ्चमहायज्ञादीनां विवाहाग्नौ कर्तव्यत्वविधानात्पाणिग्रहणादधिगृहमेधिनो व्रतम् " सभार्यस्तु शुचिः स्नातः " इत्यादिभिः सपत्नीकस्यैवाधिकारस्मरणात् । " अयज्ञो वा एष योऽपत्नीकः " इति श्रुतेः, अपत्नीकस्य नाधिकारः । **चतुर्विंशतिमते**—मातहोमं तु निर्वर्त्य समुद्धृत्य हुताशनात् । शेषं महानसे कृत्वा तत्र पाकं समाचरेत् ॥ **कौर्मे**—यदि स्याल्लौकिके पाकस्ततोऽन्नं तत्र हूयते । शालाग्नौ तत्र चेदन्नं विधिरेष सनातनः ॥ अनेनैवाभिप्रायेणा**पस्तम्बः**—औपासने पचने वा । इति । **वसिष्ठः**—शालाग्नौ तु पचेदन्नं लौकिके वापि नित्यशः । **व्यासः**—नैवेद्यार्थं पृथग्भाण्डे पत्नी स्नात्वा पचेद्गृहे । वैश्वदेवार्थमन्यस्मिन् व्यञ्जनानि पृथक् पृथक् ॥ एकस्मिन्वा पचेद्भाण्डे पूर्वं विष्णुनिवेदनम् । वैश्वदेवं ततः शिष्टाद्व्यासस्य वचनं यथा ॥ यस्मिन्नेव भवेत्पाकस्तस्मिन् होमो विधीयते ॥ **विष्णुः**—अभावादग्निहोत्रस्य आवसथ्यात्तथाहृतः । यस्मिन्नग्नौ भवेदन्नं तत्र होमो विधीयते ॥ इति । यस्य सर्वाधानं तस्यावसथ्याद्वाहृतः पृथगग्निहोत्रस्याभावाद्गृह्याग्न्यभावेन यस्मिन् लौकिकेऽग्नौ पाकस्तस्मिन्नेव वैश्वदेवः कार्य इत्यर्थः । **व्यासः**—वैश्वदेवं प्रकुर्वीत स्वशाखाविधिचोदितम् । संस्कृतान्नैर्हविष्यैश्च हविष्यव्यञ्जनान्वितैः ॥ जुहुयात्सर्पिषाभ्यक्तं तैलक्षारविवर्जितम् । दध्यक्तं पयसाक्तं वा तदभावेऽम्भसापि वा ॥ **चतुर्विंशतिमते**—अभावे येन केनापि फलशाकोदकादिभिः । पयोदधिघृतैः कुर्याद्वैश्वदेवं स्रुवेण तु ॥ हस्तेनाद्भिरादिभिः कुर्याद्द्विरञ्जलिना जले । अलाभे हविष्याणामिति शेषः । अत्रापि यदशनीयं हविष्यं तेनैव होमः कार्यः । तदुक्तं **परिशिष्टे**—शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम् । संकल्पयेद्यदाहारस्तेनाग्नौ जुहुयादपि ॥ **आपस्तम्बः**—न क्षारलवणहोमो विद्यते, तथा परान्नसंसृष्टस्य चाहविष्यस्य होमः, परोक्षमन्त्रे संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत्तद्देवपवित्रमित्याचक्षते । इति । अतो होमार्थमानीतं यत्तदौपासनाग्नौ अधिश्रित्य प्रोक्ष्य तेन हविषा होमः कार्यः । **गृह्यपरिशिष्टे**—उत्तानेन तु हस्तेन अंगुष्ठाग्रनिपीडितम् । संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः ॥ **शौनकः**—बहुशुष्के-

न्धने चाग्नौ सुसमिद्धे हुताशने । विधूमे लेलिहाने च होतव्यं कर्मसिद्धये ॥ अत्राऽऽपस्तम्बः—औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रं हस्तेन जुहुयादुभयतः परिषेचनं यथा पुरस्तादेवं बलीनां देशे देशे समवेतानां सकृत्सकृदन्ते परिषेचनं सति सूपसंसृष्टेन कार्या अपरेणाग्निं सप्तमाष्टमाभ्यामुदगपवर्गमुदधानसन्निधौ नवमेन मध्येगारस्य दशमैकादशाभ्यां प्रागपवर्गमुत्तरपूर्वदेशेगारस्योत्तरैश्चतुर्भिः शय्यादेशे कामलिंगेन देहल्यामन्तरिक्षलिंगेनोत्तरेणापिधान्यामुत्तरैर्ब्रह्मसदने दक्षिणतः पितृलिंगेन प्राचीनावीत्यवाचीनपाणिः कुर्याद्रौद्र उत्तरो यथा देवताभ्यस्तयोर्नानापरिषेचनं धर्मभेदान्नक्तमेवोत्तमेन वैहायसम् इति । एवं बलीनामिति बलीनां तस्य तस्येति पूर्वोक्तानुवादो विधानविशेषार्थम् । अयं विशेषः, तस्य तस्येति वचनात् यथादेशसंस्कारः परिमार्जनमवोक्षणं च प्रत्येकं भवति, तथा परिषेचनमपि प्रतिबलि स्यादसत्यस्मिन् सूत्रे. अतो देशे देशे समवेतानां सकृदेवान्ते परिषेचनं कार्यं न प्रत्येकमिति । अपरेणाग्निं, मध्येगारस्य, उत्तरपूर्वदेशे, इत्याद्युपदेशादेवैकदेशान्वितबलीनामन्ते सकृदेव परिषेचनं कार्यं न याहच्छिकसमवेतानां, वीप्सावचनात् । प्रतिबलि देशसंस्कारोवोक्षणमवदानं च कार्यम् । रौद्र उत्तरो यथा देवताभ्यः—यथा रुद्रबलिः पितृबलेरुत्तरो भवति तथा देयः । यथा देवताभ्यः प्राचीनावीत्यवाचीनपाणिरित्यनन्तरोक्तो धर्मोऽत्र न भवति, किंतु देवताभ्यः उपवीतीन्युब्ज्य ददाति न पितृतीर्थेन, तथात्रापि पृथिव्यादिबलीनां पितृबलेश्च मध्ये दद्यादित्यर्थः । समवेतत्वेपि तयोः पृथगेव परिषेचनं प्राचीनावीतोपवीतादिधर्मभेदात्पृथगेव कार्यं च । तदेवं सर्वदेवताबलिभ्य उत्तरो रुद्रबलिर्देय इति न भ्रमितव्यम्, तथा पितृरुद्रबल्योरेकदेशसमवेतत्वाभावेन तयोर्नानेति तदपवादकसूत्रवैयर्थ्यप्रसक्तेः । वैहायसः आकाशसम्बन्धी अनावृते देशे पाणिं किंचिदुद्धृत्याकाशे बलिरुत्क्षेप्यः । "ये भूताः प्रचरन्ति नक्तं बलिम्" इत्येव पाठात्तदनुसारेण नक्तमेवेत्येवकार उक्तः, अतो न दिवा वैहायसबलिरिति भावः । एवं च एवकारो भिन्नक्रमः,नक्तमुत्तमेनैवेति, तेन बल्यन्तराणां निवृत्तिरिति व्याख्यानमसारम्, कर्मैकदेशानुष्ठानायोगात्, तदनुष्ठानेपि कृत्स्नकर्मानुष्ठानेन पाकयज्ञलोपप्रायश्चित्तं प्रसज्येत । वेदोदितानां नित्यानां कर्मणां समतिक्रमे । स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥ इति मनुस्मृतेः । "नक्तंचारिभ्यो दिवाचारिभ्यः" इत्याश्वलायनेन भेदेनाम्नानाद्दिवापि शिष्टा आचरन्ति । एवं मन्त्राणां क्रमेण सूत्रतो विनियोगात्क्वचित्समाम्नानमस्ति इत्यवगम्यते । तच्च प्राग्विवाहमन्त्रेभ्य इति भाष्यकारवचनात्सिद्धम् । सतश्च " प्रसुग्मन्ता " इति प्रश्नात् प्राक्ते मन्त्रा अध्येतव्याः । एवमेव हि ब्रह्मयज्ञपारायणे च तेषामध्ययनं शिष्टैः क्रियते । तेषु अग्नये स्वाहेत्यनन्तरं सोमाय स्वाहेति केचित्पठन्ति, तदयुक्तम्, षड्भिरित्युक्तसंख्याविरोधप्रसङ्गात् । अत्र सर्वमन्त्रप्राधान्यात् स्विष्टकृतो न साधारणत्वम्, तेन तेषामन्यतमाविस्मरणे प्रयोगे समाप्तेपि तत्साङ्गमनुष्ठेयम् । तथा कात्यायनः—प्रधानस्याक्रियायां तु साङ्गं तत्क्रियते पुनः । तदङ्गस्याक्रियायां तु नावृत्तिर्नैव तत्क्रिया ॥ इति । स्विष्टकृतोङ्गत्वेन तदकरणे लोपप्रसक्तेः सर्वमन्त्रप्राधान्यपरभाष्यतात्पर्यदर्शनादिग्रन्थविरोधप्रसक्तेश्च नात्र तत्प्रसङ्गः ।

अन्ये पुनः शिष्टाः सोपाय स्वाहेति न पठन्ति न जुह्वति च । किंच षड्भिराद्यैः प्रतिमन्त्रमित्युपक्रान्तत्वाद्दशमैकादशाभ्यामिति मध्ये प्रयोगादुत्तमेन वैहायसमित्युपसंहाराच्च वैहायसबल्यन्तं वैश्वदेवाख्यमेकमेव कर्म, आद्यन्तव्यपदेशात् । किंच षडाहुत्यनन्तरं बलिहरणसंकल्पोन्धपरम्परैव ॥

## ❀ वैश्वदेवानुक्रमः ❀

अत्रायमनुक्रमः । गृहमेधिनो यदशनीयमन्नं ततो होमार्थं हविष्यमन्नमग्नावधिश्रृतं प्रोक्षितमेकस्मिन् पात्रे पञ्चधा विभज्य परिषिच्याहुतिमात्रमग्निदिग्भागादादायाग्नौ षडाहुतीर्हुत्वा परिषिच्याहविष्यमुत्तरया भस्मनि सोष्णे हस्तेन स्वाहेति हुत्वा हुतशेषमिश्रात्सूपव्यञ्जनसंसृष्टान्निर्ऋतिदिग्भागाद्वैहायसबल्यन्तं दत्वा आचम्य रुद्रदिग्भागादग्नं वायव्यादेवयज्ञं तत एव पितृभूतयज्ञौ मध्यमांशान्मनुष्ययज्ञं कुर्यादिति शिष्टघण्टापथः । किंच वैश्वदेवकर्मणो वैहायसबल्यन्तत्वात्तत्प्रदानस्य च बहिरेवानावृते देशे देयत्वाच्च तं बलिं बहिराकाश उत्क्षिप्याचम्य बलिपूद्धृतेषु सत्स्वागत्य अग्रदानदेवयज्ञादिकं कार्यम् । अग्निसमीपे तत्प्रदाने ॥ अनुद्धृतान् बलीन् दृष्ट्वा प्राणायामान् समाचरेत् । बुद्धिपूर्वं त्रिरावृत्तं स्वयमुद्धरणे तथा ॥ इति कात्यायनस्मृतेः । अष्टादशप्राणायामरूपमायश्चित्तं प्रसज्येत, तदप्रदाने असमाप्ते वैश्वदेवकर्मणि देवयज्ञादिकर्मानुष्ठानायोगात्तथा न कार्यम् । तथा कात्यायनः—अनुद्धृते बलावश्नन् प्राणायामान् समाचरेत् । स्वोद्धृते तु त्रिरावृत्तमज्ञाने त्वेकमेव तु ॥ इति । एवं वैश्वदेवानन्तरं देवयज्ञादयः कर्तव्याः । अत्र बोधायनः—अग्नये स्वाहेत्यादिषडाहुतीर्जुहोत्येष वैश्वदेवः संतिष्ठते, धर्माय स्वाहेत्यादि नमो रुद्राय पशुपतय इत्यन्ताभिर्बलीन् हरत्येतद्बलिहरणं संतिष्ठते, देवेभ्यः स्वाहेत्यग्नौ जुहोत्येष देवयज्ञः संतिष्ठते, पितॄनुद्दिश्यैकं ब्राह्मणं भोजयेदपि वा दक्षिणेनाग्निं दर्भान् संस्तीर्य तेषु पिण्डं ददाति पितृभ्यः स्वधास्त्वित्यपि वाऽपः स पितृयज्ञः संतिष्ठते, उत्तरेणाग्निं शुचौ देशे प्रागग्रान् दर्भान् संस्तीर्य गन्धपुष्पधूपदीपैरलंकृत्य बलिमुपहरति भूतेभ्यो नम इत्येष भूतयज्ञः संतिष्ठते, मनुष्ययज्ञार्थमतिथिमेकं भोजयेदपि वा हन्तकारं ब्राह्मणे ददाति मनुष्येभ्यो हन्तेति स मनुष्ययज्ञः संतिष्ठते । इति । परिशिष्टे च—वैश्वदेवबलिहरणानन्तरमग्रं दत्वा देवयज्ञार्थमुद्धृतादन्नाद्देवेभ्यः स्वाहेत्येकामाहुतिमग्नौ जुहुयुः, पितृयज्ञार्थमपि वैश्वदेवबलिहरणशिष्टादन्नात्प्राचीनावीती दक्षिणतोऽग्नेः पितृतीर्थेन पितृभ्यः स्वधास्त्विति बलिं हरेयुः, भूतयज्ञार्थमपि वैश्वदेवशिष्टादन्नादेवोत्तरतोऽग्नेर्देवतीर्थेन बलिमुपहरेयुर्भूतेभ्यो नम इति, मनुष्ययज्ञार्थमतिथिं भोजयेयुः ॥ इति । अत्र पक्षे अग्रार्थमेको देवयज्ञार्थमेको वैश्वदेवार्थमेक इति भागत्रयं कल्प्यम् । पक्षान्तरमाह याज्ञवल्क्यः—भूतपित्रमरब्रह्ममनुष्याणां महामखाः । देवेभ्यस्तु हुतादन्नशेषाद्भूतबलिं हरेत् ॥ भूतबलिः भूतयज्ञः । कौर्मे च—देवेभ्यस्तु हुतादन्नशेषाद्भूतबलिं हरेत् । भूतयज्ञः स वै ज्ञेयो भूतिदः सर्वदेहिनाम् ॥ एवमेव तात्पर्यदर्शने च अतो देवयज्ञशिष्टादेव पितृभूतयज्ञौ कार्यौ । वैश्वदेवशिष्टाद्धर्मादयः,मनुष्ययज्ञाग्रदाने भागद्वयेनेति

पञ्चधा विभक्तपक्षो यद्दादत्तः । अत्र विज्ञानेश्वरेण पुरुषसंस्कारपक्षोऽङ्गीकृतः । उभयार्थो निगमे प्रतिपादितः । वैश्वदेवबलिहरणं देवयज्ञादयः पञ्चमहायज्ञा गृहमेधिनां स्युः सूनादोषापनुत्तये यज्ञा इतरान्नसंस्कारतयापि । इति । **स्मृत्यर्थसारे** च–गृहस्थो वैश्वदेवाख्यं कर्म प्रारभते दिवा । अन्नस्य चात्मनश्चैव संस्कारार्थं तदिष्यते ॥ अग्नेर्दक्षिणतो दद्यात्पितृभ्यः पिण्डमप्यथ । दर्भेषु पितृयज्ञोयमोदपात्रात्समर्पणम् ॥ दर्भेपूत्तरतो वह्नेरापुष्पेभ्योर्चनं बलेः । भूतेभ्यो नम इत्येव दद्याद्यज्ञः स भौतिकः ॥ इदं वैश्वदेवकर्म व्यजनाकारमेवाग्निसमीपे शिष्टैरनुष्ठीयते । अत्र **कात्यायनः**–स्वधाकारं नराकारं तथा वल्मीकरूपकम् । चक्राकारं च काम्यानां बलीनां लक्षणं विदुः ॥ पञ्चस्वेतेषु विप्राणां नित्या चक्राकृतिर्भवेत् । चक्राकारमथाधारं कुर्यादग्निसमीपतः ॥ पक्वाभावे प्रवासे तु तण्डुलानोषधीस्तु वा । पयो दधि घृतं वापि कन्दमूलफलानि वा ॥ जुहुयादिति शेषः । अलाभे येन केनापि फलशाकोदकादिभिः । अथवा मन्त्रतः कुर्याद्वैश्वदेवं वैश्वदैविकः ॥ अत्र नियममाह **कात्यायनः**–पयोदधिघृतैः कुर्याद्वैश्वदेवं स्रुवेण तु । हस्तेनान्नादिभिः कुर्यादद्भिरञ्जलिना जले ॥ **शाण्डिल्यः**–केवलेनोदकेनापि शाकेन सुशृतेन वा । नित्यकर्म विधेयं स्याद्भक्तानां शुद्धिमिच्छताम् ॥ **बोधायनः**–प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते । पञ्चानां महतामेष नृयज्ञैः सह गच्छति ॥ प्रवासे कुरुते चैतान्यदन्नमुपपद्यते । न चेदुपपद्यते चान्नमद्भिरेतान् समाचरेत् ॥ **परिशिष्टे**–शाकं वा यदि वा पत्रं पुष्पं वा यदि वा फलम् । संकल्पयेद्यदाहारस्तेनाग्नौ जुहुयादपि ॥ **आश्वमेधिके**–अहुतं च हुतं चैव तथा प्रहुतमेव च । ब्राह्मं हुतं प्राशितं च पञ्च यज्ञान् प्रचक्षते ॥ जपो हुतो हुतो होमः प्रहुतो भौतिको बलिः । ब्राह्मं हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम् ॥ जपः ब्रह्मयज्ञः, होमः देवयज्ञः, द्विजाग्र्यार्चा मनुष्ययज्ञः । एवां ब्राह्मणालाभे **कूर्मपुराणे नियमो दर्शितः**–सर्वेषामप्यलाभे तु दत्तं गोभ्यो निवेदयेत् । मुख्यकल्पानन्तरं मनुष्ययज्ञं प्रकृत्य तत्रैवोक्तम् । हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः । दद्यादतिथये नित्यं बुध्येत परमेश्वरम् ॥ अत्र **शातातपः**–ग्रासमात्रा भवेद्भिक्षा अग्रं ग्रासचतुष्टयम् । **विज्ञानेश्वरे**–ग्रासमात्रं भवेद्भिक्षा पुष्कलं तच्चतुर्गुणम् । हन्तकारश्चतुर्भिः स्यादग्रं तत्त्रिगुणं भवेत् ॥ पितृयज्ञं प्रकृत्य **व्यासः**–विप्राभावे तु पिण्डं वा दद्याद्दक्षिणतो भुवि । कुक्कुटाण्डकमात्रस्तु पिण्ड इत्यभिधीयते ॥ अङ्गुष्ठपर्वमात्रं तु अवदानमिति स्मृतम् । किंच । यस्य चाग्नौ न क्रियते यस्य चाग्रं न दीयते । न तद्भोज्यं द्विजातीनां भुक्त्वा चोपवसेदहः ॥ इति मत्स्यवाक्यस्मरणात्, " अग्रं च देयम् " इति विधानाच्च वैहायसबल्यन्तेऽग्रं दत्त्वा देवयज्ञादयः कार्याः " अग्रं दत्त्वा देवयज्ञे " इति परिशिष्टे दर्शनात् । " इदमकामहताय श्रोत्रियायाग्रं ददामि " इत्यग्रदानमन्त्रः । किंच, " पञ्च वा एते महायज्ञाः सतति प्रजायन्ते सतति संतिष्ठन्ते देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञः " इति पञ्चमहायज्ञानभिधाय " यदग्नौ जुहोति " इत्यादिना तत्स्वरूपं श्रुत्यैव विवृतम् । ततश्च " जुहोतिचोदनात्स्वाहाकारप्रदाने " इति गौतमस्मरणात्, " देवेभ्यः स्वाहा " इति विधाना-

च, देवयज्ञे देवेभ्यः स्वाहेति मन्त्रः । तथा पितृयज्ञे, "पितृभ्यः स्वधा करोति" इति चोदनात्, " पितृभ्यः स्वधा नमः " इति दर्शनाच्च, पितृभ्यः स्वधा नमस्करोमीत्येव मन्त्रः । भूतयज्ञे च " भूतेभ्यो बलिं हरति " इति विधानात्, " मनुष्ययज्ञे चान्नं ददाति " इत्यनुशासनाच्च " भूतेभ्यो बलिं हरामि " इति, " मनुष्येभ्योऽन्नं ददामि हन्त" इति क्रमान्मन्त्रौ भवतः । यथाह जैमिनिः-विधिशब्दस्य मन्त्रत्वभावः स्यात्तेन चोदना । इति मन्त्रेनाम्नाते विधिशब्दस्यैव मन्त्रत्वं भाव्यम्, तेन हि चोद्यते । तथा संध्यामुपासीत, संध्यामुपासिष्ये, यजेत ज्योतिष्टोमेन, यक्ष्ये, उपनयीत माणवकम्, उपनेष्ये, पिता माता च दद्तुः, अमुष्य नाम धास्यावः, इत्यादि संकल्पो द्रष्टव्यः । " सायं प्रातः कुर्वीत वैश्वदेवम् " इति विधेर्वैश्वदेवं करिष्य इत्येवं संकल्पः । यज्ञशब्दवाच्यत्वात्पञ्चमहायज्ञेषु यक्ष्य इति संकल्पः । " अथो आहुः, सर्वेषु यज्ञक्रतुष्विति, होष्यन्नप उपस्पृशेत्, विद्युदसि विद्यमे पाप्मानमिति, अथ हुत्वोपस्पृशेत्, वृष्टिरसि वृश्च मे पाप्मानमिति" इति श्रुतेः विद्युद्वृष्टी च भवतः । सन्निपातितकर्तव्यतयोरौपासनहोमवैश्वदेवयोः " हस्तेनैते आहुती जुहोति " " हस्तेन जुहुयात् " इति दर्शनात्सन्निपातितकर्तव्यताकदेवयज्ञादिहोमश्च हस्तेनैव कार्यः, तयोरेव दृष्टत्वात् । अग्नौ होमो देवयज्ञे चोभयतः परिषेचनं यथा विधिः स्यात्, पितृयज्ञादिषु धर्मादिवत्तूष्णीं समन्तमेव परिषेचनमिति विवेकः । अत्र हारीतः-देवान्पीन् पितॄंश्चैव भूतानि ब्राह्मणांस्तथा । तर्पयन् विधिना विप्रो ब्रह्मभूयाय कल्पते॥ भृगुः-यत्फलं सोमयागेन प्राप्नोति धनवान् द्विजः । सम्यक् पञ्चमहायज्ञैर्दरिद्रस्तदवाप्नुयात् ॥ गुणफलाधिकारवत्संयोगपृथक्त्वन्यायेन फलार्थमपि भवतीति भावः । आपस्तम्बः-य एतानव्यग्रो यथोपदेशं कुरुते नित्यं स्वर्गः पुष्टिश्च। इति । एवं कृत्वातिथिपुरुषैः सह भुक्त्वा प्रतिपत्तिकर्म कुर्यात् । तथापस्तम्बः-अमत्रेभ्यो लेपान् संकृष्याद्भिः संसृज्योत्तरतः शुचौ देशे रुद्राय निनयेदेवं वास्तुशिवं भवति इति । अत्र मात्रब्रह्मयज्ञाकरणे मनुष्ययज्ञान्ते कुर्यात् । तथा कौर्मे-यदि स्यात्तर्पणादर्वाग्ब्रह्मयज्ञः कृतो नहि । कृत्वा मनुष्ययज्ञं वै ततः स्वाध्यायमारभेत् ॥ मनसेति शेषः । " ग्रामे मनसा स्वाध्यायमधीते " इति श्रुतेः । विधुरं प्रकृत्य अत्रिः-साग्निकः पितृयज्ञान्तं बलिकर्म समाचरेत् । अनग्निर्हुतशेषं तु बलिं काकबलिं हरेत् ॥ पुरुषयज्ञाद्येनान्यस्त्वनग्नेस्तु महामखे । तुशब्दाभ्यां देवादियज्ञचतुष्टयं व्यावर्तते । " स्वाध्यायाद्यविस्मृत्यर्थं नित्यं केवलमधीयीत, न ब्रह्मयज्ञं कुर्यात् " इति विशिष्यते । पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् । इति पराशरेण पञ्चयज्ञानां गृहमेधिविशिष्टत्वस्मरणात् । मनुष्येभ्योऽन्नदानमिति न विरोधः । वसिष्ठः-अनग्निकस्तु यो विप्रः सोऽन्नं व्याहृतिभिः स्वयम् । हुत्वा शकलहोमं च शिष्टं काकबलिं हरेत् ॥ विष्णुश्च-अन्नं व्याहृतिभिर्हुत्वा हुत्वा मन्त्रैश्च शाकलैः । प्रजापतेर्हविर्हुत्वा पूरयेन्नाधिकं ततः ॥ त्रिभिर्व्याहृतिभिरन्नाहुतीर्हुत्वा "प्रजापतये स्वाहा" इति च, ततो " देवकृतस्यैनसः " इत्याद्यैः शकलहोमं च कृत्वा होमं समापयेत् । ततोऽधिकमनग्नेः किंचिन्नास्तीत्यर्थः । एवमनग्नेरेतावत्येव धर्मशास्त्रे सिद्धेऽपि केचित्केनचित्कृतकारिकावल-

म्यनेन प्रकारान्तरमपि कुर्वन्ति, तत्र साधीयः, " सभार्यस्तु शुचिः स्नातः " इति सपत्नीकस्यैव व्यासेन वैश्वदेवस्मृतेः, " अथ गृहमेधिनोर्व्रतम् " इति दम्पती प्रक्रम्यैवापस्तम्बेन वैश्वदेवादिविधानात्, " पाणिग्रहणादधिकगृहमेधिनोर्व्रतम् " इति द्विवचनस्यान्यतरात्यये तत्रोक्तकर्मानधिकारज्ञापकत्वाच्च, " आवाभ्यां कर्माणि कर्तव्यानि " इत्युभयाधिकारत्वेनैव गार्ह्यकर्मादिसङ्कल्पाच्च। एवमप्याश्रमान्तरपरिग्रहार्हत्वाय सन्ध्यावन्दनमात्रं कार्यम्। अतः खलु " प्रायश्चित्तानर्हत्वप्रसक्तेर्द्विजातिकर्महानावपि पतितादेः सन्ध्याकर्मलोपो नास्ति " इति विज्ञानेश्वरः प्राह। अत्र व्यासः—ततः शनैः शनैर्दद्याद्बलिं काकशुनां तथा। मनुश्च—शुनां च पतितानां च श्वपचां पापरोगिणाम्। वायसानां कृमीणां च शनकैर्निक्षिपेद्भुवि॥ ऐन्द्रवारुणवायव्याः सौम्या याम्याश्च नैर्ऋताः। वायसाः प्रतिगृह्णन्तु भूमौ दत्तं मया बलिम्॥ श्रीविष्णुपुराणे च—यौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ। ताभ्यां बलिं प्रदास्यामि स्यातामेतावहिंसकौ॥ दत्वानेन विधानेन बलिं पश्चादुपस्पृशेत्। अतिथीन् भोजयेच्चैव कुमाराभंकन्यकाः॥ उपस्पृशेत् बलिदानानन्तरमाचामेदित्यर्थः। मार्कण्डेयः—एवं गृही बलिं कृत्वा गृहे गृहपतिः शुचिः। आप्यायनाय भूतानां कुर्यादुत्सर्गमन्ततः॥ उत्सर्गोऽस्य कथमित्यपेक्षिते, श्रीविष्णुपुराणे—देवा मनुष्याः पशवो वयांसि सिद्धाश्च यक्षोरगदैत्यसंघाः। प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मया प्रदत्तम्॥ पिपीलिकाः कीटपतङ्गकाश्च बुभुक्षिताः कर्मनिबन्धबन्धाः। प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो निसृष्टं मुदिता भवन्तु॥ येषां न माता न पिता न बन्धुर्नैवान्नसिद्धिर्न तथान्नमस्ति। तत्तृप्तयेऽन्नं भुवि दत्तमेतत्ते यान्तु तृप्तिं मुदिता भवन्तु॥ भूतानि सर्वाणि तथान्नमेतदहं च विष्णुर्न ततोन्यदस्ति। तस्मादिदं भूतहिताय भूतमन्नं प्रयच्छामि भवाय तेषाम्॥ चतुर्दशो लोकगणो य एष तत्र स्थिता ये खलु भूतसंघाः। तृप्त्यर्थमन्नं हि मया निसृष्टं तेषामिदं ते मुदिता भवन्तु॥ इत्युच्चार्य नरो दद्यादन्नं श्रद्धासमन्वितः॥ भुवि भूतोपकाराय गृही सर्वाश्रयो यतः॥ मनुः—एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति। स याति परमं स्थानं तेजोमूर्तिमथार्जुन॥ कृत्वैतद्बलिकर्मैवमतिथिं पूर्व्यमाशयेत्। भिक्षां च भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे॥ यती च ब्रह्मचारी च पकान्नस्वामिनावुभौ। तयोरन्नमदत्वा तु भुक्त्वा चान्द्रायणं चरेत्॥ शंखः—गोदोहमात्रमङ्गणेतिथिं प्रतीक्षमाण आसीत्। पुराणे—नाडिकायाश्चतुर्भागं गोदोहं ब्रुवते बुधाः। याज्ञवल्क्यः—बालसुवासिनीवृद्धगर्भिण्यातुरकन्यकाः। संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम्॥ सुवासिनी परिणीता पितृगृहे स्थिता दुहिता। आपस्तम्बः—शेषभोज्यतिथीनां स्यात्। मनुः—विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः। विघसं भुक्तशिष्टं स्याद्यज्ञशिष्टं तथामृतम्॥ भगवद्गीतायां च—यज्ञशिष्टाशिनः सन्तो मुच्यंते सर्वकिल्बिषैः। ते त्वघं भुञ्जते पापा ये पचन्त्यात्मकारणात्॥ अतो देवतोद्देशेन विना स्वार्थं पाको न कार्यः, "केवलाघो भवति केवलादी " इति प्रत्यवायश्रुतेः। स्मृत्यन्तरे च—सुवासिनी कुमारांश्च रोगिणो गर्भिणीं तथा। अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन्॥ पराशरः—अव्रता

ह्यनधीयाना यत्र भैक्षचरा द्विजाः । तं ग्रामं दण्डयेद्राजा चोरभक्तप्रदो हि सः ॥ दद्याच्च भिक्षात्रितयं पारिव्राड्ब्रह्मचारिणाम् । इच्छया च बुधो दद्याद्विभवे सत्यवारितम् ॥ **बोधायनः**—सर्वेभ्योतिथिभ्योऽभ्यागतेभ्य आचण्डालेभ्यः स्वागतं कार्यमोपधिविभागस्तु विभववता कार्योऽभावे भूमिरुदकं तृणानि कल्याणी वागित्येतानि । इति । **आपस्तम्बः**—शूद्रमभ्यागतं कर्मणि नियुञ्ज्यादथास्मै दद्यात्, असमुदेतश्चेदतिथिब्रुवाण आगच्छेदासनमुदकमन्नं श्रोत्रियाय ददामीत्येव दद्यादेवमस्य समृद्धं भवति । **आश्वमेधिके**—प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा । प्राप्तो यो वैश्वदेवान्ते सोतिथिः स्वर्गसंक्रमः ॥ **पराशरः**—चोरो वा यदि चण्डालः शत्रुर्वा पितृघातुकः । वैश्वदेवे तु संप्राप्ते सोतिथिः स्वर्गसंक्रमः ॥ अतः, द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत् । इति वचनमदेशकाले स्वयंप्रार्थनाविषयम् । **सुमन्तुः**—यस्याध्वखिन्नाः पथिका गृहमायान्ति कांक्षिताः । पूज्यन्ते तृणभूम्याद्यैः पितरस्तेन पुत्रिणः ॥ **आश्वमेधिके**—दूराध्वगं श्रान्तमनुव्रजन्ति देवाश्च सर्वे पितरोऽग्नयश्च । तस्मिन् द्विजे पूजिते पूजिताः स्युर्दिते निराशा अपि ते प्रयान्ति ॥ दिते खण्डिते, निराशीकृते । अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते । स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ **मनुः**—न पृच्छेद्गोत्रचरणौ न स्वाध्यायं न च श्रुतम् । चित्ते विभावयेत्तत्र देवोयं समुपस्थितः ॥ यानशय्यासनान्यस्य कूपोद्यानगृहाणि च । अदत्तान्युपयुञ्जान एनसः स्यात्तुरीयभाक् ॥ एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः । अनित्या हि तिथिर्यस्मात्तस्मादतिथिरुच्यते ॥ न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत् । धन्यं यशस्यमायुष्यं स्वर्ग्यं चातिथिपूजनम् ॥ **याज्ञवल्क्यः**—अध्वनीनोतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः । मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥ अभ्यागतो ज्ञातपूर्वस्त्वज्ञातोतिथिरुच्यते । **पराशरः**—पाषण्डिनो विकर्मस्थान् शठान् बैडालवृत्तिकान् । हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥ एते संज्ञाप्रकरणे निरुक्ताः । पट्स्वप्येतेषु यद्दत्तं विधिनाप्यर्जितं धनम् । दातुर्भवत्यनर्थाय परत्रादातुरेव च ॥ **बृहस्पतिः**—नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते । दीयमानं रुदत्यन्नं किं मया दुष्कृतं कृतम् ॥ वेदविद्याव्रतस्नाते श्रोत्रिये गृहमागते । क्रीडन्त्योषधयः सर्वा यास्यामः परमां गतिम् ॥ **मनुः**—न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत् । भोजनार्थं हि ते शंसन्वान्ताशीत्युच्यते बुधैः ॥ द्वाविमौ पुरुषौ लोके स्वर्गस्योपरि तिष्ठतः । अन्नप्रदाता दुर्भिक्षे सुभिक्षे हेमवस्त्रदः ॥ **याज्ञवल्क्यः**—सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च । भोजयेच्चागतान् काले सखिसंबन्धिबान्धवान् ॥ महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् । सत्क्रियान्वासनं स्वादु भोजनं सूनृतं वचः ॥ महोक्षं वेति गृहादीनामुपलक्षणम् । अयमर्थः—भवदर्थमयमस्माभिः कल्पित इति तत्प्रीत्यर्थं ब्रूयान्न तु प्रदानाय व्यापादनाय वा एतत्सर्वं भवदीयमिति ब्रूयादिति । सूनृतं वचः प्रिया वाचः, भिक्षुः यतिः । तद्विषये—यतिहस्ते जलं दद्याद्भैक्षं दद्यात्पुनर्जलम् । तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥ यतिर्यस्य गृहे भुंक्ते तस्य भुंक्ते हरिः स्वयम् । हरिर्यस्य गृहे भुंक्ते तस्य भुंक्ते जगत्त्रयम् ॥ **पराशरः**—

वैश्वदेवकृतं पापं भिक्षुरेको व्यपोहति । न भिक्षुणा कृतं पापं वैश्वदेवो व्यपोहति ॥ ततश्च वैश्वदेवात्प्रागेव भिक्षौ समागते सति भिक्षैव देया, वैश्वदेवाकरणे न दोष इति भावः । एतदेकभाण्डपक्वविषयम्, पृथक् पाके तु वैश्वदेवः कार्यः । **मनुः**–प्रोषितस्य दरिद्रस्य कुटुम्बात्प्रच्युतस्य च । अध्वानं वा प्रपन्नस्य भिक्षाचर्या विधीयते ॥ **तदेयम्**–यतये काञ्चनं दद्यात्तण्डुलं ब्रह्मचारिणे । पक्वान्नं तु गृहस्थाय दाता दुर्गाणि गच्छति ॥ इत्युक्तदोषो नास्तीति भावः । **चन्द्रिकायाम्**–माधूकरीं य आदाय ब्राह्मणेभ्यः प्रयच्छति । दाता तु नरकं याति भोक्ता भुञ्जीत किल्बिषम् ॥ अतो नान्यार्थं भिक्षेत ब्रह्मचारी यतिर्वा नाधिकमाहरेदित्यभिप्रायः । **यमः**–आहारमात्रादधिकं न किंचिद्भैक्षमाचरेत् । युज्यते स्तेयदोषेण कामतोधिकमाहरन् ॥ तस्मान्नोपहरेद्भैक्षमतिरिक्तं यतिर्व्रती । व्रती वर्णी, कामत इत्युक्तेरकामता न दोषः । हस्तदत्ता तु या भिक्षा लवणव्यञ्जनानि च । भोक्ता ह्यशुचितां याति दाता स्वर्गं न गच्छति ॥ हस्ते दद्यात्तु यः स्नेहं लवणव्यञ्जनानि च । दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम् ॥ तस्मादन्तर्हितं चान्नं पर्णेनाथ तृणेन वा । प्रदद्यान्न तु हस्तेन न हस्ते तु कदाचन ॥ अतो भोक्तृभ्यः पर्णादिनान्तर्हितमेव देयम्, न तु केवलेन हस्तेन हस्ते वा । हस्ते ददाति यः स्नेहं लवणव्यञ्जनानि च । दाता तु नरकं याति भोक्ता भुञ्जीत किल्बिषम् ॥ इति स्मृतेः । दर्व्याः क्वचिन्निषेधमाह **यमः**–दर्व्या देयं घृतान्नं च लवणव्यञ्जनानि च । तैलपक्वमपक्वं च न तु दर्व्या कदाचन ॥ **पराशरः**–आयसेन तु पात्रेण यदन्नमुपनीयते । शुनोच्छिष्टमसौ भुंक्ते दाता च नरकं व्रजेत् ॥ **भरद्वाजः**–अयस्पात्रमयोग्यं स्यात्स्नानाचमनकर्मसु । तत्र स्थितं घनरसं नोपभोग्यं द्विजातिभिः ॥ **शाण्डिल्यः**–वेत्रचर्मकृतं चैव तालपत्रकृतं कुशम् । आयसं वर्जयेद्भक्तौ यागयोग्योपयोगि च ॥ यागयोग्योपयोगि भगवदाराधनोपकरणम् । तेनान्नादीनि न दद्यादित्यर्थः ।

## ❀ अथ भोजनविधिः ❀

**आपस्तम्बः**–भोक्ष्यमाणस्तु प्रयतोपि द्विराचामेत् ॥ **स्मृत्यन्तरे**–यस्तु भोजनशालायां भोक्तुकाम उपस्पृशेत् । आसनस्थो न चान्यत्र स विप्रः पंक्तिदूषकः ॥ भोक्तुकामो यदा विप्र आचान्तो ह्यासने स्थितः । अभिवादं करोत्यस्य पुनराचमनं चरेत् ॥ **मनुः**–सायंप्रातर्द्विजातीनामशनं श्रुतिचोदितम् । नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥ **श्रुतिश्च**–तस्मात्सायंप्रातराश्येव स्यात् । **बोधायनः**–अन्तरा प्रातराशं च सायमाशं तथैव च । सदोपवासी भवति यो न भुंक्ते कदाचन ॥ **मनुः**–भुक्तवत्सु च विप्रेषु स्वेषु भृत्येषु चैव हि । भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती ॥ भृत्याः बालसुवासिन्यादयः । **अखण्डादर्शे**–उपलिप्य समस्थाने शुचौ श्लक्ष्णासनान्विते । चतुरस्रं त्रिकोणं च वर्तुलं चार्धचन्द्रकम् ॥ कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ॥ **तथात्रेयः**–चतुरस्रं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य तु । वर्तुलं चैव वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् ॥ यातुधानाः पिशाचाश्च ह्यसुरा-

अथ राक्षसाः । घ्नन्ति वै बलमन्नस्य मण्डलेन विवर्जितम् ॥ ब्रह्मा विष्णुश्च रुद्रश्च श्रीर्हुताशन एव च । मण्डलान्युपजीवन्ति तस्मात्कुर्वीत मण्डलम् ॥ गोमयं मण्डलं कृत्वा भोक्तव्यमिति निश्चितम् । पिशाचा यातुधानाद्या अन्नादाः स्युरमण्डले ॥ पात्रावस्थानतो न्यूनमधिकं वा न कारयेत् । **शाण्डिल्यः**–उपविश्य शुचौ देशे निश्छिद्रं चतुरस्रकम् । सविताने समीपे च भोक्तव्यं भगवन्मयैः ॥ समीपे इज्याप्रदेशस्य, भगवन्मयैः भगवद्ध्यानप्रचुरैः। कवले कवले कुर्वन् गोविन्दस्यानुकीर्तनम् । जीवन्मुक्तोन्यथा कुर्वन् केवलोदरपूरकः ॥ इति स्मृतेः । **मनुः**–आयुष्यं प्राङ्मुखो भुंक्ते यशस्यं दक्षिणामुखः । श्रियं प्रत्यङ्मुखो भुंक्ते ऋतं भुंक्ते उदङ्मुखः ॥ कामयमान इति शेषः । पञ्चार्द्रो भोजनं कुर्यात् प्राङ्मुखो मौनमास्थितः । हस्तौ पादौ तथैवास्यमेषा पञ्चार्द्रता मता ॥ **बोधायनः**–वाञ्छेत्क्षुत्तृट्परीतात्मा यच्चान्नं रससंयुतम् । गुप्ते चैव प्रदेशे तु प्राङ्मुखो वाप्युदङ्मुखः॥ **गोभिलः**–प्राङ्मुखोवस्थितो विप्रः प्रतीचीं वा यथारुचि । उत्तरं पितृकार्येषु दक्षिणं तु विवर्जयेत् ॥ **मनुः**–यो वेष्टितशिरा भुंक्ते यो भुंक्ते दक्षिणामुखः। सोपानत्कस्तु यो भुंक्ते तद्वै रक्षांसि गच्छति ॥ **व्यासः**–प्राङ्मुखोन्नानि भुञ्जीत सूर्याभिमुख एव वा । अत्र प्राङ्मुखोन्नानि भुञ्जीतेति नियमविधिः, अन्यस्तु काम्यः । " वाग्यतो दक्षिणामुखो भुञ्जीतानायुष्यं त्वेवंमुखस्य भोजनं मातुरित्युपदिशन्ति "इति स्मरणं पुष्टिकामस्य तिष्यश्राद्धविषयम् । अत्र विशेषमाह **शाण्डिल्यः**–वृद्धबालाङ्गनादीनां पूर्वाह्णे भोजनं भवेत् । यथाकालं समभ्यर्च्य सात्रिं देवं ततोशनम् ॥ भुवं स्पृष्ट्वा पदाग्रेण पात्रं सव्येन पाणिना । इज्याप्रदेशाभिमुखः समश्नीयात्प्रसन्नधीः ॥ अत्र नियममाह **मनुः**–न भुञ्जीतोद्धृतस्नेहं नातिसौहित्यमाचरेत् । नातिप्रगे नातिसायं न सायं प्रातराशितः ॥ अतिसौहित्यम् अतिभोजनम् । **स्मृतिमाधवीये**–प्रशस्तशुद्धपात्रेषु भुञ्जीताकुपितो द्विजः । सौवर्णे राजते कांस्ये पद्मपत्रपलाशयोः ॥ भोजनेऽभोजने चैव त्रिरात्रं फलमश्नुते । ब्रह्मपत्रे तु यो भुंक्ते मासमेकं निरन्तरम् ॥ त्रिभिश्चान्द्रायणैस्तुल्यं महापातकनाशनम् । पद्मपत्रे तु यो भुंक्ते मासमेकं निरन्तरम् ॥ स गच्छत्यूर्ध्वगामित्वं परं स्थानं च शाश्वतम् । ब्रह्मपत्रं पिशाचोदुम्बरम्, मध्यमं पलाशपत्रमित्यन्ये । **देवलः**–पिशाचोदुम्बरे पात्रे योश्नाति सततं द्विजः । सर्वपापविनिर्मुक्तः परमां गतिमाप्नुयात् ॥ **योगयाज्ञवल्क्यः**–अमत्रं वाथ कांस्यं वा राजतं वा हिरण्मयम् । तानि पात्राणि सर्वेषां यथाविभवमाचरेत् ॥ एक एव तु भुञ्जीत विमले कांस्यभाजने । पलाद्विंशतिकादर्वागत ऊर्ध्वं यथेच्छया ॥ इदं आत्रादिविषयम् । तदपि शिष्टाः परिहरन्ति । तथोक्तं **वासिष्ठे**–चतुष्षष्टिपलं तत्र कांस्यं मुख्यं प्रमाणतः । तदर्धेनापि कर्तव्यं ततो हीनं विसर्जयेत् ॥ इदमपि परमैकान्तिनां वर्ज्यमिति मुनयो वदन्ति । सौवर्णं राजतं वापि शूद्रपात्रं न तु स्पृशेत् । इतरेषां तु शुद्धिः स्यात्तापघर्षणतस्तथा ॥ किमुत ताम्रकांस्यादिपात्रमिति भावः । **स्मृत्यन्तरे**–पनसाम्रनारिकेलकदलीबिल्वपत्रके । वह्निनाकुक्षिपत्रे च चान्द्रायणफलं भवेत् ॥ **मनुः**–वटाश्वत्थार्कपर्णेषु कुम्भीतिन्दुकपत्रयोः । कोविदारकरञ्जेषु भुक्त्वा चान्द्रायणं चरेत् ॥

**पाद्मे**—बिल्वोदुम्बरबोध्यर्कवटपत्रेषु भोजनम् । वर्जयेत्साधको यत्नाद्भोजने दीर्घचिन्तनम् ॥ बोधिः अश्वत्थम्, बिल्वस्य विकल्पः । **व्यासः**—पलाशपद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत् । यतिश्च ब्रह्मचारी च लभते चान्द्रकं फलम् ॥ अत्र माधवीये पलाशपद्मपत्रयोर्व्यवस्था दर्शिता। वल्लीपलाशपत्रे च स्थलजे पौष्करेपि च । गृहस्थश्चेत्समश्नीयाच्छुद्ध्यै चान्द्रायणं चरेत् ॥ **स्मृतिरत्ने** च—कदलीगर्भपत्रे च पद्मपत्रे जलस्पृशि । वल्लीपलाशपत्रे च भुक्त्वा चान्द्रायणं चरेत्॥ ततश्च एतद्व्यतिरिक्तपलाशपद्मपत्रविषयो द्रष्टव्यः, सर्वत्र अपवादपरिहारेणोत्सर्गप्रवृत्तेः । **स्मृतिसंग्रहे**—अर्कपत्रे च पद्मे च अश्वत्थवटयोस्तथा । औदुम्बरे पलाशे च भुक्त्वा चान्द्रायणं चरेत् ॥ करे कर्पटके चैव पाषाणे ताम्रभाजने । वटाश्वत्थार्कपर्णेषु भुक्त्वा चान्द्रायणं चरेत् ॥ अत्र चान्द्रायणस्मरणं बहुकालाभ्यासविषयम्, प्रायश्चित्तस्य गुरुत्वात् । एवमन्यत्रापि बोद्धव्यम् । मृण्मये पर्णपृष्ठे वा कार्पासे तान्तवेश्मनि । नाश्नीयान्न पिबेच्चैव न करे न तथाञ्जलौ ॥ कार्पासे पत्रे, तान्तवे वस्त्रे । **शाण्डिल्यः**—नातिदोषावहं कांस्यं भोजनेश्वत्थमेव च । कुटुम्बिनामकामानामपीच्छन्तीह केचन ॥

## ❀ परिषेचनविधिः ❀

**सुमन्तुः**—अन्नं निधाप्य दर्व्या तु न हस्तेन कदाचन । पूजयित्वा तदन्नं चापोशनं तु समन्त्रकम् ॥ **बोधायनः**—महाव्याहृतिभिः प्रदक्षिणमन्नमुदकं परिषिच्य सव्येनामुञ्चन् । इति । सव्येन हस्तेनामुञ्चन्—पात्रं स्पृशन् इत्यर्थः । **उशना अपि**—सत्यं त्वर्तेनेत्यनेनोदकं परिषिच्यामृतोपस्तरणमसीति प्राशयेत । इति । **पराशरश्च**—ततो महाव्याहृतिभिः पात्रं तत्परिषिच्य च । सत्यं त्वर्तेन चाद्भिश्च हस्तं प्रक्षालयेत्ततः ॥ आसीनश्चासने भोक्तुं पादौ भूमिं प्रतिष्ठितौ । पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः ॥ ततो विधायाचमनं ध्यात्वा चान्नाधिदैवतम् । समन्त्राचमनं कृत्वा प्राणाद्याहुतिपञ्चकम् ॥ दशनस्पृष्टिरहितं कृत्वा भुंजीत वाग्यतः । **अखण्डादर्शे**—अथामृतोपस्तरणमसीति च निपीय कम् । हुत्वा प्राणाहुतीः पंच पात्रं वामेन संस्पृशन्॥ भुक्त्वामृतापिधानमसीति च निपीय कम् । आचान्तः पुनराचामेन्मुखहस्तौ विशोध्य च ॥ कं जलम् ॥

## ❀ आपोशनविधिः ❀

**स्मृत्यर्थसारे**—आपोशनं वामभागे सुरापानसमं भवेत् । तदेव दक्षिणे भागे सोमपानसमं भवेत्॥ **मार्कण्डेयः**—आपोशनं सोमपानं यावदन्नं न लंघितम् । हस्तेन लंघितं चान्नमभोज्यं मनुरब्रवीत्॥ **स्मृत्यर्थसारे**—आपोशनं करे कृत्वा पात्रे कृत्वा तिलोदकम् । पूरणं तु पुनः कृत्वा सुरापानसमं भवेत ॥ **पुराणे**—आपोशनं चासनं च तैलाभ्यङ्गं तथैव च । स्वयं करकृतं प्रोक्तमायुःश्रीपुत्रहानिदम् ॥ आपोशनं करे कृत्वा आशीर्वचनमब्रवीत् । अभोज्यं तद्भवेदन्नं भुक्त्वा चान्द्रायणं चरेत् ॥ **वृद्धवसिष्ठः**—सोदकं दक्षिणं पाणिं कुर्यादन्नं प्रदक्षिणम् । अपेयं तद्भवेदम्बु पीत्वा चान्द्रायणं चरेत्॥ भोजने तिष्ठमानास्तु स्वस्ति कुर्वन्ति ये द्विजाः । न देवास्तृप्तिमायान्ति निराशाः

पितरस्तथा ॥ भुञ्जानोभिभवेद्यस्तु तदन्नं परिवर्जयेत् । **चिन्तामणौ**–अंगुष्ठतर्जनी चैव मध्यमा च तृतीयका । तिस्रोनामांगुलिश्चैव प्रशस्ताः पात्रधारणे ॥ **शातातपः**–आपोशनमकृत्वा तु यो भुंक्तेऽनापदि द्विजः । भुंजानो वा यदि ब्रूयाद्गायत्र्यष्टशतं जपेत् ॥ **शाण्डिल्यः**–भोजनाद्यन्तयोर्दिव्यपादाम्भ्वेकं समन्त्रकम् । पिबेद्वश्यं सद्रक्तो मिश्रितं वार्हणादिभिः ॥ **आपस्तम्बः**–नापजहीतापजहीत वा इति । भोजनान्तं वामेन हस्तेन पात्रं स्पृशन् भुंजीत न पात्रं मुंचेत्, प्राणाहुत्यूर्ध्वं त्यजेद्वा ॥

## ❀ प्राणाहुतिनियमः ❀

तथा **स्मृत्यर्थसारे**–प्राणाहुतिषु सर्वासु हुतास्वेव त्यजेद्गृही । पात्रस्य धारणं मौनं यावत्सिद्धिर्भवेद् भुजेः ॥ आस्येनान्नस्य निक्षेपो मन्त्रैः प्राणादिसंज्ञकैः । तदेव भोजनं ज्ञेयं तत्रैव नियमाः स्मृताः ॥ अतोवश्यं पात्रस्पर्शः कार्यः । समुत्थितस्तु यो भुंक्ते यो भुंक्ते मुक्तभाजने । एवं वैवस्वतः प्राह भुक्त्वा सान्तपनं चरेत् ॥ इति प्रायश्चित्तस्मृतेः । मुक्तभाजने वामहस्तेनेति शेषः । समुत्थितः उत्तरापोशनमकृत्वा मध्ये उत्थाय पुनरुपविश्य यो भुंक्ते इत्यर्थः । **गौतमः**–अन्नं निधाय सत्पात्रे परिषिच्य समन्त्रकम् । वामहस्तेन संस्पृश्य जुहुयात्प्राणसंज्ञितैः ॥ अत एव वामहस्तेन भुक्तिपात्रस्पर्शः कार्य इत्यर्थः । **याज्ञवल्क्यः**–आपोशनेनोपरिष्टादधस्ताच्चैव भुंजता । अनग्नममृतं चैव कार्यमन्नं द्विजन्मना ॥ उपरिष्टादधस्ताच्च आपोशनाख्यकर्मणा अन्नमनग्नममृतं च कार्यम् । अत्र **शातातपः**–परिधानमपोशानं पूर्वमाच्छादनं परम् । भवत्यन्नमनग्नं हि सोत्तरीयं तथामृतम् ॥ **पराशरः**–अशनं पूजितं नित्यं बलमूर्जं प्रयच्छति । अपूजितं तु यद् भुक्तमुभयं तु हिनस्ति तत् ॥ **स्मृत्यन्तरे**–कार्ये हस्तमपोशाने प्रक्षाल्यैव समन्त्रकम् । जलं पीत्वा ततः पंच हुत्वा भुंजीत चाहुतीः ॥ **व्यासः**–प्राङ्मुखोन्नानि भुंजीत सूर्याभिमुख एव वा । पंचार्द्रो भोजनं कुर्यात्पात्रं भूम्यां निधाय वै ॥ उपवासेन तत्तुल्यं मनुराह प्रजापतिः । महाव्याहृतिभिस्त्वन्नं परिषिच्योदकेन तु ॥ अमृतोपस्तरणमसीत्यापोशनक्रियां चरेत् । स्वाहाप्रणवसंयुक्तां प्राणायान्नाहुतिं क्षिपेत् ॥ अपानाय ततो हुत्वा व्यानाय तदनन्तरम् । उदानाय ततो हुत्वा समानायेति पंचमीम् ॥ शेषमन्नं यथाकामं भुंजीत व्यञ्जनैर्युतम् । विज्ञाय धर्ममेतेषां जुहुयादात्मविद्द्विजः । अत्र प्राणाग्निहोत्रमन्त्राणाम् ऋषिश्छन्दो देवताः सदुपदेशतो लभ्या इति न लिख्यन्ते । **गोभिलः**–तर्जनीमध्यमांगुष्ठैः प्राणायान्नाहुतिर्भवेत् । मध्यमानामिकांगुष्ठैरपानायाहुतिर्भवेत् ॥ कनिष्ठानामिकांगुष्ठैर्व्यानाय जुहुयात् ततः । कनिष्ठतर्जन्यंगुष्ठैरुदाने चाहुतिं क्षिपेत् ॥ सर्वांगुलिभिरादाय समानायाहुतिर्भवेत् ।

१ पुस्तकान्तरे–ऋषिश्छन्दोदेवताश्च सदुपदेशतो लभ्या इत्यत्रापि विलिख्यन्ते । अखण्डादर्शे– प्राणाग्निहोत्र वक्ष्यामि यथाशास्त्र द्विजन्मनाम् । प्राणाहुतिमन्त्रस्य, रुक्मवर्ण क्षुधाग्निऋषि', गायत्री छन्द, आदित्यो देवता, प्राणे निविष्ट इति । क्षुधाग्नये आदित्यायेदम् । अपानाहुतिमन्त्रस्य, गोक्षीरवर्ण श्रद्धाग्नि ऋषि', उष्णिक्छन्द', सोमो देवता, अपाने निविष्ट इति ' श्रद्धाग्नये सोमायेदम् । व्यानाहुतिमन्त्रस्य, पद्मनालवर्णो हुताशन ऋषि', अनुष्टुप् छन्द , अग्निर्देवता, व्याने निविष्ट इति । हुताशनाग्नये इदम् ।

**श्रीवाराहे**–निवेद्य हृदि तद्रूपः परिषेकादिपूर्वकम् । जुहुयादाहुतीः पञ्च विष्णौ प्राणादिसंज्ञके ॥ **मनुः**–मध्यमानामिकांगुष्ठैर्गृहीत्वान्नं मितं पुनः । प्राणाय चेत्यपानाय व्यानाय च ततः परम् ॥ उदानाय समानाय स्वाहेति जुहुयात्क्रमात् । मध्यमानामिकांगुष्ठैरेव पञ्च प्राणाहुतीः कुर्यादित्यत्रोक्तम् । **आश्वमेधिके विशेष उक्तः**–कुर्यात्प्राणाहुतीः पञ्च समादाय समन्ततः । इति । **आगमप्रामाण्ये**–हृदि ध्यायन् हरिं तस्मै निवेद्यान्नं समाहितः । मध्यमानामिकांगुष्ठैर्जुहुयादाहुतीः क्रमात् ॥ इदं सर्वाश्रमसाधारणम् । आपोशनेनोपरिष्टादधस्ताच्चैव भुञ्जता । अनग्नममृतं चैव कार्यमन्नं द्विजन्मना ॥ इति भुञ्जता कर्तव्यत्वविधानात्, द्विजन्मत्वानपायात्, एषु वचनेष्वधिकारिविशेषानुक्तेश्च । अत्र **श्रुतिः**–विष्णनात्तमश्नन्ति विष्णुना पीतं पिबन्ति विष्णुना घ्रातं जिघ्रन्ति । इति । **श्रीभागवते**–त्वयोपभुक्तस्रग्गन्धवासोऽलंकारचर्चिताः । उच्छिष्टभोजिनो दासास्तव मायां तरेमहि ॥ **महाभारते**–पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः । प्रापणं भगवद्भुक्तं भुञ्जते चाग्र्यभोजनम् ॥ **स्मृत्यन्तरे**–प्रापणेन महाविष्णोर्वैश्वदेवं करोति यः । प्राणाग्निहवनं चैव तेन लोका जितास्त्रयः ॥ **श्रीगीतायाम्**–अहं वैश्वानरो भूत्वा प्राणिनां देहमास्थितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ **सुमन्तुः**–दन्तचर्वणमाहुतीनां वर्जयेदन्तरे निगरेत् । इति । **हारीतः**–पञ्च प्राणाहुतीः कुर्याच्छुद्धान्नैरभिघारितैः । उच्छिष्टेन घृतं दद्यात् प्राग्घृते लवणान्वितम् ॥ प्राणाहुतेः पश्चादेव लवणान्वितं व्यञ्जनं दद्यादित्यर्थः । प्राणाहुतिस्तु शुद्धान्नैरेव कार्या । तथा **पराशरः**–अस्नाताशी मलं भुंक्ते ह्यजपः पूयशोणिते । अहुताग्निः कृमिं भुंक्ते ह्यदाता विषमश्नुते ॥ प्राणाहुतेस्तु यः पूर्वं लवणान्वितमीक्षते । तदन्नं वर्जयेद्विद्वान् भक्षयन् सर्वदोषभाक् ॥ **और्वः**–अनिन्दन् भक्षयेदित्थं वाग्यतोऽन्नमकुत्सयन् । पञ्च ग्रासान्महामौनी प्राणाद्याप्यायनाय तु ॥ ( प्राणान् ध्यात्वायतव्रत इति पाठान्तरम् )। **याज्ञवल्क्यः**–कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया । आपोशनक्रिया पूर्वं सत्कृत्यान्नमकुत्सयन् ॥ **आपस्तम्बः**–पवित्रं धारयेद्विप्रः कौशेयं दक्षिणे करे । भुञ्जानस्तु विशेषेण सोऽन्नदोषैर्न लिप्यते ॥ **भरद्वाजः**–ब्रह्मयज्ञे जपे होमे ब्रह्मग्रन्थिर्विधीयते । भोजने वर्तुलः प्रोक्त एवं धर्मो न हीयते ॥ **चन्द्रिकायाम्**–भक्ष्यं भोज्यं च लेह्यं च नमो नारायणेति यः । अभिमन्त्र्य स्पृशन् भुंक्ते स याति परमां गतिम् ॥ **शङ्खः**–पीतावशेषितं पीत्वा पानीयं ब्राह्मणः क्वचित् । त्रिरात्रं तु व्रतं कुर्याद्वामहस्तेन वा पुनः ॥ अत्र परिहारमाह **व्यासः**–पात्रशिष्टं तु यत्तोयं पाने पादावनेजने । भूमौ तदम्बु विस्राव्य शिष्टं त-

---

उदानाहुतिमन्त्रस्य, इन्द्रकोपवर्णः स्पर्शाग्निऋषिः, बृहती छन्दः, वायुर्देवता, उदाने निविष्ट इति । स्पर्शाग्नये वायव इदम् । समानाहुतिमन्त्रस्य, विद्युद्वर्णो विरूपाग्निऋषिः, पंक्तिश्छन्दः, पर्जन्यो देवता, समाने निविष्ट इति । विरूपाग्नये पर्जन्यायेदं न मम । अयमग्निर्वैश्वानरोयं वायुदैवत्यः सचेतनात्मने गोविन्दाय स्वाहेति । चेतनात्मने गोविन्दायेदम् । एतज्ज्ञो विधिवद्भुक्त्वा ब्रह्मभूयाय कल्पते । एतद्धि शास्त्रसद्भाव भोक्तव्यं तत्प्रयत्नतः ॥ इत्येतावदधिकं दृश्यते ।

स्पानमर्हति ॥ **आश्वमेधिके**–पानीयं तु पिबेयेन तत्पात्रं नृपसत्तम। अनुच्छिष्टं भवेत्तावद्यावद्भूमौ न निक्षिपेत् ॥ **अत्रिः**–आस्येन न पिबेत्तोयं तिष्ठन्नञ्जलिना पिबेत्। वामहस्तेन शय्यायां तथैवान्यकरेण वा ॥ तोयं पाणिनखस्पृष्टं ब्राह्मणो न पिबेत्कचित्। सुरापानेन तत्तुल्यं मनुः स्वायम्भुवोऽब्रवीत् ॥ वामहस्तेन यो भुंक्ते योऽपः पिबति वा द्विजः। सुरापानेन तुल्यं स्यादित्येवं मनुरब्रवीत् ॥ स्वहस्ते विद्यमानेऽपि ब्राह्मणो ज्ञानदुर्बलः। तोयं पिबति वक्त्रेण श्वयोनौ जायते ध्रुवम् ॥ **वसिष्ठस्मृतौ** च–जलं पिबेन्न हस्ताभ्याम्। इति। अत्र वामहस्तभोजननिषेधो दक्षिणहस्तस्य शक्यत्वे। **स्मृत्यन्तरे**–भुञ्जानो दक्षिणं बाहुं न संयुंज्यात्कदाचन। उद्धृत्य वामहस्तेन तृषार्तः सलिलं पिबेत् ॥ अतो वामहस्तेन पाननिषेधो भोजनकालादन्यत्र। **माधवीये**–शङ्खशुक्ती च करकं यच्चान्यत्पानभाजनम्। दक्षिणेनैव तत्कुर्यान्न वामेन कदाचन ॥ नारिकेलोदकं कांस्ये ताम्रपात्रेऽर्पितं मधु। गव्यं च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना ॥ **यमः**–न हस्तेन पिबेत्तोयं भुक्तौ तु द्विजसत्तमः। अन्येन कांस्यपात्रेण पिबेदन्यैश्च साधनैः ॥ भुक्तिग्रहणादन्यत्र पाणिना पाने न दोषः, अञ्जलिना तन्निषेधात्। **पराशरः**–अर्धभुक्तेन यो विप्रस्तत्पात्रेण जलं पिबेत्। भुक्त्वा दैवं च पित्र्यं च आत्मानं चोपघातयेत् ॥ अत्र **शाण्डिल्यो विशेषमाह**–कुर्वंस्तु भोजनं कर्म सर्वेषु गृहमेधिषु। प्रसाद्य तानतुज्ञाप्य समश्नीयात्प्रसन्नधीः ॥ नावश्यं भोजने मौनं कुटुम्बाश्रमवासिनाम्। वाचोपचारः कर्तव्यो भुञ्जतां सहभोजने ॥ पिबेद्भोजनपात्रेण पाणिना वा न भोजने। प्रभूतं न पिबेत्तोयं नापिबन्नशनं चरेत् ॥ पीतावशिष्टं चषके पुनस्तन्न पिबेज्जलम्। शाकाद्यं नोत्सृजेत्स्थाल्यां पाणिना वापि भुञ्जताम् ॥ स्नानाचमनपानार्थमर्हणार्घ्यर्थमम्बु यत्। उपयुक्तं भगवता पानीयं तत्प्रकल्पयेत् ॥ मधुपर्कस्तथान्नाद्यं यद्युक्तं परमेष्ठिना। प्राणवद्रक्षणीयं तद्विनियोगावसानकम् ॥ भुवं स्पृष्ट्वा पदाग्रेण पात्रं सव्येन पाणिना। अश्नीयान्मन्दमाच्छाद्य पादौ वस्त्रान्तरेण च ॥ अङ्के नारोपयेत्पादं पाणिना नाक्रमेद्भुवम्। अङ्गं वा न स्पृशेत्पद्भ्यां पादं पादान्तरेण च ॥ **अखण्डादर्शे**–अन्नस्य वा निषेधार्थमुपदंशस्य वा पुनः। धर्मार्थी विसृजेद्वाचं नासद्वाचं कदाचन ॥ एवमवश्यवक्तव्यार्थे वाग्विसर्जनानुज्ञानाद्व्रापयेव वक्तव्यम्। **अत्रिः**–शब्देनापः पयः पीत्वा शब्देन घृतपायसम्। शब्देनापोशनं कृत्वा सुरापानसमं भवेत् ॥ **पैठीनसिः**–न कुर्यात्क्रन्दनं शब्दं क्रोधमन्यत्र चिन्तनम्। शिशूनां भर्त्सनं चापि श्वचण्डालादिदर्शनम् ॥ अशुचीनां तथा मध्ये प्रेक्षतामप्यनश्नताम्। **व्यासः**–नाश्नीयात्प्रेक्षमाणानां प्रमादादपि दुर्नृणाम्। न यज्ञशिष्टादन्यच्च न क्रुद्धो नान्यमानसः ॥ आत्मार्थं भोजनं यस्य रत्यर्थं यस्य मैथुनम्। वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवितम् ॥ नार्धरात्रे न मध्याह्ने नाजीर्णे नान्यवस्त्रधृत्। न च भिन्नासनगतो न शयानः स्थितोऽपि वा ॥ न भिन्नभाजनेऽश्नीयान्न भूम्यां न च पाणिषु। नान्धकारे न चाकाशे न च देवालयादिषु ॥ **शाण्डिल्यः**–नाङ्कस्थे दारुसंस्थे वा नाकाशे नान्धकारिते। नाश्नीयाच्छयनारूढो न दीपे निहते पुनः ॥ न दृष्ट्वा केशकीटाद्यं न चावैष्णव-

दर्शने । वैष्णवः " न चलति निजवर्णधर्मतो यः " " निजाचारादविप्लुतः " इत्युक्तलक्षणः । केशेति सहपाकविषयम्, अन्यस्य परिहारोक्तेः । संग्रहे–शून्यालये न चाश्नीयाद्विहायसि जलाशये । विहायसि–हर्म्यादौ । तथापस्तम्बः–दद्भिरपूपस्य नावच्छिन्द्याद्यस्य कुले म्रियेत न तत्रानिर्दशे भोक्तव्यं तथानुत्थितायां सूतिकायामन्तःशवे चाप्रयतोपहतमन्नमप्रयतं नत्वभोज्यमप्रयतेन तु शूद्रेणोपहृतमभोज्यं पदा वोपहतं सिचा वा शुना वापपात्रेण वा दृष्टं सिचा वोपहृतं दास्या वा नक्तमाहृतं भुंजानं वा यत्र शूद्र उपस्पृशेदनर्हद्भिर्वा समानपंक्तौ भुंजानेषु वा यत्रानूत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा कुत्सयित्वा वा यत्रान्नं दद्युर्मनुष्यैरवघ्रातमन्यैर्वामेध्यैर्न विभुञ्जीत तथा प्रासादे कृतभूमौ तु भुञ्जीत ॥ इति । दद्भिरपूपान्नावच्छिन्द्यात्किं तु हस्तेनावच्छिद्य भक्षयेत्, उपलक्षणमिदम् । शाकमूलफलेक्षूणि दन्तच्छेदैर्न भक्षयेत् । इति स्मृतेः । यस्येति शातातपः–ब्राह्मणादीनामाशौचे यः सकृदोदनमश्नाति तस्य तावदाशौचं यावत्तेषामाशौचस्यापगम आशौचव्यपगमे प्राजापत्यं कुर्यात् । इति । यत्त्वङ्गिरोवचनम्–ब्रह्मक्षत्रविशां भुक्त्वा न दोषस्त्वग्निहोत्रिणाम् । सूतके शाव आशौचेप्यस्थिसंचयनात्परम् ॥ इति तद्युगान्तरविषयमापद्विषयं वेति मन्तव्यम् । अन्तरिति अत्र मनुः–नाद्यादन्तःशवे ग्रामे नाधीते न जुहोति च । तानि वीथ्यन्तरे कुर्यादेकादशधनुष्परे ॥ अत्र वक्तव्यविशेषोस्मदुक्ते आशौचशतकव्याख्याने विस्तरेण द्रष्टव्यः । अप्रयतेति अशुचिना उपहतं स्पृष्टमन्नमप्रयतं नत्वभोज्यम्, अद्भिः प्रोक्षितं भस्मादिना संस्पृष्टमभिघारितं वाचा प्रशस्तं भोज्यमेव, कः पुनरप्रयतस्याभोज्यस्य च भेदः, अप्रयतेन विप्रेण संस्पृष्टमप्रयतम्, लशुनादिकमभोज्यम्, तत्प्रोक्षणादिनापि न भोज्यमिति । अप्रयतेनेति–शूद्रेणोपहृतमानीतं स्पृष्टमस्पृष्टं चाभोज्यम्, प्रोक्षणादिनापि न भोज्यमित्यर्थः । पदेति–पदा पादेन वा, सिचा वस्त्रेण वा, उपहतं स्पृष्टमभोज्यम् । एवं शुना वा पतितचण्डालादिना अपपात्रेण वा स्पृष्टं दृष्टं च, सिचा वस्त्रेणानीतं दास्या वा, नक्तमाहृतं न भोज्यम् । वस्त्रग्रहणात्पात्रान्तरानीतस्य न दोषः, नक्तग्रहणाद्दिवा न दोषः । भुञ्जानं शूद्र उपस्पृशेद्यदि तदा न भुञ्जीत । शूद्रग्रहणमप्रयतोपलक्षणम् । अनर्हद्भिः प्राप्त्यदुर्वृत्तादिभिः सपंक्तौ न भुञ्जीत । भुञ्जानेषु च यद्येक उत्थाय भोजनाद्बहिरन्यस्य उच्छिष्टं शिष्यादिभ्यः प्रयच्छेदाचामेद्वा उत्तरापोशनं कुर्यात्तस्यां पंक्तौ इतरे न भुञ्जीरन् । अतो भुञ्जानेष्वेकोपि न विरमेत्, विरमन् भोजनकण्टक इत्युच्यते । कुत्सयित्वा वेति–मूर्खैर्मेधेमप्रात्यैरपादिभिर्गर्हयित्वा दत्तमन्नं न भुञ्जीत, तथा मनुष्यैर्मार्जारादिभिरवघ्रातं न भोज्यम् । नापि प्रासादे दारुमये मञ्चे वा सौधे शुद्धेपि पात्रे न भुंजीत, किं तु कृतभूमौ गोमयादिना संस्कृतायां भूमौ भुञ्जीतेति । संवर्तः–दृष्ट्वोदक्याश्वचण्डालान् प्रतिलोमांस्तथानुजान् । भुञ्जानोनुद्गिरन् भक्तं त्रिरात्रादेकतः शुचिः ॥ भुक्तमुद्गिरन्नेकरात्रेण, अनुद्गिरंस्तु त्रिरात्रोपवासेन शुचिः । अनुजान् अनुलोमजान् । स्मृत्यन्तरे–चण्डालपतितं श्वानमुदक्यां सूतिकां तथा । दृष्ट्वा भुक्त्यन्तरे स्नात्वा मानस्तोकेत्यृचं जपेत् ॥ संवर्तश्च–उदक्यामथ चण्डालग्रामसूकरकुक्कुटान् । भुक्त्यन्तरे

समाचरेत् ॥ **दक्षधर्मौ**–भुञ्जानेन तु विप्रेण स्पृष्टा चेत्स्याद्रजस्वला । प्राजापत्येन शुद्धिः स्यात्प्राणायामशतेन च ॥ यत्तु **सुमन्तुनोक्तम्**–लशुनपलाण्डुगृञ्जनकवकभक्षणे सावित्र्यष्टसहस्रेण मूर्ध्नि संपातान्नयेदेतानेव व्याधितस्य भिषक्क्रियाप्रतिषिद्धानि भवन्ति यानि चैवंप्रकाराणि तेष्वपि न दोषः । इति । संपातान्नयेत् उदकबिन्दून् प्रक्षिपेदित्यर्थः । **स्मृत्यर्थसारे**–उच्छिष्टस्पर्शनं ज्ञात्वा तत्पात्रं परिहृत्य च । तत्पात्रं परिहृत्याथ भूमिं समनुलिप्य च ॥ अन्नं पात्रे निधायैव तदन्नं परिवेष्टयेत् । परिषिच्य ततः पश्चाद्भोजयेच्च न दोषकृत् ॥ एकपंक्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् । तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत् ॥ भुञ्जानेषु तु विप्रेषु योऽग्रे पात्रं विमुञ्चति । स चोरः स च पापिष्ठो ब्रह्मघ्नस्म उच्यते ॥ अप्येकपंक्त्यां नाश्नीयाद्ब्राह्मणः स्वजनैरपि । को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् ॥ **पराशरः**–एकपंक्त्युपविष्टानां दुष्कृतं यद्दुरात्मनाम् । सर्वेषां तत्समानं स्याद्यदि पंक्तिर्न भिद्यते ॥ अग्निना भस्मना वापि स्तम्भेन सलिलेन वा । दर्भादिना च मार्गेण पंक्तिभेदो विधीयते ॥ द्वारेण निम्नभूम्या वा षड्भिः पंक्तिर्विभिद्यते । एकपंक्त्युपविष्टा ये न स्पृशेयुः परस्परम् ॥ भस्माद्यैः कृतमर्यादा न तेषां संकरो भवेत् । आदिशब्देन अग्निना भस्मना वेत्युक्तसंग्रहः । **संग्रहे**–नराणां भोजने काले यदि दीपो विनश्यति । पाणिभ्यां पात्रमादाय भास्करं मनसा स्मरेत् ॥ पुनर्दीपमसौ दृष्ट्वा तच्छेषं भोजयेन्नरः । पुनरन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥ **याज्ञवल्क्यः**–नाश्नीयाद्भार्यया सार्धमन्नं चापि विशेषतः । न भार्यादर्शनेऽश्नीयान्नैकवासाश्च संविशेत् ॥ **संग्रहे**–एकपंक्तौ तु भुञ्जान उच्छिष्टं स्पृशते यदि । द्वौ विप्रौ विसृजेदन्नं भुक्त्वा चान्द्रायणं चरेत् ॥ अत्रायं विवेकः । मिथः स्पर्शे तदन्नमत्यजन्नित्युक्तं द्रष्टव्यम्, भुक्तिपात्रोच्छिष्टस्पर्शे तु द्वौ विप्रौ विसृजेदन्नमित्युक्तं ग्राह्यम्, अन्यतरस्योच्छिष्टस्पर्शाभावे तत्पात्रं परिहृत्य चेत्युक्तं कर्तव्यमिति । **पराशरः**–सकृच्छूद्रीं द्विजो गत्वा चरेत्कृच्छ्राणि विंशतिम् । त्रयैव कुर्यात्कृच्छ्राणि वृषलीसहभोजने ॥ इदमभ्यासविषयम् । **शातातपः**–यदा भोजनकाले तु ह्यशुचिर्भवति द्विजः । भूमौ निधाय तं ग्रासं स्नात्वा विप्रो विशुध्यति ॥ विशुध्यत्युपवासेन त्रिरात्रेणैव भोजने । अशुचिः श्वादिस्पर्शनेन श्वशूद्रादिस्पर्शनेन च ग्रासनिधानस्नानाच्छुद्धिः । मुखस्थग्रासभोजने त्रिरात्रेणेति विवेकः । **पराशरः**–एकपंक्त्युपविष्टानां विप्राणां सहभोजने । यद्येकोपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ॥ मोहाद्भुञ्जीत चेद्विप्रः पंक्त्यामुच्छिष्टभोजनम् । प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनं स्मृतम् ॥ एकपंक्त्युपविष्टानां विषमं यः प्रयच्छति । यश्चैवाश्नाति विषमं कुर्याद्ब्रह्महणो व्रतम् ॥ एतच्चिराभ्यासविषयम् । पंक्तिभेदी पृथक्पाकी नित्यं ब्राह्मणनिन्दकः । आदेशी वेदविक्रेयी पञ्चैते ब्रह्मघातकाः ॥ पंक्तिभेदी विषमदाता, पृथक्पाकी स्वस्यान्येषां च श्लाघ्याश्लाघ्यवस्तुभेदपाककरः, ब्राह्मणनिन्दकः श्रोत्रियो वा अश्रोत्रियो वा तमपि न निन्देत् । आदेशी–यमिच्छेन्नरकं नेतुं सपुत्रपशुबान्धवम् । तं देवेष्वाधिपं कुर्याद्गोषु च ब्राह्मणेषु च ॥ इत्युक्तः । वेदविक्रेयी–भृत्यापनं भाध्ययनं प्रश्नपूर्वप्रतिग्रहः । याजनाध्यापने वादः षड्विधो वेदवि-

पाठे एकस्यां पंक्तौ पार्श्वस्थे आचान्ते न भोक्तव्यं भस्मोदकादिविच्छेदेन विना । वृथा देवताद्युद्देशमन्तरेण साधिताः । ( कृसरसंयावपायसापूपशष्कुलीर्वर्जयेत् ) कृसरः तिलमिश्रगुडः, तिलमुद्गसिद्धौदनश्च । संयावः क्षीरगुडघृतादिकृत उत्कारिकाख्यः । शष्कुली अपूपभेदः । अनेन देवान्नस्य मन्वादिभिर्वर्ज्यत्वस्मरणं देवतार्थत्वेन साधितानिवेदितविषयम्, न निवेदितविषयम्, तस्य भोज्यत्वात् ॥ " विष्णुनात्तमश्नन्ति " इति श्रुतेः । **चन्द्रिकायाम्**–हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः । पादोदकं च निर्माल्यं यस्य मूर्ध्नि स वैष्णवः ॥ इति । नैवेद्यमन्नं तुलसीविमिश्रितम् । इति च । **पार्वतीं प्रति रुद्रः**–गुरोः स्वस्य यदुच्छिष्टं भोज्यं तत्पुत्रशिष्ययोः । सर्वेषां च गुरोर्विष्णोरन्नाद्यं च निवेदितम् ॥ अन्येषां न प्रदातव्यं ह्युच्छिष्टं हिमवत्सुते । अज्ञानाद्यदि दद्यात्तु सह भोजनमेव तत् ॥ **षण्मुखं प्रति रुद्रः**–दुर्लभो भगवद्भक्तो भावो वै यस्य तत्वतः । पादोदकं प्रति शुभं शुद्धान्ने च निवेदिते ॥ स्रगादिके चोपभुक्ते ह्युपभोगार्थमेव च । अतश्च भावहीनानामभक्तानां च षण्मुख ॥ निषिद्धं भगवन्मन्त्रदत्तपूतमखिलं हि यत् । **शाण्डिल्यः**–वासोभूषणमाल्यादिगन्धतैलं तथौषधम् । सर्वं भगवते नित्यमुपयुञ्ज्यान्निवेदितम् ॥ **दत्तात्रेयः**–निर्माल्यं भक्षयित्वैवमुच्छिष्टमगुरोरपि । मासं पयोव्रतो भूत्वा जपन्नष्टाक्षरं सदा ॥ ब्रह्मकूर्चं ततः पीत्वा पूतो भवति मानवः । निर्माल्यं नैव संभक्षेत्कूपे सर्वं च निक्षिपेत् ॥ स्वीकुर्याद्यदि सम्मोहाद्रौरवं नरकं व्रजेत् । मक्षिकापादमात्रं तु निर्माल्यं न स्पृशेत्कचित् ॥ यदि स्पृशेत्स मोहाद्वै नरकेषु निमज्जति । **विज्ञानेश्वरे**–शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने । उपोषितस्त्वहोरात्रं पंचगव्येन शुध्यति ॥ माक्षिकं फाणितं शाकं गोरसं लवणं घृतम् । हस्तदत्तानि भुक्त्वा तु दिनमेकमभोजनम् ॥ इदमकामविषयम् । कामतस्तु **हारीतः**–हस्तदत्तभोजने दुष्टपंक्तिभोजने अभ्यक्तमूत्रपुरीषकरणे मृतसूतकान्नभोजने शूद्रैः सह भुक्ते त्रिरात्रमभोजनम् ॥ इति । **पैठीनसिः**–लवणं व्यञ्जनं चैव घृतं तैलं च गोरसम् । लेह्यं पेयं च भक्ष्यं च हस्तदत्तं न भक्षयेत् ॥ एतानि हस्तदत्तानि भुक्त्वा सान्तपनं चरेत् । एतदभ्यासविषयम् । **शंखः**–पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् । केशकीटावपन्नं च मृत्प्रक्षेपेण शुध्यति ॥ **अन्नपदादर्शे**–केशकीटाद्युपहते चाद्भिर्वा घृतेन वा । प्रक्षिप्य चाज्यपूतान्नं भुञ्जीत प्रयतात्मवान् ॥ केशं कीटं नखं प्राश्य ह्यस्थिकण्टकमेव वा । हेमतप्तं घृतं पीत्वा तत्क्षणादेव शुध्यति ॥ इदमकामकृतविषयम् । कामतस्तु " दिनमेकमभोजनम् " इति विज्ञानेश्वरेणोक्तं द्रष्टव्यम् । **पाद्मे**–चण्डालश्वपचैः स्पृष्टो विण्मूत्रे कुरुते द्विजः । त्रिरात्रं तत्र कुर्वीत भुक्तोच्छिष्टे षडाचरेत् ॥ उच्चरन् यदि भुञ्जीत भुक्त्वा वा मेहने कृते । अहोरात्रोषितः स्नात्वा जुहुयात्सर्पिषाहुतीः ॥ व्याहृतिभिरिति शेषः । **अत्रिः**–क्षीरं लवणसंयुक्तमुच्छिष्टे घृतसेचनम् । रजस्वलामुखास्वादः सुरापानसमं स्मृतम् ॥ आसनारूढपादो वा वस्त्रार्धप्रावृतोपि वा । मुखेन धमितं भुक्त्वा कृच्छ्रं सान्तपनं चरेत् । **शंखः**–मुखेन धमितं भुक्त्वा व्रतं चान्द्रायणं चरेत् ॥

## ❀ पार्वणश्राद्धादिभोजने प्रायश्चित्तम् ❀

**विज्ञानेश्वरः**-भुक्तश्चेत्पार्वणश्राद्धे प्राणायामान् षडाचरेत् । उपवासस्त्रिमासादि वत्सरान्तं प्रकीर्तितः ॥ प्राणायामत्रयं वृद्धावहोरात्रं सपिण्डने । आमरूपे स्मृतं नक्तं व्रतं पार्वणिके तथा ॥ द्विगुणं क्षत्रियस्यैव त्रिगुणं वैश्यभोजने । साक्षाच्चतुर्गुणं ह्येतत्स्मृतं शूद्रस्य भोजने ॥ प्राजापत्यं नवश्राद्धे पादोनं चार्धमासिके । त्रैपक्षिके तदर्धं तु पंचगव्यं द्विमासिके ॥ इदमापद्विषयम् । अनापदि तु **हारीतः**-चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मिश्रके । एकाहं तु पुराणेषु प्रायश्चित्तं विधीयते ॥ मिश्रके आद्यमासिके । द्वितीयादौ, **षट्त्रिंशन्मते**-प्राजापत्यं नवश्राद्धे पादोनं चार्धमासिके । त्रैपक्षिके तदर्धं स्यात्पादो द्वैमासिके तथा ॥ पादोनं कृच्छ्रमुद्दिष्टं षाण्मासे तु तथाब्दिके । अर्धमासिके ऊनमासिके । सर्पादिहतश्राद्धविषये **शंखः**-चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः । पक्षत्रये त्रिकृच्छ्रं स्यात्षण्मासे कृच्छ्रमेव तु ॥ आब्दिके पादकृच्छ्रं स्यादेकाहं पुनराब्दिके । अत ऊर्ध्वं न दोषः स्याच्छंखस्य वचनं यथा ॥ इदं स्तेनपतितक्लीबादिविषयम्, शूद्रश्राद्धविषयं च । **भरद्वाजः**-अपांक्तेयान्यदुद्दिश्य श्राद्धमेकादशेऽहनि । ब्राह्मणस्तत्र भुक्त्वान्नं तथा चान्द्रायणं चरेत् ॥ आमश्राद्धे तथा भुक्त्वा तप्तकृच्छ्रेण शुध्यति । संकल्पिते तथा भुक्त्वा त्रिरात्रं क्षपणं भवेत् ॥ **यमः**-मासिकादिषु योऽश्नीयादसमाप्तव्रतो द्विजः । त्रिरात्रमुपवासोऽस्य प्रायश्चित्तं विधीयते ॥ प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुध्यति । कामतस्तु स एवाह-मधु मांसं च योऽश्नीयाच्छ्राद्धं सूतक एव वा । प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत् ॥ आमश्राद्धे भवेदर्धं प्राजापत्यस्य सर्वदा । अभ्यासे पुनरुपनयनं बोधायनोक्तं द्रष्टव्यम् । अनुक्तप्रायश्चित्तश्राद्धे तु **उशनाः**-दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः । ततः संध्यामुपासीत शुध्येत्तु तदनन्तरम् ॥ संस्कारश्राद्धभोजने **व्यासः**-निर्वृत्ते चूडहोमे तु प्राङ्नामकरणात्तथा । चरेत्सान्तपनं भुक्त्वा जातकर्मणि चैव हि ॥ अतोऽन्येषु च भुक्त्वान्नं संस्कारेषु द्विजोत्तमः । नियोगादुपवासेन शुध्यते निन्द्यभोजने ॥ ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा । जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥ द्विज इति शेषः । **शातातपः**-नवश्राद्धं, ग्रामयाजकान्नं संग्रहभोजनम् । नारीप्रथमगर्भान्नं भुक्त्वा चान्द्रायणं चरेत् ॥ संग्रहो ग्रहणकालः ॥

## ❀ ग्रहणे भोजनकालनिर्णयः ❀

**मार्कण्डेयः**-ग्रहणं तु भवेदिन्दोः प्रथमादधियामतः । भुञ्जीतावर्तनात्पूर्वं प्रथमे प्रथमादधः ॥ निशि प्रथमे यामे ग्रहणे सति दिवा प्रथमयामादर्वाक् भुञ्जीत, अन्यत्रावर्तनादधः । **बालादिविषये**-सायाह्ने ग्रहणं चेत्स्यादपराह्ने न भोजनम् । अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे ॥ भुञ्जीत सङ्गवे चेत्स्यान्न पूर्वं भोजनक्रिया । **व्यासः**-नाद्यात्सूर्यग्रहात्पूर्वं सायाह्ने न शशिग्रहात् । ग्रहकाले तु नाश्नीयात्स्नात्वाश्नीयात्तु मोचने ॥ मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।

अमुक्तयोरस्तगयोरद्यादृष्ट्वापरेऽहनि ॥ मेघादिच्छन्नशशिसूर्ययोर्दर्शनाभावेपि शास्त्रतो विमुक्तिज्ञानाद्भुञ्जीत। तथा वृद्धगौतमः–चन्द्रसूर्यग्रहे नाद्याद्यास्मिन्नहनि पूर्वतः। राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनम् ॥ ग्रस्तास्तमये काळद्वये न भुञ्जीतेति भावः। तथा विष्णुधर्मोत्तरे–अहोरात्रं न भुञ्जीत चन्द्रसूर्यग्रहेऽस्तगौ। मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम् ॥ वृद्धगार्ग्यः–संध्याकाळे यदा राहुग्रस्तौ तु शशिभास्करौ। तदहर्नैव भुञ्जीत रात्रावपि कदाचन ॥ चन्द्रस्य ग्रस्तोदये तदहर्नैव भुञ्जीत, रवेर्ग्रस्तोदये पूर्वरात्रौ न भुञ्जीतेत्यर्थः। ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्। रवेर्ग्रस्तोदये पूर्वरात्रौ भुञ्जीत नैव हि ॥ भुक्त्वा ग्रहणकाले तु द्विजश्चान्द्रायणं चरेत्। तस्मिन्नेव दिने भुक्त्वा श्राद्धे तु त्र्यहमाचरेत् ॥ कात्यायनः–चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव। ग्रहणं तु भवेत्तस्मिन् पूर्वं भोजनक्रिया ॥ व्यासः–नराणां भोजने काले यदि दीपो विनश्यति। पाणिभ्यां पात्रमादाय भास्करं मनसा स्मरन् ॥ पुनर्दीपमसौ दृष्ट्वा तच्छेषं भोजयेन्नरः। पुनरन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥ याज्ञवल्क्यः–नाश्नीयाद्भार्यया सार्धमन्नं वापि विशेषत. । न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥ दक्षः–भार्यया सह नाश्नीयान्न भार्यादर्शने तथा ॥

## ❀ अभोज्यान्नानि ❀

आपस्तम्बः–संघस्वमभोज्यं परिक्रुष्टं च सर्वेषां शिल्पाजीविनां ये च शस्त्रमाजीवन्ति ये चाधिं भिषग्वार्धुषिको दीक्षितः क्रितराजकः। "आग्नेयोमीयसंस्थायामेव हुतायां वपायां दीक्षितस्य भोक्तव्यं यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन्" इति हि ब्राह्मणम्, क्लीबो राज्ञां प्रेषकोऽहविर्याजी चार्यविधिना च प्रव्रजितो यश्चाग्नीनपास्यति यश्च सर्वान्वर्जयते सर्वान्नी च श्रोत्रियो निराकृतिर्वृषलीपतिर्मत्त उन्मत्तो बद्धोणिकः प्रत्युपविष्टो यश्च प्रत्युपवेशयते तावन्तं कालम् इति। संघ· समूहः, तस्य स्वम् अन्नम्, न भोज्यम्। परिक्रुष्टं भोक्तुकामा आगच्छतेत्याहूय दत्तम्, सर्वेषामिति। शिल्पं चित्रनिर्माणादि। अत्र मनुः–गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान्। प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥ शस्त्रमिति विप्रविषयमिदम्। " परीक्षार्थमपि ब्राह्मण आयुधं नाददीत " इति स्मृतेः। अत्र मनुः–अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥ आधिः स्वगृहेऽन्यं वासयित्वा ततो भृतिग्रहणम्। परं भूमौ कुटिं कृत्वा स्तोमार्थं वासयेत्तु यः। स आधिजीवी विज्ञेयः सर्वकर्मबहिष्कृतः ॥ इति प्रसिद्धेः। भिषक् जातिवैद्यः। वृद्ध्युपजीवी वार्धुषिकः। दीक्षणीयेष्ट्या संस्कृतस्यान्नभोजने पक्षचतुष्टयं स्पष्टम्। क्लीबः नपुंसकः। अहविर्याजी नररुधिरादिनाभिचारादौ याजकः। चारी चारः। अविधिना–"विधिहीनमसृष्टान्नम् " इत्यविधिना दत्तान्नमभोज्यमित्यर्थः। प्रव्रजितः यतिः। तत्र हारीतः–यत्यन्नं यतिपात्रस्थं यतिना प्रेरितं च यत्। अन्नत्रय न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥ यश्चेति–" वीरहा वा एष देवानां योऽग्निमुद्वासयते " इति श्रुतेः। अग्नि-

हीनस्य "नान्नमद्यादनापदि" इति स्मृतिः । यस्तु भोजने न कंचिद्भोजयति सर्वांश्च वर्जयति, यश्च सर्वेषामन्नं भुंक्ते, तौ द्वौ श्रोत्रियावप्यभोज्यान्नौ । निराकृतिः-निःस्वाध्यायः, शिष्टैस्तिरस्कृतो वा । वृषलीपतिः "स विप्रो वृषलीपतिः" इति स्मर्यते, न तु शूद्रापतिः, कलौ शूद्राविवाहनिषेधात् । चण्डाली वर्धकी वेश्या रजस्था या च कन्यका । ऊढा च या सगोत्रेण वृषल्यः परिकीर्तिताः ॥ इति विज्ञानेश्वरेणोक्तायाः पतिर्वा । मत्तः मदकरद्रव्यसेवया भ्रमकार्ति गतो विद्यादिना गर्वितो वा । उन्मत्तः भ्रान्तः । बद्धः निगडितः । अभिकः पुत्राच्छ्रुतग्राही, ऋणादिना कारणेनाधमर्णं निरुद्ध्य तत्पार्श्व उपविष्टः प्रत्युपविष्टः । इतरस्तत्परिहारमकुर्वन्यस्तेन सहासीनः प्रत्युपवेशयिता । एते मत्तादयस्तावन्तं कालमभोज्यान्नाः, यावन्मदाद्यपगमः । ऋणस्य दाता अभिक इत्यन्ये । याज्ञवल्क्यः-कदर्यबद्धचोराणां क्लीबरङ्गावतारिणाम् । वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम् ॥ कदर्यः-आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् । लोभाद्यः पितरौ भृत्यान् स कदर्य इति स्मृतः ॥ इत्युक्तो लुब्धः, बद्धः वाचा निरुद्धः, चोरः ब्राह्मणस्वव्यतिरिक्तपरस्वापहारी, क्लीबः नपुंसकः, रङ्गावतारी नटचारणमल्लादिः, वेणुच्छेदजीवी वैणः, अभिशस्तः-पतनीयैः कर्मभिरभियुक्तः, वार्धुष्यः निषिद्धवृद्ध्युपजीवी, गणिका पण्यस्त्री, गणदीक्षी बहुयाजकः, एतेषामन्नं नाद्यात्, "अग्निहीनस्य नान्नमद्यात्" इत्यनुवृत्तेः, अग्निहीनस्य श्रौतस्मार्तोऽधिकारहीनस्य शूद्रस्य प्रतिलोमजस्य, अधिकारवतोऽप्यग्निहीनस्य च अन्नमनापदि नाद्यात् । चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् । क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥ चिकित्सकः भिषग्वृत्त्युपजीवी, न तु धर्मार्थं भेषजकरः, आतुरः अचिकित्स्यरोगी, पुंश्चली व्यभिचारिणी, मत्तः विद्यादिना गर्वितः, विद्विट् शत्रुः । अत्र महाभारते-द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत् । पाण्डवान् द्विषसे राजन् मम प्राणा हि पाण्डवाः ॥ क्रूरः दृढाभ्यन्तरकोपः, उग्रः वाक्कायव्यापारेणोद्वेजकः, पतितः ब्रह्महादिः, व्रात्यः पतितसावित्रीकः । अत्र भरद्वाजः-व्रात्यः संस्कारहीनः स्यादवकीर्णी क्षतव्रतः । कुष्ठी स्वदोषरोगात्तस्यः पापिमात् पापकृत्तमः ॥ दाम्भिकः धर्मध्वजः लोकरञ्जनार्थमनुष्ठायी, उच्छिष्टभोजी परभुक्तोज्झिताशी । अत्र दक्षः-परोच्छिष्टभोजिनामन्नमभोज्यम् । इति, एतेषां चिकित्सकादीनामन्नं नाद्यात् । अवीरस्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् । शस्त्रविक्रयिकर्मारतन्तुवायश्ववृत्तिनाम् ॥ अवीरस्त्री स्वतन्त्रा, व्यभिचारमन्तरेण पतिपुत्ररहितेत्यन्ये । स्त्रीजितः सर्वत्र स्त्रीवशवर्ती, ग्रामयाजी ग्रामस्य शान्त्यादिकारी, बहूनामुपनेता वा, शस्त्रविक्रयी शस्त्रविक्रयोपजीवी, कर्मारः लोहकारस्तक्षादिश्च, तन्तुवायः सूचीशिल्पोपजीवी, श्ववृत्तिः श्वभिरुपजीवी । नृशंसराजरजककृतघ्नवधजीविनाम् । चेलधावसुराजीवसहोपपतिवेश्मनाम् ॥ पिशुनानृतिनोश्चैव तथा चाक्रिकवन्दिनाम् । एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥ नृशंसः निर्दयः, राजा भूपतिः, तत्साहचर्यात्पुरोहितश्च, रजकः वस्त्रादीनां नीलादिरागकारकः, कृतघ्नः कृतस्योपकारस्य हन्ता, अत्र मनुः-ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा । निष्कृ-

तिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ चेलधावकः वस्त्रनिर्णेजकः, उपपतिः जारः, सहोपपतिना वेश्म यस्यासौ सहोपपतिवेश्मा, माहिषक इत्यर्थः, अत्र पराशरः—माहिषी वृच्यते भार्या सा चैव व्यभिचारिणी । तद्दोषं क्षमते यस्तु स वै माहिषकः स्मृतः ॥ पिशुनः परदोषख्यापकः, अनृती मिथ्यावादी, चाक्रिकः तैलिकः, शाकटिकश्चेत्येके, अभिशस्तपतितचाक्रिकतैलिकेति भेदेनाभिधानात्, एतेषां कदर्यादीनामन्नं नाद्यादित्यर्थः । अत्र पैठीनसिः—कुनखी श्यावदन्तकः पित्रा विवदमानः स्त्रीजीतः कुष्ठी पिशुनः सोमविक्रयी वाणिजको ग्रामयाजकोभिशस्तको वृपल्यभिजातः परिवित्तिः परिविविदानो दिधिषूपतिः पुनर्भूपुत्रश्चोरः काण्डपृष्ठः सेवकश्चेत्यभोज्यान्ना अपाङ्क्तेया अश्राद्धार्हाश्च, एषां दत्वा च भुक्त्वा च अज्ञानात्त्रिरात्रम् ॥ इति । विज्ञाने तु याज्ञवल्क्यः—भुक्त्वातोन्यतमस्यान्नममत्या क्षपणं त्र्यहम् । मत्या भुक्त्वा चरेत्कृच्छ्रं रेतोविण्मूत्रमेव च ॥ लिखितः—भुक्त्वा वार्धुषिकस्यान्नमव्रतस्यासुतस्य च । शूद्रस्य च तथा भुक्त्वा त्रिरात्रं स्यादभोजनम् ॥ परपाकनिवृत्तस्य परपाकरतस्य च । अपचस्य च भुक्त्वान्नं द्विजश्चान्द्रायणं चरेत् ॥ एतदभ्यासविषयम् । तल्लक्षणं च स एवाह—गृहीत्वाग्निं समारोप्य पञ्चयज्ञान्न निर्वपेत् । परपाकनिवृत्तोसौ मुनिभिः परिकीर्तितः ॥ पञ्च यज्ञान् स्वयं कृत्वा परान्नमुपजीवति । सततं प्रातरुत्थाय परपाकरतस्तु सः ॥ गृहस्थधर्मयुक्तो यो ददातिपरिवर्जितः । ऋषिभिर्धर्मतत्त्वज्ञैरपचः परिकीर्तितः ॥ पूर्वोक्ताभोज्यान्नव्यतिरिक्तदुराचारान्नभोजने षट्त्रिंशन्मते विशेषः । निराचारस्य विप्रस्य निषिद्धाचरणस्य च । अन्नं भुक्त्वा द्विजः कुर्याद्दिनमेकमभोजनम् ॥ इदमज्ञानविषयम् । ज्ञाने तु द्विगुणम् । विहितं यदकामानां कामात्तद्द्विगुणं भवेत् । इति मनुस्मृतेः । अत्रैव संवत्सराभ्यासे तत्रैवोक्तम्—उपपातकयुक्तस्य ह्यब्दमेकं निरन्तरम् । अन्नं भुक्त्वा द्विजः कुर्यात्पराकं तद्विशोधनम् ॥ विज्ञानेश्वरे—भक्षयेद्यदि नीलीं तु प्रमादाद्ब्राह्मणः क्वचित् । चान्द्रायणेन शुद्धः स्यादापस्तम्बोब्रवीन्मुनिः ॥ और्वः—अश्नीयात्तन्मयो भूत्वा पूर्वं च मधुरं रसम् । लवणाम्लौ तथा मध्ये कटुतिक्तादि चान्ततः ॥ प्राग्द्रवं पुरुषोश्नन्वै मध्ये तु कठिनाशनः । अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति ॥ भगवद्गीतायाम्—आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः । आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनः ॥ गुणभेदेन आहारस्त्रिविधः । रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः । सत्त्वगुणोपेतस्य सत्त्वमया आहारा आयुरादिविवर्धनाः । रस्याः रसोपेताः, स्निग्धाः स्नेहसंयुक्ताः, स्थिराः स्थिरपरिणामाः, हृद्याः रमणीयवेषाः, एवंविधाः सत्त्वमया आहाराः सात्त्विकस्य प्रियाः ॥ कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः । आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ अतिशैत्यातितैक्ष्ण्यादिना दुरुपयोगास्तीक्ष्णाः, शोषकरा रूक्षाः, तापकरा विदाहिनः, एवंरूपा आहारा राजसस्येष्टाः । ते च रजोमयत्वाद्दुःखशोकामयवर्धनाः । यातयामं गतरसं पूति पर्युषितं च यत् । उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ यातयामं चिरकालावस्थितम्, गतरसं त्यक्तस्वाभाविकरसम्, पूति दुर्गन्धोपेतम्, पर्युषितं कालातिपत्त्या रसान्तरापन्नम्, रात्रौ जलस्थितमन्नं

वा, उच्छिष्टं गुर्वादिभ्योन्येषां भुक्तशिष्टम्, अमेध्यं अयज्ञार्हमयज्ञशिष्टं चेत्यर्थः । एवंविधं तमोमयं भोजनं तामसप्रियं भवति । अतो हितैषिभिः सत्त्वविवृद्धये सात्त्विकाहार एव सेव्यः । **मनुः**–श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः । मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ॥ तान् प्रजापतिरित्याह मा कृध्वं विषमं हि तत् । श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ॥ अत एवापस्तम्बः–पुण्यस्येप्सतो भोक्तव्यम्, पुण्यस्यानीप्सतो न भोक्तव्यम्, इति । **प्रजापतिः**–श्रद्धान्नस्य भोक्तव्यं चोरस्यापि विशेषतः । नत्वेव बहुयाज्यस्य यश्चोपनयते बहून् ॥ बहूपनेता चाभोज्यान्नः । **व्यासः**–निहन्त्यन्नं मनः प्राणांश्चक्षुः श्रोत्रे तथैव च । स्मृतिं मेधां धृतिं शुक्रं पारक्यं योन्नमश्नुते ॥ परपाकान्नपुष्टस्य सततं गृहमेधिनः । इष्टं दत्तं तपोधीतं यस्यान्नं तस्य तद्भवेत् ॥ यस्यान्नं तस्य ते पुत्रा अन्नाद्रेतः प्रजायते । **बोधायनः**–द्वावेवाश्रमिणौ भोज्यौ वानप्रस्थस्तथा गृही । मुनेरन्नमभोज्यं स्यात्सर्वेषां लिङ्गिनां तथा ॥ **स्मृतिमाधवीये**–अभोज्यान्ना इमे पण्डमार्जारौ ह्याखुकुक्कुटौ । पतिताश्चापविद्धाश्च चण्डाला अपचास्तथा ॥ एते पण्डादयः संज्ञाप्रकरणे द्रष्टव्याः । अत्र **शातातपः**–यो हि हित्वा विवाहाग्निं गृहस्थ इति मन्यते । अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥ **अत्रिः**–पीतशेषं तु न पिबेत्खादितं तु न खादयेत् । नखलूनं च नाश्नीयात्पक्वं परगृहागतम् ॥ **स्मृतिदीपिकायाम्**–यो भुंक्तेनुपनीतेन यो भुंक्ते च स्त्रिया सह । यो भुंक्ते कन्यया सार्धं द्विजश्चांद्रायणं चरेत् ॥ **दक्षः**–किल्बिषं हि मनुष्याणामन्नमाश्रित्य तिष्ठति । यो हि यस्यान्नमश्नाति स तस्याश्नाति किल्बिषम् ॥ **आपस्तम्बः**–अन्नादेर्भ्रूणहा मार्ष्टि । इति च । स्वपाके वर्तमाने तु परपाकं निषेवते । स श्वत्वं सूकरत्वं च गर्दभत्वं च गच्छति ॥ गृहस्थपतनं ह्येतत्परपाकोपजीवनम् । परपाकेन यो जीवेत्स्वपाके तु गृहे स्थिते ॥ स पापात्मा महाघोरे चिरं तिष्ठति दारुणे । इति च यमादिवचनं निरयविषयम् । परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते । इति याज्ञवल्क्यस्मरणात् । अतः शिष्टान्नं भोज्यमेव । तथा च **व्यासः**–सदाचारस्य विप्रस्य तथा वेदान्तवेदिनः । भुक्त्वान्नं मुच्यते पापात्पावनं नात्र संशयः ॥ अन्यत्र च–महापातकसंस्पर्शी श्रोत्रियस्य गृहं व्रजेत् । याचयेदन्नममृतं तदभावे जलं पिबेत् । **माघमाहात्म्ये**–प्रार्थयेद्वैष्णवस्यान्नं प्रयत्नेन विचक्षणः । सर्वपापविशुद्ध्यर्थं तदभावे जलं पिबेत् ॥ विष्णुदासस्य ये दासा वैष्णवान्नभुजश्च ये । तेपि क्रतुभुजां वैश्य गतिं यान्ति निराकुलाः ॥ इति । किंच, "भुञ्जीत पितृसेवितम्" इत्यस्यैकोद्दिष्टविशेषे निषेधो दृश्यते । नवश्राद्धे तु यच्छिष्टं गृहे पर्युषितं च यत् । दम्पत्योर्भुक्तशिष्टं च न भुञ्जीत कदाचन ॥ इति विज्ञानेश्वरेण नवश्राद्धे शेषस्यैवाभोज्यत्वप्रतिपादनात् । आपस्तम्बेन "न चातद्गुणायोच्छिष्टं दद्युः" इति श्राद्धविशेषेपि निमन्त्रितविसदृशगुणेभ्य एव पितृशेषदाननिषेधात्, "इष्टैः सह भुज्यताम्" इतीष्टानां च शिष्टान्नभोजनानुज्ञानाच्च । एकोद्दिष्टे तु यच्छ्रोत्रसुरभोज्यं शिष्टमोदनम् । चन्द्रसूर्योपरागे च शिष्टमन्नं च वर्जयेत् ॥ इति विशेषनिषेधाच्च, पार्वणेषु पितृशेषमपि भोज्यमेव । तथा

**पराशरः**—स्त्रीशेषं पितृशेषं च शूद्रशेषं तथैव च । तथा रजस्वलाशेषं भुक्त्वा चांद्रायणं चरेत् ॥ **यमः**—सतां च पुरुषाणां हि पार्वणेषु द्विजोत्तमैः । पितृशेषमपि त्वद्यमिति वासिष्ठभाषितम्॥सत्पुरुषाणां पार्वणे पितृशेषभोज्यत्वप्रतिपादनाच्छिष्टविषये न दोषः, अशिष्टविषये दोषस्मरणात् । तथा **बृहस्पतिः**—अशिष्टा ये च पुरुषास्तेषां श्राद्धे द्विजोत्तमैः । न भोक्तव्यमिति प्राहुर्मुनयः संशितव्रताः ॥ इति वचनाच्छिष्टपितृशेषं भोज्यमेवेति सिद्धम् । किं च–त्रिफलामिश्रितान्दर्भान् काञ्जिकायां विनिक्षिपेत् । तस्यास्तु काञ्जिका ग्राह्या नेतरस्याः कदाचन ॥ इति व्यासेन त्रिफलादर्भसंयुक्तकाञ्जिकाग्रहणवत् । आरनालं च तक्रं च पाथेयं घृतपायसम् । उदकं च कुशच्छन्नं न दुष्येद्राहुदर्शने ॥ इति वचनाद्दर्भयुक्तमुदकादिकं ग्राह्यमेव । चिरस्थितमपि त्वद्यं स्नेहयुक्तं द्विजातिभिः । यवगोधूमजं सर्वं पयसश्चैव विक्रियाः ॥ इति मनूक्तस्यापवाद उक्तश्चन्द्रिकायाम्–घृतात्फेनं घृताग्रमण्डं पियूषं च तथार्द्रगोः । गुडादिद्रव्यसंयुक्तं वर्ज्यं पर्युषितं दधि ॥ घृतादुद्धृत्य फेनमात्रं तदग्रमात्रं च गुडमरीचिमिश्रं सत्पर्युषितं च वर्ज्यम् । तथा आर्द्रगोः अनिर्देशाया गोः पीयूषं पयः । **याज्ञवल्क्यः**—संधिन्यनिर्दशावत्सगोः पयः परिवर्जयेत् । औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम् ॥ या चैकां वेलामतिक्रम्य दुह्यते या च वत्सान्तरेण संधीयते सा च संधिनी, संधिनी वृषाक्रान्तेति केचित् । वशां वन्ध्यां विजानीयाद्वृषाक्रान्तां च सन्धिनीम् । इति त्रिकाण्डिस्मरणात् । अनिर्देशा प्रसूतानतिक्रान्तदशाहा, अवत्सा मृतवत्सा, आसां पयः क्षीरं वर्जयेत् । पयोग्रहणात्तद्विकाराणां दध्यादीनां च निषेधः । पयोनिषेधाच्छकृन्मूत्रादेरनिषेधः । उष्ट्राज्जातमौष्ट्रम् । एकशफाः वडवादयः, तत्प्रभवमैकशफम् । स्त्रीप्रभवं स्त्रैणं । अरण्ये भवा आरण्याः, तदीयमारण्यकम् । अवेर्जातमाविकम् । **आपस्तम्बः**—अपेयं तथैडकम् पय उष्ट्रीक्षीरमृगीक्षीरसंधिनीक्षीरयमसूक्षीराणीति धेनोश्चानिर्दशायास्तथा कीलालौषधीनां च । इति । एडका अविः, यमसूः यमलस्य प्रसवित्री, कीलालौषधिः सुराद्रव्यम् । **गौतमः**—गोश्च क्षीरमनिर्देशायाः सूतकेजामहिष्योश्च नित्यमाविकमपेममौष्ट्रमैकशफं च स्यन्दिनीयमसूसंधिनीनां च याश्च व्यपेतवत्साः ॥ इति । स्यन्दिनी सदा स्रवत्पयस्तनी । **शङ्खः**—सर्वासां द्विस्तनीनां क्षीरमभोज्यम् । इति । **विज्ञानेश्वरे**—अनिर्देशाया गोः क्षीरमौष्ट्रमैकशफं तथा । आविकं संधिनीक्षीरं विवत्सायाश्च गोः पयः ॥ आरण्यानां च सर्वेषां मृगाणां महिषीं विना । स्त्रीक्षीरं चैव वर्ज्यानि सर्वशुक्तानि चैव हि ॥ इत्युक्त्वा " शेषेषूपवसेदहः " इति मनूक्तोपवासो द्रष्टव्यः । इति । यत्तु **पैठीनसिनोक्तम्**—खरोष्ट्रमहिषीक्षीरप्राशने तप्तकृच्छ्रम् पुनरुपनयनं चानिर्दशाहगोमहिषीक्षीरप्राशने षड्रात्रमभोजनं सर्वासां द्विस्तनीनां क्षीरपानेप्यजावर्ज्यमेतदेव ॥ इति । यच्च **शंखोक्तम्**—क्षीराणि यान्यपेयानि तद्विकाराशने बुधः । सप्तरात्रव्रतं कुर्यात्प्रयत्नेन समाहितः ॥ इति यावकव्रतम् । तदुभयमपि कामतोभ्यासविषयम् । सन्धिन्यमेध्यभक्षाया भुक्त्वा पक्षव्रतं चरेत् ॥ इति चाभ्यासविषयम् । सकृत्पाने **विष्णुः**—गोजामहिषीवर्ज्यं सर्वपयांसि प्राश्योपवसेदनिर्द-

शाहं तान्यपि सन्धिनीयमसूस्यन्दिनीविवत्साक्षीरं चामेध्यभुजश्च ॥ इति । कश्चिच्छकृन्मूत्रं च वर्ज्यमित्याह-क्षीरं क्षीरविकारांश्च शकृन्मूत्रमथापि वा । अपेयमन्यवत्साया विवत्सायास्तथैव च ॥ अतोन्यवत्साविवत्सयोः पञ्चगव्यं वर्ज्यम् । अत्र **बोधायनः**-अपेयपयःपाने कृच्छ्रोन्यत्र गव्यात्, गव्ये तु त्रिरात्रमुपवासः । इति । माहिष्यं गव्यमाजं च भक्ष्यं क्षीरेषु निर्दिशेत् । इति यमस्मृतेरेडकादिपयो वर्ज्यमेव । तथा **चन्द्रिकायाम्**-न पिबेत्कपिलाक्षीरं वैश्यः शूद्रोथ वा पुनः । यः पिबेत्कपिलाक्षीरं न ततोन्योस्ति पापकृत् ॥ क्षत्रियश्चापि वृत्तस्थो न पिबेत्कापिलं पयः ॥ **पराशरः**-कपिलाक्षीरपानेन ब्राह्मणीगमनेन च । वेदाक्षरविचारेण शूद्रः पतति तत्क्षणात् ॥ इति । **व्यासः**-कापिलं यः पिबेच्छूद्रो नरके स च पच्यते। हुतशेषं पिबेद्विप्रो वेप्रः स्यादन्यथा पशुः ॥ अन्यथा अहुतशेषपयःपाने, चकारात्क्षत्रविशौ । **हारीतः**-आहारं तु रहः कुर्यान्निर्हारं चैव सर्वदा । उभाभ्यां लक्ष्म्युपेतः स्यात्प्रकाशे हीयते श्रिया ॥ निर्हारः मलोत्सर्गः । **समुच्चये**-अनभ्यासेन वेदानामाचारस्य च वर्जनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥ अत्र दोषो जात्याश्रयनिमित्तकः । **शाण्डिल्यः**-ये भुञ्जते समीपस्था ये भोक्ष्यन्ति ततः परम् । तान् सर्वान् मनसा स्मृत्वा तदर्हमशनं चरेत् ॥ **सुमन्तुः**-अन्नं निधाप्य दर्व्या तु न हस्तेन कदाचन । पूजयित्वा तदन्नं चापोशनं तु समन्त्रकम् ॥ सोदकं दक्षिणं पाणिं कुर्यादन्नं प्रदक्षिणम् । अपेयं तद्भवेदम्बु पीत्वा चान्द्रायणं चरेत् ॥ अकृत्वा परिषेकं तु यस्त्वन्नं परिमर्दति । हस्तेन मर्दितं चान्नं भुक्त्वा चान्द्रायणं चरेत् ॥ **स्मृतिसारे**-पिबतः पतिते तोये यदा भोजनभाजने । अभोज्यं तद्भवेदन्नं भुक्त्वा चान्द्रायणं चरेत् ॥ **व्यासः**-अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् । अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥ **व्यासपराशरहारीताः**-शयनस्थो न भुञ्जीत न पाणिस्थो न चासने । सोपानत्कश्च नाश्नीयान्नैकवस्त्रः स्त्रिया सह ॥ ( कदाचनेति पाठान्तरम् ) । **पैठीनसिः**-न भिन्नपात्रे भुञ्जीत न भावप्रतिदूषिते । अभिन्नं राजतस्वर्णताम्रपात्रं न दोषकृत् ॥ **व्यासः**-न निन्देदन्नभक्ष्यांस्तु स्वाद्वस्वादु न कुत्सयेत् । आर्द्रपाणिपदास्यस्तु प्राङ्मुखो ब्रह्मसूत्रधृत् ॥ द्वात्रिंशद्ग्रासमश्नीयाद्दीर्घमायुर्जिजीविषुः । **आपस्तम्बः**-अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः । द्वात्रिंशच्च गृहस्थस्य ह्यमितं ब्रह्मचारिणः ॥ इदं काम्यम्, " दीर्घमायुर्जिजीविषुः " इति व्यासस्मृतेः । **व्यासः**-श्लेष्मसिंघाणिकोत्सर्गो नान्नकाले प्रशस्यते । बलिमङ्गलजप्यादौ न होमे न महाजने ॥ **आपस्तम्बः**-भार्यां कासं क्षवथुमित्यभिमुखोन्नं वर्जयेत् । **भरद्वाजः**-भुक्त्वामृतापिधानमसीति च निपीय कम् । आचान्तः पुनराचामेद्यावन्मण्डलशोधनम् ॥ भुक्त्वा ग्रन्थिं विमुच्याथ तेन पीत्वा जलं सह । तत्पवित्रं त्यजेद्भूमावथ मन्त्रेण जातुचित् ॥ विस्मृत्य भुवि पात्रे तु पवित्रं विसृजेद्यदि । प्रायश्चित्तं चरेत्कृच्छ्रं तत्किल्बिषविशुद्धये ॥ **मार्कण्डेयः**-गण्डूषकरणाद्यस्तु हस्तं प्रक्षालयेद्द्विजः । हतं दैवं च पित्र्यं च ह्यात्मानं चोपघातयेत् ॥ गण्डूषमन्त्रोत्तरापोशनम् । यतः स एवाह-अर्धं पिबति गण्डूषमर्धं त्यजति भूतले ।

प्रीणन्ति पितरः सर्वे ये चान्ये भूमिदेवताः ॥ गण्डूषार्धत्यागमन्त्रमाह स एव-रौरवे पुण्यनिलये पद्मार्बुदनिवासिनाम् । अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु ॥ इति । स्मृत्यन्तरे-हस्तं निर्लिह्य च क्षाल्य विधूयोद्धृत्य पात्रतः । गण्डूषं धारयेद्यस्तु सुरामिव स धारयेत् ॥ अतो गण्डूषमुत्तरापोशनमेव, तदर्थं हस्तप्रक्षालननिर्लेहनविधूननादिकं न कार्यम् । शातातपः-यद्युत्तिष्ठत्यनाचान्तो भुक्तवानासनात्ततः । सद्यः स्नानं प्रकुर्वीत नान्यथा शुद्धिमाप्नुयात् ॥ अनाचान्तः अमृतापिधानमसीति मन्त्राचमनमकृत्वेत्यर्थः । पवित्रग्रन्थिमुत्सृज्य मण्डले भुवि निक्षिपेत् । पात्रे तु निक्षिपेद्यस्तु स विप्रः पंक्तिदूषकः ॥ देवलः-भुक्त्वाचामेद्यथोक्तेन विधिना च समाहितः। शोधयेन्मुखहस्तौ च मृदद्भिर्घर्षणैरपि ॥ शाण्डिल्यः-मापादिचूर्णैर्मृद्भिर्वा प्रक्षाल्य करयोर्द्वयम् । प्रक्षाल्य जानुपादौ च काष्ठैर्दन्तान् विशोधयेत् ॥ स्मृत्यन्तरे-मूत्रे पुरीषे भुक्त्यन्ते भक्ष्याणां भक्षणे तथा। चतुरष्टद्विषष्ठाष्टगण्डूषैस्तु विशुध्यति ॥ विप्रस्य दक्षिणे भागे देवास्तिष्ठन्ति सर्वदा । आसीन एव गण्डूषान् वामपार्श्वे विनिक्षिपेत् ॥ कुर्याद्दक्षिणपार्श्वे तु रौरवं नरकं व्रजेत् । बोधायनः-आसीन एव गण्डूषान् विसृजेदासीनस्त्रिराचामेत ॥ इति । एवकारात्तिष्ठतो गण्डूषकरणनिषेधः । यावदुक्तं तु गण्डूषमकृत्वा च ह्यनासनः । विना यज्ञोपवीतेन आचान्तोऽप्यशुचिर्भवेत ॥ आचान्तोऽप्यशुचिस्तावद्यावत्पात्रमनुद्धृतम् । उद्धृतेऽप्यशुचिस्तावद्यावन्मण्डलशोधनम् ॥ संग्रहे-भुक्त्वोच्छिष्टस्त्वनाचान्तः शूद्रादीन् यदि पश्यति । ज्ञानतोऽज्ञानतो वापि तैः सार्धं भुक्तवानसौ ॥ अतः खलु शुद्धाचमनान्तं शूद्रादिदर्शनं परिहरन्ति सन्तः । और्वः-भुक्त्वा सम्यगथाचम्य प्राङ्मुखोदङ्मुखोऽपि वा । स्वस्थः प्रशान्तचित्तस्तु कृतासनपरिग्रहः ॥ अभीष्टदेवतानां तु कुर्वीत स्मरणं बुधः । शातातपः-आस्यं प्रक्षाल्य गण्डूषं पिबेद्भुक्त्वा च यो द्विजः । दैवं श्राद्धमसौ हन्यात्पितॄनात्मानमेव च ॥ गण्डूषकाले आस्यस्थजलं न पिबेदित्यर्थः । कुत्सः-आचान्तो नाभिदेशं तु प्राणानां ग्रन्थिरसीति च । विष्णुरित्यादित्यमीक्षेत रात्रौ दीपमुखं ततः ॥ स्मृत्यन्तरे-भुक्त्वा द्विराचान्तो हृदयदेशमभिमृशेत् प्राणानां ग्रन्थिरसि । इति । व्यासः-भुक्त्वामृतापिधानमसीत्युपरिष्टादपः पिबेत् । आचम्याङ्गुष्ठमात्रेति पादाङ्गुष्ठे तु दक्षिणे ॥ निःस्रावयेद्धस्तजलमूर्ध्वहस्तः समाहितः । हुतानुमन्त्रणं कुर्याच्छ्रद्धायामिति मन्त्रतः ॥ अथाक्षरेण स्वात्मानं यो जयेद्ब्रह्मणीति हि । सर्वेषामेव योगानामात्मयोगः परः स्मृतः ॥ योऽनेन विधिना कुर्यात्स याति पदमक्षयम् । अक्षरेण "एतस्य वा अक्षरस्य" इत्याम्नातेन "ब्रह्मणि म आत्मामृतत्वाय" इति योजयेत् । "ओमित्यात्मानं युञ्जीत" इत्यात्मयोगं कुर्यादित्यर्थः। अत्र बाहटे-भुक्त्वोपविशतस्तुन्दमोजो भवति तिष्ठतः । आयुश्च क्रमतो मृत्युर्धावतः स्वपतो वपुः ॥ अखण्डादर्शे-भुक्त्वा तु सुखमासीनस्ताम्बूलं भक्षयेद्द्विजः। निवेदितं भगवतः परिशुद्धं यथाविधि ॥ संग्रहकारः-भुक्त्वा तु सुखमासीनस्ताम्बूलेनास्यशोधनम् । शुण्ठ्यामलकधात्रूनामेकेनाथ विशोधनम् ॥ आसने सम्यगासीनः श्रवणैस्तत्समानसः । षष्ठसप्तमभागेऽपि पुराणादीन् निरीक्षयेत् ॥ श्रीवि-

ष्णुपुराणे—अगस्तिरग्निर्वडवानलश्च भुक्तं मयान्नं जरयन्त्वशेषम्। सुखं च मे तत्परिणामसंभवं यच्छन्त्वरोगं मम चास्तु देहे॥ विष्णुरत्ता तथैवान्नं परिणामश्च वै यतः। सत्येन तेन मे भुक्तं जीर्यत्वन्नमिदं तथा॥ इत्युच्चार्य स्वहस्तेन परिमृज्य तथोदरम्। अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः॥

## ❀ ताम्बूलविधिः ❀

तथान्यत्र—सुपूगं च सुपत्रं च सुधया च समन्वितम्। प्रदद्याद्द्विजदेवेभ्यस्ताम्बूलं भक्षयेद्बुधः॥एकपूगं सदारोग्यं द्विपूगं निष्फलं भवेत्। अतिश्रेष्ठं त्रिपूगं च अधिकं नैव दुष्यति॥पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसंभवः। चूर्णपर्णं हरत्यायुः सिरा बुद्धिविनाशिनी॥ तस्मादग्रं च मूलं च सिराश्चैव विशेषतः। चूर्णपर्णं वर्जयित्वा ताम्बूलं खादयेद्बुधः॥ अखण्डितं च क्रमुकं पर्णमक्षालितं तथा। अशोधितं तथा चूर्णं भक्षयन् सर्वदोषभाक्॥ अनिधाय मुखे पर्णं पूगं खादति यो नरः। सप्तजन्म दरिद्रः स्यादन्ते नरकेषु निमज्जति॥ पीत्वा भुक्त्वा च यो मर्त्यः शून्यं पात्रं परित्यजेत्। स भूयः क्षुत्पिपासार्तो भवेज्जन्मनि जन्मनि॥ पराशरः—मेहस्पृष्टं च यत्तोयं वाप्यदन्तोष्ठविप्रुषः। भुक्तस्याङ्गुलिगतस्नेहं नोच्छिष्टं धर्मचोदितम्॥ आर्द्रपादस्तु यो मर्त्यो भुक्त्वागाराद्बहिर्व्रजेत्। तस्यायुः कीर्तिलक्ष्मीश्च विद्या प्रज्ञा च नश्यति॥ याज्ञवल्क्यः—अतिथिं श्रोत्रियं तृप्तमासीमान्तमनुव्रजेत्। अहःशेषं समासीत शिष्टैरिष्टैश्च बन्धुभिः॥ दक्षः—इतिहासपुराणाभ्यां षष्ठं सप्तममभ्यसेत्। कालमित्यनुवर्तते। शंखः—विचार्य च पुराणार्थान् वेदार्थान् भक्तिमास्थितः। विष्णुं सदा हृदि ध्यायेत् सकलं निष्कलं तु वा॥ लिखितः—भुक्त्वोपस्थाय मार्तण्डं पुराणानि सदा पठेत्। भावशुद्ध्या हरौ भक्तिः पुराणश्रवणाद्भवेत्॥ दक्षः—सात्त्विकानि पुराणानि सात्त्विकांश्च जपांस्तथा। कारयेद्भोजनान्ते तु षष्ठे वै सप्तमे द्विजः॥ पुराणपठनाशक्तौ पौरुषं सूक्तमुच्चरेत्। तद्विष्णोरिति मन्त्रं वा जपेदष्टाक्षरं तु वा॥ एवं यः कुरुते नित्यं स याति परमां गतिम्। एवं गृहस्थधर्मा उक्ताः॥

## ❀ स्नातकव्रतनिरूपणम् ❀

सांप्रतं स्नातकव्रतं प्रतन्यते। अत्रापस्तम्बः—अथ स्नातकव्रतानि पूर्वेण ग्रामान्निष्क्रमणप्रवेशनानि शीलयेदुत्तरेण वा, न कुसृत्या ग्रामं प्रविशेत्, यदा ग्रामान्निष्क्रामति ग्रामं वा प्रविशति तदा पूर्वेण द्वारेणोत्तरेण वा कुर्यान्न द्वारान्तरेण शीलयेत्। इति। गौतमः—विधिपूर्वं स्नात्वा भार्यामधिगम्य यथोक्तान् गृहस्थधर्मान् प्रयुञ्जान इमानि व्रतान्यनुकर्षेत्स्नातको नित्यं शुचिः सुगन्धस्नानशीलः सति विभवे न जीर्णमलवद्वासाः स्यान्न रक्तमुल्बणमन्यधृतं वासो बिभृयान्न स्नगुपानही निर्णिक्तमशक्तौ न रूढश्मश्रुरकस्मान्नाग्निमपश्च युगपद्धारयेत्। आपस्तम्बः—सर्वान् रागान् वासांसि वर्जयेत्कृष्णं च स्वाभाविकमनूद्भासिवासो वसीतामतिकृष्टं च शक्तिविषये। कुसुम्भादीन् सर्वान् रागान्वासांसि वर्जयेत्—न केनचिद्रक्तं वासो बिभृयात्, तथा स्वाभाविकं कृष्णं कम्बलादि च न वसीत, उद्भासि—उल्बणम्, तदन्यदनूद्भासि। छान्दसो

दीर्घः । एवंभूतं वासश्च वसीत आच्छादयेत्, प्रतिकृष्टं निकृष्टम्, जीर्णं मलिनं स्थूलं च, " निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः " इत्यमरः । तद्विपरीतमप्रतिकृष्टम्, तादृग्वासो वसीत । तच्च प्रतिकृष्टं शक्तौ सत्यां न वसीत । तथा **मनुः**—न जीर्णमलवद्वासा भवेच्च विभवे सति । उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ॥ उपवीतमलंकारं स्रजं करकमेव वा । **माधवीये**—नग्नो मलिनवासाश्च नग्नो नीलपटस्तथा । नग्नस्तु स्यूतवस्त्रः स्यान्नग्नो भुग्नपटस्तथा ॥ विकच्छोनुत्तरीयश्च नग्नश्चावस्त्र एव च । श्रौतं स्मार्तं तथा कर्म न नग्नश्चिन्तयेदपि ॥ **विज्ञानेश्वरे**—नीलं रक्तं च यद्वस्त्रं यस्य देहेषु तिष्ठति । अहोरात्रोपोषितः सन् पञ्चगव्येन शुध्यति ॥ **जातुकर्णिः**—कौशेयं रक्तकृष्णं च मलिनं केशदूषितम् । छिन्नाग्रं चोपवस्त्रं च कुत्सितं धर्मतो विदुः ॥ **भृगुः**—दशाहीनेन वस्त्रेण न स्यात्कौपीनकादृते । नान्यदीयेन नार्द्रेण न सूच्या ग्रथितेन च ॥ ब्राह्मणस्य सितं वस्त्रं नृपते रक्तमुल्बणम् । चित्रं वैश्यस्य शूद्रस्य नीलं मलिनमिष्यते ॥ अत्र **आपस्तम्बः**—वासः शाणीक्षौमाजिनानि काषायं चैके वस्त्रमुपदिशन्ति माञ्जिष्ठं राजन्यस्य हारिद्रं वैश्यस्य । शणस्य विकारः शाणी शाटी, क्षुमा अतसी तद्विकारः क्षौमं—दुकूलम्, मञ्जिष्ठया रक्तं माञ्जिष्ठम्, हरिद्रया रक्तं हारिद्रम्, एतानि वर्णानुपूर्व्येण वासांसि, काषायं तु ब्राह्मणस्योत्तरीयार्थमित्यपौद्रम्यते । अन्तरीयविषये **भृगुः**—परिधानाद्बहिः कक्ष्या राक्षसी परिकीर्तिता । सर्वकर्माणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥ **भरद्वाजः**—स्वोक्तं वस्त्रं च कौपीनं धारयेत्प्रथमाश्रमी । यज्ञोपवीते द्विकक्ष्यं दण्डं छत्रं कमण्डलुम् ॥ सौवर्णे कुण्डले स्वोक्तं वासो दध्याद्गृहाधिपः । साधनानि यथापूर्वमुक्तानि गृहमेधिनः ॥ यानि तान्येव धार्याणि वानप्रस्थेन धारणे । उपवीतोत्तरासङ्गदण्डकौपीनमेखलाः ॥ कुण्डिकाछत्रवासांसि यतिर्दध्यादनन्तरम् । कौपीनधारणायाथ शुल्वं कृत्वोपवीतवत् ॥ यतिश्च ब्रह्मचारी च दधातां द्विःप्रदक्षिणम् । नग्नत्वपरिहाराय गृहस्थवनिनौ तथा ॥ तदेव धारयेयातामवश्यं केवलं च तौ । **व्यासः**—अकच्छः पुच्छकच्छो वा द्विकच्छः कटिवेष्टितः । यावदास्ते द्विजस्तावन्नग्न एव न संशयः ॥ **संवर्तः**—कटिसूत्रं विना कर्म श्रौतं स्मार्तं करोति यः । सर्वं तन्निष्फलं विद्यात्सोपि नग्न इति स्मृतः ॥ **आपस्तम्बः**—दिवा च शिरसः प्रावरणं वर्जयेदग्निमपो ब्राह्मणं गां देवताद्वारं प्रतिपादौ च शक्तिविषये नाभिप्रसारयीत । **गौतमः**—नैता देवताः प्रति पादौ प्रसारयेन्न पर्णलोष्टाश्मभिर्मूत्रपुरीषापकर्षणं कुर्यान्न भस्मकेशतुषकपालान्यधितिष्ठेन्न म्लेच्छाशुच्यधार्मिकैः सह संभाषेत संभाष्य पुण्यकृतो मनसा ध्यायेद्ब्राह्मणेन वा सह संभाषेत । **आपस्तम्बः**—देवताभिधानं चाप्रयतः । अप्रयतः सन् देवतानामग्न्यादीनां नाम न कीर्तयेत् । अत्र **पराशरः**—अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ अतो देवतान्तरकीर्तनमशुचिना न कार्यम् । नारायणस्य नामानि सदा सर्वत्र कीर्तयेत् । देवतान्तरनामानि नाशुचिः परिकीर्तयेत् ॥ **दक्षः**—चक्रायुधस्य नामानि सर्वदा परिकीर्तयेत् । नाशौचं कीर्तने तस्य पवित्रो भगवान् हरिः ॥ कवले कवले कुर्वन् गोविन्दस्यानुकीर्तनम् । इत्यादिवचनाद्विष्णुकीर्तनं सर्वदा कार्य-

मेव । अत एव श्मशानेप्याशौचादावपि नारायणगोविन्देति लोकः कीर्तयति । अतो भोजनस्नानादौ मौनविधावप्रायत्ये च देवतान्तरकीर्तनमेव निषिद्धम्, न विष्णोरिति सिद्धम् । मौनं वाचो निवृत्तिः स्यान्नात्र भाषा न संस्कृतम् । नान्यदेवेरणं विष्णुं सदा ध्यायेच्च कीर्तयेत् ॥ यदि वाग्यमलोपः स्याज्जपादिषु कथंचन । व्याहरेद्वैष्णवं सूक्तं स्मरेद्वा विष्णुमव्ययम् ॥ इति व्यासः । **आपस्तम्बः**–स्पृहतीं च गां नाचक्षीत संसृष्टां च वत्सेनानिमित्ते । स्पृहतीं सस्यधान्यादिकं भक्षयन्तीम्, गौरियं भक्षयतीति न ब्रूयात्, तथा वत्सेनानिमित्ते संसृष्टाम् । "यस्य हविषे वत्सा अपाकृता धयन्ति" इत्यादिके निमित्ते न दोषः । वत्सतन्त्रीं च नोपरिगच्छेत्प्रेङ्खावन्तरेण च नातीयात् । वत्सतन्त्री वत्सबन्धनरज्जुः, प्रेङ्खौ डोलास्तम्भौ, तोरणस्तम्भावित्यन्ये । न पततः संचक्षीत । पततः पक्षिणः संघीभूतान् न गणयेत्, पुण्यक्षयेण स्वर्गात्पततः परस्मै न ब्रूयाज्ज्योतींषि पतन्तीति । नाब्राह्मणायोच्छिष्टं प्रयच्छेद्यदि प्रयच्छेद्दन्तान्स्कुप्त्वा तस्मिन्नवधाय प्रयच्छेत् । अब्राह्मणः शूद्रः "न शूद्रायोच्छिष्टमनुच्छिष्टं वा दद्यात्" इति वसिष्ठस्मरणात्तस्मा उच्छिष्टं न प्रयच्छेत् । इदमनाश्रितविषयम् । "अन्तर्धायैव शूद्राय" इत्याश्रितशूद्रायोच्छिष्टदानस्मृतेः । कुप्त्वा दन्तान्नखेनाविलिख्य तज्जलमुच्छिष्टे निधाय प्रयच्छेत् । इदमाश्रितविषयम् । एवमेव–न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् । न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥ इति मनुवचनं द्रष्टव्यम् । **आपस्तम्बः**–मिथुनीभूय च न तया सह सर्वां रात्रिं शयीत, शयानश्चाध्यापनं वर्जयेत् । इति । मिथुनीभूय मैथुनं कृत्वा, तया भार्यया सह, सर्वां रात्रिं न शयीत, दिवा वा नक्तं वा शयानो नाध्यापयेत्, स्वयं तु धारणार्थमधीयीत । अनाविस्स्रगनुलेपनः स्यात् । आविर्भूतमाल्यानुलेपनो न स्यात् । सभाः समाजांश्च न सेवेत नगरप्रवेशनानि च वर्जयेत्प्रश्नं च न विब्रूयात् । अथाप्युदाहरन्ति । "मूलं कूलं वृहति दुर्विवक्तुः प्रजां पशूनायतनं हिनस्ति, धर्मप्रह्लादनकुमालनस्य रुदन्ह मृत्युर्व्युवाच प्रश्नम्" इति गार्दभयानमारोहणे विषमारोहणावरोहणानि च वर्जयेद्बाहुभ्यां च नदीतरणं नावं च सांशयिकीं तृणच्छेदनलोष्टविमर्दनष्ठीवनानि चाकारणाद्यच्चान्यत्परिचक्षते । न विब्रूयात्–दुर्ज्ञेयमर्थं सहसा न विचार्य ब्रूयात् । मूलं पित्रादिः, कूलम् आगामिनी संपत्, ते उभयमपि, वृहति छिनत्ति, दुर्विवक्तुः अन्यथा निर्णेतुः, प्रजां पुत्रादिकाम्, पशून् गवादिकान्, आयतनं गृहम्, हिनस्ति । अत्र **बोधायनः**–बहुद्वारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः । तस्मादवाच्यो ह्येकेन विधिज्ञेनापि संशये ॥ **पराशरश्च**–सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् । अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी ॥ अतो मृत्युरपि धर्मसंकटे पतितो रुदन् कस्यचिदर्थः प्रश्नं विविच्य कथितवान् "हे धर्म प्रह्लाद कुमालनस्य नेदं कृत्यम्" इति । बाहुभ्यामिति वचनात् प्लवेन नदीतरणे न दोषः । तृणच्छेदनादीन्यकारणान्न कुर्यात्, "द्वे दर्भाग्रे प्रच्छिद्य" "दर्भाग्रे प्रादेशमात्रे प्रच्छिनत्ति" इत्यादिकारणे न दोषः । यच्चान्यत्परिचक्षते–अत्र **गौतमः**–गां धयन्तीं परस्मै नाचक्षीत न चैनां वारयेन्न मिथुनीभूत्वा शौचं प्रति

विलम्बेताग्निमुखोपधमनविगर्ह्यवादबहिर्गन्धमाल्यधारणपापीयोऽवलोकनभार्यासहभोजनाद्वारप्रवेशनाद्धावनसंदिग्धभोजननदीबाहुतरणवृक्षविषमारोहणावरोहणप्राणव्यायच्छनानि वर्जयेन्न संदिग्धां नावमधिरोहेत्सर्वत एवात्मानं गोपायेन्न प्रावृत्य शिरोऽहनि पर्यटेत्प्रावृत्य रात्रौ सोपानत्कश्च शयनाशनासनाभिवादननमस्कारान्वर्जयेच्छेदनभेदनविलेखनविमर्दनावस्फोटनानि नाकस्मात्कुर्यान्नोपरिवत्सतन्त्रीं गच्छेन्नकुलं कुलः स्यान्न यज्ञमवृत्तो गच्छेद्दर्शनाय तु कामं न भक्ष्यानुत्सङ्गे भक्षयेन्न रात्रौ प्रेष्याहृतमुद्धृतस्नेहविलयनपिण्याकमथितप्रभृतीनि चात्तवीर्याणि नाश्नीयात्प्रत्यमङ्गल्यदेवतायतनचतुष्पथान् प्रदक्षिणमावर्तेत मनसा वा तत्समग्रमाचारमनुपालयेदापत्कल्पः सत्यधर्मार्यवृत्तः शिष्टाध्यापकः शौचशिष्टश्रुतिनिरतः स्यान्नित्यमहिंस्रो मृदुर्दृढकारी दमदानशील एवमाचारो मातापितरौ पूर्वापरान् सम्बन्धान् दुरितेभ्यो मोक्षयिष्यन् स्नातकः शश्वद्ब्रह्मलोकान्न च्यवते । इति । **याज्ञवल्क्यश्च**—न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः । न विरुद्धप्रसङ्गाभ्यां सन्तोषी च भवेत्सदा ॥ स्वाध्यायविरोधिनमर्थं नाभिच्छेत्, न यतस्ततः—यतः कुतश्चिदविदिताचाराद्यार्थं नेहेत । अत्र **मनुः**—धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव वा । अर्थ एवेह च श्रेयस्त्रिवर्ग इति हि स्थितिः ॥ **पराशरः**—परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ । धर्मं चाप्यसुखोदर्कं लोकसंघुष्टमेव च ॥ विरुद्धम् अयाज्ययाजनादि, प्रसंगः गीतनृत्तादिः, ताभ्यां चार्थं नेहेत, किंतु यदृच्छालाभसंतुष्टो भवेत् । **मनुः**—सन्तोषं परमास्थाय सुखार्थी संयतो भवेत् । **समुच्चये**—धनं वा पुरुषो लोके पुरुषं धनमेव वा । अवश्यमेकं त्यजति तस्मात्किं धनतृष्णया ॥ शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः । न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥ **शाण्डिल्यः**—न रक्तकृष्णमलिनवासांसि परिधापयेत् । **आपस्तम्बः**—नित्यमुत्तरं वासः कार्यमपि वा सूत्रमेवोपवीतार्थे । **शाण्डिल्यः**—शुद्धिं कुर्यात्तया विद्वान्मलानां देहजन्मनाम् । कृत्तकेशनखश्मश्रुस्त्रिपक्षेषु गृही भवेत् ॥ "गङ्गायां भास्करक्षेत्रे" इत्युक्तेषु तदन्येष्वेव वपनमिति भावः । न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् । नाहितं नानृतं चैव न स्तेनः स्यान्न वार्धुषिः ॥ प्राणविपत्तिसंशयावहं कर्म न कुर्यात्, संदिग्धार्थं च । **गीताचार्यः**—अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति । नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ **आपस्तम्बः**—न संशयं प्रपद्येद्यदि प्रपद्येतसोपि क्षणादेव नश्यत्यप्रियमुद्वेगकरं न वदेन्न वार्धुषिर्न दद्यात्पापीयसे । अल्पकामित्युक्तवृद्धिमन्तरेणाधिकवृद्ध्युपजीवी वार्धुषिः । " अनापदि तु ब्राह्मणस्य न वार्धुष्यं लवणविक्रिया " इत्युपपातकमध्ये पाठात् । दाक्षायणी ब्रह्मसूत्री वेणुमान् सकमण्डलुः । कुर्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् ॥ दाक्षायिणं सुवर्णकुण्डलम् । अत्र **मनुः**—वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् । यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥ वेदः दर्भमुष्टिः । **भरद्वाजः**—सौवर्णा राजिता शौल्बा त्रिवृत्का कुण्डिका मता । कांस्यपित्तलोहैर्वा कुर्यात्स्वर्णाद्यलाभतः ॥ एषामलाभे गोचर्मनिर्मितः स्यात्कमण्डलुः । उदुम्बरवटाश्वत्थप्लक्षजम्बूत्वचा तथा ॥ भस्मना च मृदाद्भिश्च श्रीफलैश्च ततः शुचिः । "; कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् " इति नालिकेरवृक्षमृण्मयकमण्डलु-

निषेधात्स्वर्णादिमयः कमण्डलुर्ग्राह्यः, " एषामलाभे गोचर्म " इति स्वर्णाद्यलाभ एव मृन्मयविधानाच्च । अत्र **व्यासः**-कुर्वीत धारया सन्ध्यां कांस्ये हैमे च राजते। ताम्रपात्रे जलं कृत्वा गृहे सन्ध्यां समाचरेत् ॥ ब्रह्मसूत्री-**भरद्वाजः**-एकैकमुपवीतं स्यादाद्यन्ताश्रमिणोर्द्वयोः । दशार्द्धे वा गृहस्थस्य चत्वारि वनवासिनः ॥ दशार्द्धे वेति काम्याभिप्रायम् । " आयुष्कामस्तु बहून्युपवीतानि धारयेत । " इति स्मृतेः । यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि । तृतीयमुत्तरीयार्थं वस्त्राभावे तदिष्यते ॥ " यज्ञोपवीते द्वे धार्ये " इति द्वयोरेवावश्यधार्यत्वस्मृतेश्च । तथा **चन्द्रिकायां भृगुः**-उपवीतं बटोरेकं द्वे तथेतरयोः स्मृते । एकमेव यतीनां स्यादिति शास्त्रविनिश्चितम् ॥ इति । इतरयोः गृहस्थवनस्थयोः । एवं स्मृतिषु यतेरुपवीतविधानात्तत्त्यागो न युक्तः । अत्र **दक्षः**-मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते । गृहस्थो यष्टिवेदाद्यैर्नखरोमैर्वनाश्रमी ॥ त्रिदण्डेन यतिश्चात्र लक्षणानि पृथक् पृथक् । यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती न चाश्रमी ॥ **अङ्गिराः**-यतेर्लिङ्गं प्रवक्ष्यामि येनासौ लक्ष्यते यतिः । त्रिदण्डमुपवीतं च वस्त्रं जन्तुनिवारणम् ॥ यस्यैतद्विद्यते लिंगं स यतिर्नेतरो यतिः । **हारीतः**-त्रिदण्डमुपवीतं च शिखाकाषायमम्बरम् । कमण्डलुभैक्षचरं यतीनां तु विधीयते ॥ **चन्द्रिकायामभिवाद्यप्रकरणे**-देवताप्रतिमां दृष्ट्वा यतिं चैव त्रिदण्डिनम् । नमस्कारं न कुर्याच्चेदहोरात्रेण शुध्यति ॥ तत्रैव-सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखोनुपवीतश्च यत्करोति न तत्कृतम् ॥ इति । सदा उपनयनप्रभृत्याप्रयाणादित्यर्थः । त्रिदण्डमुपवीतं च वासः कौपीनवेष्टनम् । शिक्यं कवचमित्येतद्विभृयुर्यावदायुषम्॥ इति स्मृतेः । वेणुमान्-अत्र **भरद्वाजः**-गृहस्थस्य वनस्थस्य यतेर्वा सूत्रिजातिषु । वेणुदण्डः प्रशस्तः स्यान्निर्दोषः सप्रमाणकः॥ गृहारण्यस्थयोर्दण्डी युक्पर्वी यतिर्नोन्यथा। शिरःप्रमाणो विप्रस्य क्षत्रियस्यालिकोन्नतः॥ घ्राणप्रमाणो वैश्यस्य दण्ड एषां क्रमात्स्मृतः । **मनुः**-केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः। ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः ॥ **याज्ञवल्क्यः**-नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनम् । न च मूत्रं पुरीषं वा नाशुची राहुतारकाः ॥ **मनुः**-नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन। नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥ नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम् । क्षुवतीं जृम्भमाणां वा नचासीनां यथासुखम् ॥ नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम् । न पश्येत्प्रसवन्तीं च तेजस्कामो द्विजोत्तमः॥ नेक्षेत चाश्नतीमित्यत्र चकारेणाश्नन्तं स्त्री च नेक्षेतेत्यर्थः समुच्चीयते । "जायाया अन्ते नाश्नीयादवीर्यवदपत्यं भवति" इति श्रुतेः। " न भार्यादर्शनेश्नीयात् " इति स्मृतेश्च । नाप्सु स्वं प्रतिबिम्बं तु तेजस्कामो निरीक्षयेत् । मयि तेज इन्द्रियमित्यात्मच्छायेक्षणे जपेत् ॥ इति स्मृतेर्नेचोदके निरीक्षेत स्वं रूपमित्यर्थः । अयमेव ■ इत्येतत्सर्वं मन्त्रमुदीरयेत् । वर्षत्यप्रावृतो गच्छेत्स्वपेत्प्रत्यक्शिरा नच ॥ " अयमेव ज्ञः पाप्मानमपहन्तु " इति मन्त्रः । ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत् । पादौ प्रतापयेन्नाग्नौ न चैनमतिलङ्घयेत् ॥ ष्ठीवनम् उद्गिरणम्, असृक् रक्तम्, शकृत् पुरीषम् । अत्र **शङ्खः**-तुषकेशकरीषभस्मास्थिश्ले-

ष्मनखलोमान्यप्सु न निक्षिपेन्न पादेन पाणिना वा जलमभिहन्यात् । इति । मनुश्च—नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् । नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ॥ अधस्तान्नोपदध्याच्च न चैनमतिलङ्घयेत् । न चैनं पादतः कुर्यान्न प्राणाबाधमाचरेत् ॥ अमेध्यानि द्वादश मलानि । नाशुचिः संस्पृशेदग्निं पृष्ठभागं न तापयेत् । जलक्षीरादिकं पेयं सर्वं नाञ्जलिना पिबेत् ॥ जलं पिबेन्नाञ्जलिना न शयानं प्रबोधयेत् । नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न संवसेत् ॥ न शयानं प्रबोधयेदिति वचनादात्मनो वाधिशयानं न प्रतिबोधयेत्। अत्रापस्तम्बः—शय्यासने चाचरिते नाविशेषानभिभाषितो गुरुमभिभाषेत प्रियादन्यद्व्युपतोदव्युपजापव्यभिहासोदामन्त्रणनामधेयग्रहणप्रेषणानीति । गुरोर्वर्जयेत्। मनुः—शय्यासने चाध्युषिते श्रेयसे न समाचरेत् । प्रियादन्यत् संतोषजनकवाक्यादन्यत्, व्युपतोदः दण्डतृणाङ्गुल्यादिघट्टनम् । व्युपजापः हस्तादिना पिधायास्यं कर्णयोः कथनम्, वस्त्रादिना आस्यं प्रच्छाद्यावश्यवक्तव्यार्थकथने न दोषः । व्यभिहासः आस्यं व्यावृत्याभिमुख्येन हास्यम्, अत्र परिहारः—" न स्मयेत यदि स्मयेतापिगृह्य स्मयेत" इति ब्राह्मणम् । उदामन्त्रणं दूरे स्थित्वोच्चैराह्वानम् । अत्र मनुः—नोदाहरेदस्य नाम परोक्षमपि केवलम् । न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ आत्मनाम गुरोर्नाम नामातिकृपणस्य च । आयुष्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥ आपदि चोरव्याघ्राग्निसर्पादिभयेषु ज्ञापयेदेव । धर्मघ्नैः पशुलंघनादिभिर्न क्रीडेत् । व्याधितैः अत्र स्मृतिः—अक्षिरोगी ह्यपस्मारी ज्वरी कुष्ठी क्षयी तथा । श्वासकासीति तैर्युक्तामेकशय्यां तु वर्जयेत् ॥ विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् । केशभस्मतुषाङ्गारकपालेषु च संस्थितम् ॥ विरुद्धं जनपदग्रामाद्याचारविरुद्धं वर्जयेत् । अत्र मनुः—देवतानां गुरोराज्ञः स्नातकाचार्ययोरपि । नाक्रामेत्कामतश्छायां बभ्रुणो दीक्षितस्य च ॥ बभ्रुः कपिलः । अत्रिः—विप्राग्र्योर्विप्रयोश्चैव दम्पत्योरिपुधन्वनोः । नान्तरा गमनं कुर्याद्देवतामलिपीठयोः ॥ दिवा स्वापं न कुर्वीत न गच्छेच्च दिवा स्त्रियम् । दिवा निद्रा हरत्यायुर्दिवा स्त्री पुण्यनाशिनी ॥ स्नानार्द्रभूमिं नाक्रामेद्रेतोविण्मूत्रमेव च । श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत कामतः ॥ आपस्तम्बः—नानाग्नीनां सन्निवापं वर्जयेद्दत्वा च नानुकथयेत्कृत्वा च नानुस्मरेदात्मप्रशंसां परगर्हामिति च वर्जयेत् । कृत्वा उपकारमिति शेषः । विप्रा हि क्षत्रियात्मानो नावज्ञेयाः कदाचन । आमृत्योः श्रियमाकांक्षन्न कंचिन्मर्मणि स्पृशेत् ॥ विप्रः बहुश्रुतः, अहिः सर्पः, आत्मा स्वयम्, नावमन्तव्यः । नाचक्षीत धयन्तीं गां नाद्वारेण विशेत्क्वचित् । धयन्तीं परस्य क्षीरादि पिबन्तीम्, नाचक्षीत न निवर्तयेत् । गोब्राह्मणानलान्नानि नोच्छिष्टेन पदा स्पृशेत् । न निन्दाताडने कुर्यात्सुतं शिष्यं च ताडयेत् ॥ भार्या पुत्रश्च दासश्च शिष्यो भ्राता सहोदरः । आत्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा ॥ वयोबुद्ध्यर्थवाग्वेषश्रुताभिजनकर्मणाम् । आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा ॥ वेषः वस्त्रमाल्यादिविन्यासः, श्रुतं पुरुषार्थशास्त्रम् । हीनकल्पं न कुर्वीत सति द्रव्ये फलप्रदम् । चण्डालो जायते यज्ञकरणाच्छूद्रभिक्षितात् ॥ योयं हीनकल्प उक्तः, सति द्रव्ये असौ न कर्तव्यः । यच्च फल-

प्रदं काम्यं कर्म, तद्धीनकल्पं कर्तव्यमेव । अत्र **मनुः**–प्रभुः प्रथमकल्पस्य योनुकल्पेन वर्तते । न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम् ॥ साम्परायिकं पारलौकिकम् । **दक्षः**–अकृत्स्नत्वात्साधनानां मौढ्यात्कर्मकृतस्तथा । फलस्य चाभिसम्बन्धादपवित्रो विधिः स्मृतः ॥ **यमः**–उपादाय धनं शूद्राद्योग्निहोत्रमुपासते । दाता तत्फलमाप्नोति कर्ता च नरकं व्रजेत् ॥ **चन्द्रिकायाम्**–धर्मविद्ब्राह्मणः शूद्राद्यज्ञार्थं नाहरेद्धनम् । जायते स हि चण्डालः शूद्रार्थेनेष्टदैवतः ॥ **अखण्डादर्शे**–न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत धर्मवित् । यजमानस्तु भिक्षित्वा चण्डालः प्रेत्य जायते ॥ **मनुश्च**–ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते । ऋत्विजस्ते हि शूद्राणां ब्रह्मवादिषु गर्हिताः ॥ तेषां सततयुक्तानां शूद्राग्न्युपसेविनाम् । पदा मस्तकमाक्रम्य दाता दुर्गाणि संतरेत् ॥ यदा तु प्रक्रान्तयज्ञस्य मध्ये कथञ्चित्पश्वाद्यंगासंभवेन यज्ञः प्रतिषिद्धः, तदा " शूद्रादेव प्रतिग्राह्यम् " इति तत्प्रतिग्रहपरं वचनं द्रष्टव्यमिति चन्द्रिकायामुक्तम्, प्रारब्धस्यावश्यसमापनीयत्वात् । **कार्ष्णाजिनिः**–पुत्रमुत्पाद्य चाधीत्य कुर्याद्वैतानिकं द्विजः । यथाकथंचिदादध्यात्प्राप्तं चेत्साधुतो धनम् ॥ **अखण्डादर्शे**–दायप्राप्तैः स्वकृष्या वा लब्धैः शिष्टपरिग्रहात् । यजेत श्रद्धया विष्णुं श्रेयोर्थी नान्यथा यजेत् ॥ **चन्द्रिकायाम्**–स्मार्तान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः । न स्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथंचन ॥ अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तथर्त्विजः । दक्षिणाहीनो यजमानं नास्ति यज्ञसमो रिपुः ॥ **समुच्चये**–एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम् । सर्वस्य जगतो मूलमाचारं जगृहुः परम् ॥ **मनुः**–न विस्मयेत तपसा वदेदिष्ट्वा च नानृतम् । नार्तोप्यपवदेद्विप्रं न दत्त्वा परिकीर्तयेत् ॥ यज्ञोनृतेन क्षरति तपः क्षरति विस्मयात् । आयुर्विप्रपरीवादाद्दानं तु परिकीर्तनात् ॥ **शाण्डिल्यः**–यदुद्वेगकरं वाक्यमन्यथार्थावबोधकम् । असत्यमनृतार्थं च नोच्चरेत्क्वापि गर्हितम् ॥ गोपयेन्नोच्चरेद्धर्मान्नापृष्टः किंचिदुच्चरेत् । पृष्टोपि न वदेदर्थं गुह्यं सिद्धान्तमेव च ॥ **शातातपः**–नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः । जानन्नपि च मेधावी जडवल्लोकमाचरेत् ॥ **शाण्डिल्यः**–प्रदक्षिणे प्रणामे च पूजायां हवने जपे । न कण्ठावृतवस्त्रः स्याद्दर्शने गुरुदेवयोः ॥ वल्मीकं गोमयं चैव छायामश्वत्थतालयोः । न लङ्घयेद्व्रजं विप्रो गवां नित्यमनापदि ॥ कुटुम्बिनो विनान्येषां सीर्थयात्रा विशिष्यते । कुटुम्बिनो गृहे सर्वं निर्गतो विक्लो भवेत् ॥ विशिष्यते विधीयते । विक्लः लुप्तनित्यकृत्य इत्यर्थः । कुटुम्बी वर्जयेद्बिम्बं दार्वं शैलं च मृन्मयम् । गृहभित्तिषु संस्थं च योगनिद्रारसोत्सुकम् ॥ **आश्वमेधिके**–पचनाग्निं न गृह्णीयात्परवेश्मनि जातुचित् । तेन पक्वेन चान्नेन यत्कर्म कुरुते शुभम् ॥ तच्छुभस्य फलस्यार्धमग्निदस्य भवेद्ध्रुवम् । **श्रीविष्णुपुराणे**–किंचित्परस्वं न हरेन्नाल्पमप्यप्रियं वदेत् । प्रियं च नानृतं ब्रूयान्नान्यदोषानुदीरयेत् ॥ नान्यस्त्रियं तथा वैरं रोचयेत्पुरुषर्षभः । अन्ये यथा तथा वा कुर्वन्त्विति भावः । न हुं कुर्याच्छवं चैव शवगन्धो हि सोमजः । न कुर्याद्दन्तसंघर्षं न गृह्णीयाच्च नासिकाम् ॥ नासंवृतमुखो जृम्भेद्गासकासौ च वर्जयेत् । नोच्चैर्हसेत्सशब्दं च न मुञ्चेत्पवनं बुधः ॥ नखानखादी र चित-

न्याच्च तृणं न महीं लिखेत्। न श्मश्रु भक्षयेल्लोष्टं न मृद्गीयाद्विचक्षणः ॥ न दुष्टपति-तोन्मत्तबहुवैरातिकण्टकैः । बुधो मैत्रीं न कुर्वीत नैकः पन्थानमाव्रजेत् ॥ उपसर्पेच्च न व्यालान् चिरं तिष्ठेन्न चोत्थितः । नातीवजागरस्वप्नस्तद्वत्स्थानासने बुधः ॥ दंष्ट्रिणः शृङ्गिणश्चैव प्राज्ञो दूरेण वर्जयेत् । अवश्यायं च राजेन्द्र पुरोवातातपौ त्यजेत् ॥ न स्नायान्न स्वपेन्नग्नो नाद्यात्रोपस्पृशेन्नरः । मुक्तकच्छश्च नाचामेद्देवाद्यर्चां विवर्जयेत् ॥ नासमञ्जसशीलैस्तु सहासीत कदाचन । सद्वृत्तसन्निकर्षो हि क्षणार्धमपि शस्यते ॥ विरोधं नोत्तमैर्गच्छेन्नाधमैश्च सदा बुधः । विवाहश्च विवादश्च तुल्यशीलैर्नृपेष्यते ॥ अप्यल्पहानिः सोढव्या वैरेणार्थागमं त्यजेत् । नारभेत कलिं प्राज्ञः शुष्कवैरं च वर्जयेत् ॥ पादेन नाक्रमेत्पादं न पूज्याभिमुखं नयेत् । नीचासनं गुरोरग्रे भजेत विनयान्वितः ॥ योषितो नावमन्येत नैतासां विश्वसेत्क्वचित् । नच भूम्युद्भवे तांश्च नाधिकुर्यात्कदाचन ॥ मङ्गल्यपुष्परत्नादिपूज्याननभिवाद्य च । न निष्क्रामेद्गृहात्प्राज्ञः सदाचारपरो नृप ॥ शमं नयति यः क्रुद्धान् सर्वबन्धुरमत्सरी । भीताश्वासनकृत्साधुः स्वर्गस्तस्याल्पकं फलम् ॥ वर्षातपादिके छत्री दण्डी रात्र्यटवीषु च । शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत् ॥ नोर्ध्वं न तिर्यग्दूरं वा निरीक्षन्पर्यटेद्बुधः । युगमात्रं नरो गच्छेन्महीपृष्ठं विलोकयन् ॥ दोषहेतूनशेषांश्च वश्यात्मा यो निरस्यति । तस्य धर्मार्थकामानां हानिर्नाल्पापि जायते ॥ पापेष्वपापः पुरुषो ह्यभिधत्ते प्रियाणि यः । मैत्रीद्रवान्तःकरणस्तस्य मुक्तिः करे स्थिता ॥ तस्मात्सत्यं वदेत्प्राज्ञो यत्परप्रीतिकारणम् । सत्यं यत्परदुःखाय तत्र मौनपरो भवेत् ॥ प्रिययुक्तं हितं नैतदिति मत्वा न तद्वदेत् । श्रेयस्तत्र हितं वाक्यं यद्यप्यत्यन्तमप्रियम् ॥ प्राणिनामुपकाराय यदेवेह परत्र च । कर्मणा मनसा वाचा तदेव मतिमान् भजेत् ॥ इत्याह भगवानौर्वः सगराय महात्मने । सदाचारं पुरा सम्यङ्मैत्रेय परिपृच्छते ॥ मयाप्येतदशेषेण कथितं भवते द्विज । समुल्लंघ्य सदाचारं कश्चिन्नाप्नोति शोभनम् ॥ **शाण्डिल्यः**—अवमानमसामर्थ्यं हृद्रोगं रोगमान्तरम् । अनर्थमृणमायासमकृत्यं न प्रकाशयेत ॥ नाहरेद्गोमयं रात्रौ गोमूत्रं च न संध्ययोः । न सिञ्चेद्रोमशेर्गेहं रात्रौ तोयं न चाहरेत् ॥ **आपस्तम्बः**—दोषं बुध्वा न पूर्वः परेभ्यः पतितस्य समाख्याने स्याद्वर्जयेत्तेनं धर्मेषु स्त्रीभ्यः सर्ववर्णेभ्यो धर्मशेषान् प्रतीयादित्येके ॥ **काञ्चनमाली**—धर्मं भजस्व सततं त्यज भूतहिंसां सेवस्व साधुपुरुषान् जहि कामशत्रुम् । अन्यस्य दोषगुणकीर्तनमाशु मुञ्च सत्यं वदार्चय हरिं जय सर्वहानिम् ॥ **मनुः**—नाधार्मिके वसेद्ग्रामे न व्याधिबहुले वसेत् । न पाषण्डजनाक्रान्ते नोपसृष्टेन्त्यजैर्नृभिः ॥ नास्फोटयेन्न च क्ष्वेलेत्संरक्तो न विरावयेत् । न पादौ धावयेत्कांस्ये कदाचिदपि भाजने ॥ लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः । स विनाशं व्रजत्याशु सूचकोऽशुचिरेव च ॥ **शाण्डिल्यः**—गुरोर्गेहे देवगृहे पुष्पवाट्यां गवां कुले । कृपणं चोल्बणं कर्म वर्जयेदपि संसदि ॥ पादप्रक्षालनं व्याख्यां विष्टरं चावकुण्ठनम् । न कुर्याद्गुरुगेहे हासं कण्ठध्वनिं तथा ॥ भोजनं स्वापमुद्घोषं ताम्बूलं केशशोधनम् । छत्राद्यं च तथान्याश्च न कुर्यादुल्बणक्रियाः ॥ विक्रीणन् ब्राह्मणो द्रव्यं

क्रीणन्वा वृद्धिकांक्षया । भिन्नवृत्तिर्विकर्मस्थः सत्पथाच्च्यवते द्विजः ॥ वार्धुष्यमुपजीवन्ति ये विप्रा लोभमोहिताः । अभोज्यास्ते ह्यपाङ्क्तेयाः क्रियास्तेषां तु निष्फला ॥ महतामवमानं च शरीरे क्लेश एव च । अर्थहानिश्च विज्ञानं वर्धयत्यग्निमाज्यवत् ॥ मन्त्रो मन्त्रेश्वरः शास्त्रं मन्त्रसिद्धिस्तथा जपः । सिद्धान्तश्चाक्षसूत्रं च गोप्यं धान्यं धनायुषी ॥ धान्यार्थबन्धुनाशेन नैर्धन्योपद्रवेण च । मूढैः कृतावमानेन न खिन्नः स्यात्कदाचन ॥ **आश्वमेधिके**–विभीतककरञ्जानां छायां दूरात्तु वर्जयेत् । विप्रदेवपरीवादं वर्जयेत्पीडितोपि सन् ॥ नान्तरा गमनं कुर्यान्नाग्निमप्रयतः स्पृशेत् । नाधः कुर्यात्कदाचित्तु न पृष्ठं परितापयेत् ॥ **शाण्डिल्यः**–सर्वमैत्रीं च कुर्वीत विवादं नाचरेत्क्वचित् । अधीतं नोत्सृजेच्छास्त्रं न प्रमादनृतं क्वचित् ॥ ( अप्रियमिति पाठान्तरम् । ) शपथं नाचरेत्पादं संस्पृश्य गुरुदेवयोः । अनुल्बणः शस्तवासा नियताशनभोजनः ॥ अनुद्धतः साधुसेवी सिद्धिं गच्छति शाश्वतीम् । नक्तमुच्चैर्न वक्तव्यं विवादं न स्मरेद्बुधः ॥ कूपं च वृक्षमूलं च सभावासं रिपोर्गृहम् । शून्यायतनमध्वानं न विशेन्नक्तमञ्जसा ॥ **सायणीये**–भौमे शुक्रे तथा भानौ मध्याह्ने निशि संध्ययोः । नाश्वत्थसेवनं कुर्यात्कुलक्षयकरं भवेत् ॥ किंच, पुंसां दीपप्रशमनात् स्त्रीणां कूष्माण्डखण्डनात् । अचिरेणैव कालेन वंशच्छेदो भविष्यति ॥ क्षुतस्खलितजृम्भेषु नृणामायुः प्रहीयते । तत्क्षणात्प्रतिकर्तव्यं जीवधूल्यंगुलिस्वनैः ॥ क्षुते शतं जीवेति प्रतिवक्तव्यम्, स्खलिते पांसूनादाय ललाटे निधातव्यम्, जृम्भणे स्वंगुलिस्फोटनेन परिहर्तव्यमित्यर्थः । अधोबीजजलान्नाग्निक्षीरधान्यौषधादिकम् । रात्रौ दातुर्गृहं शून्यं प्रतिसंग्रहणं शुभम् ॥ यत्किंचिद्द्रव्यमप्यादानेन क्षीरादिदाने नक्तं न दोष इत्यर्थः । कामः क्रोधश्च लोभश्च देहे तिष्ठन्ति तस्कराः । ज्ञानरत्नापहाराय तस्माज्जाग्रत जाग्रत ॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ परस्त्रीषु जात्यन्धाः परदारेष्वपुंसकाः । परापवादे ये मूकास्तेतीव दयिता मम ॥ **मनुः**–कार्पण्यं मत्सरो दम्भः क्रोधस्तृष्णा भयं मदः । अनर्थानि विदुः प्राज्ञा दुःखान्येतानि देहिनाम् ॥ रागाद्यपेतं हृदयं वागदुष्टानृतादिना । हिंसादिरहितः कायः केशवाराधनं त्रयम् ॥ चत्वारि यस्य द्वाराणि सुगुप्तानि मनीषिभिः । उपस्थ उदरं पाणिर्वाक् चतुर्थी स वै पुमान् ॥ तस्मात्सर्वप्रयत्नेन बुद्धिमास्थाय सात्त्विकीम् । वेदोदितानि सर्वाणि कर्माणीहाचरेद्बुधः ॥ इत्यादीन्यन्यत्र स्नातकव्रतानि द्रष्टव्यानि । अत्र **आपस्तम्बः**, सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखं ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यन्ते तच्च क्रतुवदुभयोः लोकयोः सुख एव वर्तते । इति ॥

## ❀ अथ सायंसंध्याविधिः ❀

तत्र **हारीतदक्षशौनकाः**–सायंसंध्यां ततः कुर्यात्तटाके तु बहिर्जले । उपासीत बहिर्देवीं यदि पापैः स मुच्यते ॥ प्रातः काले तु यत्प्रोक्तं कर्म कुर्याद्द्विजोत्र

वे। अत्र सायंकालजपे विशेषमाह दक्षः–सप्तम्यादिप्रदोषेषु सप्तत्रिंशद्विधीयते। चतुर्थ्यादिप्रदोषेषु शतार्धं सचतुष्टयम्॥ आदिशब्देन चतुर्थ्यष्टमीचतुर्दश्यो गृह्यन्ते। विष्वादिके पर्वणोश्च षट्त्रिंशज्जप उच्यते। प्रथमायां तदेव स्यात्प्रातरेवं जपेन च॥ एतच्च सायंकालविषयमिति मन्तव्यम्। अत्र काश्यपः–नित्यस्यार्धं चतुर्थीवसुमनुतिथिषु स्याज्जपः सप्तमी या सप्तत्रिंशच्च तस्यां प्रतिपदि च पुनः षडुत्तरात्रिंशदेव। एवं पर्वद्वयेपि त्रियुतदशतिथावष्टभिर्विंशतिः स्यादेवं विष्वादिकालेष्वखिलमुनिमतं सायमेवं न कल्ये॥ तथानुष्ठानप्रकारः तत्र लिखितः–विचार्य च पुराणानि वेदार्थान् भक्तिमास्थितः। विष्णुं सदा हृदि ध्यायेद्यावद्भवेत्षष्ठसप्तमी॥ दक्षः–इतिहासपुराणाभ्यां षष्ठं सप्तममभ्यसेत्। अष्टमे लोकयात्रां तु विचार्य च गृही ततः॥ बहिः संध्यामुपासीत नदीतटगतः शुचिः॥ लोकयात्रा बन्धुजनकार्यम्, देशवार्ता, आत्मगृहक्षेत्रादिचिन्ता चोच्यते। व्यासः–अनृतं मद्यगन्धं च दिवा स्वापं च मैथुनम्। पुनाति वृषलस्यान्नं बहिः संध्या ह्युपासिता॥ बहिः ग्रामाद्बहिर्नदीतटाकादौ। शातातपः–सूर्येस्तशिखरं प्राप्ते पादशौचक्रियान्वितः। बहिः संध्यामुपासीत कुशपाणिः समाहितः॥ विना दर्भैश्च यत्कर्म विना यज्ञोपवीततः। राक्षसं तद्भवेत्सर्वं नामुत्रेह फलप्रदम्॥ बहिः संध्या दशगुणा गतप्रस्रवणादिषु। पुण्यतीर्थे शतगुणा सहस्रं जाह्नवीजले॥ तस्माद्ग्रामाद्बहिर्गत्वा प्रातःसंध्यावदवश्यकर्तव्यानि कृत्वा दन्तधावनवर्जं पादौ पाणी प्रक्षाल्याचम्य धौतं परिधाय मन्त्रस्नानं कृत्वा प्राङ्मुख उदङ्मुखो वा शुचौ देशे निषण्णः सायंसंध्यामुपासिष्य इति संकल्प्य ऋष्यादिस्मरणपूर्वकमापोहिष्ठादिभिर्मार्जयित्वाग्निश्चेत्यपः पिबेत्। अत्र पितामहः–अग्निश्चेत्यनुवाकस्य गायत्री च्छन्द उच्यते। ऋषिः सूर्य इति ज्ञेयो देवता च हुताशनः॥ एवं मन्त्राचमनं कृत्वाचम्य सुरभिमत्या चापोहिष्ठादिभिः पूर्ववन्मार्जयित्वार्धास्तमिते रवौ प्रत्यङ्मुखस्तिष्ठन्दृचेनाभिमन्त्रितमुदकमूर्ध्वं त्रिरुत्क्षिप्य प्रदक्षिणीकृत्य शुचौ देशे पवित्रपाणिरासीनो भगवन्तं विष्णुं कंचित्कालमुपास्य गायत्रीं पूर्ववज्जपेत्। अत्र व्यासः–आसीनस्तु जपेद्देवीं गायत्रीं पश्चिमां प्रति। शातातपः–पूर्वां संध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति। पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम्॥ महाभारते–तिष्ठेत्संध्यां सदा पूर्वां सदासीत च पश्चिमाम्। अन्यथा कुरुते यस्तु ब्रह्महत्यां स विन्दति॥ आपस्तम्बः–संध्ययोश्च बहिर्ग्रामादासनम्। इत्यादिभिरासनविधानं गायत्रीजपविषयम्। रवेरभिमुखस्तिष्ठंस्त्रिरूर्ध्वं संध्ययोः क्षिपेत्। त्रिरूर्ध्वं संध्ययोर्विप्रस्तिष्ठन्नेवोदकाञ्जलिम्॥ इत्यादिभिर्बहुस्मृतिभिरर्घ्यप्रदाने संध्ययोः स्थितिविधानादविगीतशिष्टाचाराच्च। ईषन्नम्रः प्रभाते तु मध्याह्ने चर्जुसंस्थितिः। दद्यादर्घ्यं ततो विद्वान् सायाह्ने सम्यगास्थितः॥ इति कात्यायनीयमनादरणीयम्, बहुस्मृतिविरोधाच्छाखान्तरोक्तत्वाच्च। किंच "भूयसां स्याद्बलीयस्त्वम्" "द्वैधे बहूनां वचनम्" इति संध्ययोः स्थितिविधायिबहुवचनानां प्राबल्यात्। "तिष्ठेरताथम्" इति वचनात्तिष्ठन्नेवार्घ्यं कुर्यादिति सिद्धम्। शाण्डिल्यः–अधिवृक्षे न वीक्षेत वीक्ष्यमाणे दिवाकरे। विधाय देहशुद्धिं च वासोपि परि-

वयवसंयुक्तां शोभनां दृष्टिहारिणीम् ॥ कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः । तामर्चयेत्तां प्रणमेत्तां यजेत्तां विचिन्तयेत् ॥ विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम् । **विष्णुधर्मोत्तरे**–अन्धाः क्लीबा जडा व्यङ्गाः पतिता रोगिणोन्त्यजाः । शालग्रामशिलां पूज्य परं गच्छन्त्यनुत्तमम् ॥ नीचा ये च जनास्तेषां शालग्रामशिला गतिः । नास्ति गङ्गासमं तीर्थं नास्ति ज्ञानसमं सुखम् ॥ नास्ति विष्णोः परं दैवं तपो चानशनात्परम् । **हारीतः**–सर्वतीर्थमयी गङ्गा सर्वदेवमयो हरिः । सर्ववेदमयी गीता सर्वशास्त्रमयो मनुः ॥ **शाण्डिल्यः**–नक्तं कुटुम्बिकोऽश्नीयाद्धितं पथ्यं सुतृप्तिमत् । सर्वं च तिलसंबन्धि दधि शाकं च वर्जयेत् ॥ मुद्गसंबन्धि सर्वं च शुक्तं कालान्तरे भवेत् । अपूपवर्ज्यं तथापि वर्ज्यमेव दिनान्तरे ॥ शुष्कं वस्तु तथा पक्वं सघृतं शाकमेव च । परिभुक्तं च निर्नीरं न पर्युषितदोषभाक् ॥ दध्यन्नं पायसान्नं च गुडान्नं च घृतौदनम् । अपूपानि न वर्ज्यानि न पर्युषितदोषभाक् ॥ अत्र **वृद्धमनुः**–आर्द्रपादस्तु भुञ्जीयात्प्राङ्मुखस्त्वासने शुचौ । पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः ॥ नैकवासास्तु भुञ्जीयात्रानन्तर्धाय वा पुनः । न भिन्नपात्रे भुञ्जीत पर्णपृष्ठे तथैव च ॥ अन्नं पूर्वं नमस्कुर्यात्प्रहृष्टेनान्तरात्मना । नान्यदालोकयेदन्नं न जुगुप्सेत तत्पुनः ॥ जुगुप्सितं च यच्चान्नं राक्षसा एव भुञ्जते । परिषेकजलाचान्यस्येयमेव तु मन्त्रवत् ॥ ऋतं त्वा सत्येनेति पात्रस्थमन्नं परिषिच्य हस्तं प्रक्षाल्य अन्यजलमादाय " अमृतोपस्तरणमसि " इति पिबेदित्यर्थः । अत्र श्रुतिश्च–ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति । सत्यं त्वर्तेन परिषिञ्चामीति प्रातः । **आश्वमेधिके**–यथा रसं न जानाति जिह्वा प्राणाहुतौ नृप । तथा समाहितः कुर्यात्प्राणाहुतिमतन्द्रितः ॥ वक्त्रप्रमाणपिण्डांश्च ग्रसेदेकैकशः पुनः । वक्त्राधिकं तु यत्पिण्डमात्मोच्छिष्टं तदुच्यते ॥ पिण्डावशिष्टमन्नं च वक्त्रान्निःसृतमेव च । अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ॥ स्वमुच्छिष्टं तु यो भुंक्ते यो भुंक्ते भिन्नभाजने । चान्द्रायणं चरेत्कृच्छ्रं प्राजापत्यमथापि वा ॥ पिबतः पतिते तोये भाजने मुखनिःसृते । अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ॥ **व्यासः**–मौनी वाप्यथ वामौनी प्रहृष्टः संयतेन्द्रियः । भुञ्जीत विधिवद्विप्रो न चोच्छिष्टानि चापयेत् ॥ न च भिन्नासनगतो न शयानः स्थितोपि वा । न भिन्नभाजनेऽश्नीयान्न भूम्यां न च पाणिषु ॥ नान्धकारे न चाकाशे न च देवालयादिषु । **हारीतपितामही** च–ज्योत्स्नोल्कालोकमार्गेषु प्रदोषे च महानिशि । कोणे चामार्जिते नाधारसंघे शय्यासु हर्म्यके ॥ शुद्धं न्यायेन संप्राप्तं साधुयत्नेन साधितम् । अभोज्यमेव जानीयान्निजमन्त्रानिवेदितम् ॥ **आपस्तम्बः**–यावद्ग्रासान् सन्नयन्न स्कन्दयन्नापजिहीतापजिहीत वा कृत्स्नं ग्रासं ग्रसीत सहाङ्गुष्ठं न च मुखशब्दं कुर्यात्पाणिं च नावधूनुयादाचम्य चोर्ध्वौ पाणी धारयेदाप्रोदकीभावात्ततोऽग्निमुपस्पृशेद्दिवा च न भुञ्जीतान्यन्मूलफलेभ्यः । इति । आचम्य चेत्यादिपुष्टिकामनया पुष्टिश्राद्धकृद्विषयम् । यावदित्यादिकं तु स्नातकव्रतोपलक्षणम् । " न रसान् गृहे भुञ्जीत निरवशेषमतिथिभ्यो नात्मार्थमभिरूपमन्नं पाचयेत् ।" इति । पाचयन् पृथक्पाकी

स्यात् । निरवशेषमिति-" न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत् । " इत्यस्यार्थ एवोक्तः । अतः " शेषभोज्यतिथीनां स्यात् " इति पूर्वसूत्रं सुसङ्गतम् । **संग्रहे**-उत्तरापोशनात्पश्चात्पात्रं हस्तान्न संस्पृशेत् । यदि स्पृशेत्तु मोहेन सचेलः स्नानमाचरेत् ॥ पीत्वा भुक्त्वा च यो मर्त्यः शून्यं पात्रं परित्यजेत् । स भूयः क्षुत्पिपासार्तो भवेज्जन्मनि जन्मनि ॥ **याज्ञवल्क्यः**-अप्रणोद्योतिथिः सायमपि वाग्भूतृणोदकैः । **मनुः**-अप्रणोद्योतिथिः सायं सूर्योढो गृहमेधिना । काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत् ॥ दिवातिथौ तु विमुखे गते यत्पातकं नृणाम् । तदेवाष्टगुणं प्रोक्तं सूर्योढे विमुखे गते ॥ अशनासनशय्याभिरद्भिर्मूलफलेन वा । नास्य कश्चिद्वसेद्गेहे शक्तितो नार्चितोतिथिः ॥ **स्मृत्यन्तरे**-अग्निहोत्रं जरन् कन्या बन्धुश्च पशवो गृहे । अतिथिः कुलवृद्धाश्च निर्दहन्त्यवमानिताः ॥ **आश्वमेधिके**-संचितं यद्गृहस्थस्य पापमामरणान्तिकम् । निर्दहिष्यति तत्सर्वमेकरात्रोषितोतिथिः ॥ **दक्षः**-कृत्वा चैवं ततः पश्चात्स्वाध्यायं किंचिदारभेत् । प्रदोषपश्चिमौ यामौ वेदाभ्यासेन यापयेत् ॥ यामद्वयं शयानो हि ब्रह्मभूयाय कल्पते । यत्तु **आपस्तम्बेनोक्तम्**-" प्रदोषे च भुक्त्वा मोदकयोश्च पाण्योः " इति, " प्रदोषे भुक्त्वा नाधीयीत " तेनाधीत्यैव भुञ्जीतेति व्याख्यातं तत्कथं भोजनानन्तरमध्ययनम् ? उच्यते-" प्रदोषे च नाधीयीत भुक्त्वा मोदकयोश्च पाण्योर्नाधीयीत " इत्येवार्थत्वात् । " भुक्त्वार्द्रपाणिरम्भोन्तः " इति याज्ञवल्क्यादिवचनं विस्मृत्यैव तथा व्याख्यातमित्यदोषः । " भुक्त्वा यावदार्द्रपाणिस्तावन्नाधीयीत । " इति कविवल्लभः । भुक्त्वा यावदार्द्रपाणिस्तावन्नाधीयीत । इति न्यायविदः ॥

## ❋ अथ शयनविधिः ❋

**शाण्डिल्यः**-भगवत्सन्निधावेव विविक्तेऽन्यत्र वा स्थले । योगं कुर्यात्समाधाय यथास्थानासनो वशी ॥ निष्प्रदीपे न भुञ्जीत विशेषान्निर्वृते पुनः । प्राप्यावयोगमास्थाय भुक्त्वा च मितमत्वरः ॥ प्रोक्षितं सपवित्राद्भिराविशेच्छयनोत्तमम् । आमुहूर्तात्तु वै ब्राह्मादन्यूनं प्रहरात्सुधीः॥ध्यानार्चनजपस्तोत्रपाठैः कालं विनोदयेत् । **और्वः**-प्राच्यां दिशि शिरः शस्तं याम्यायामथ वापि वा । सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ॥ **गार्ग्यः**-स्वगृहे प्राक्शिराः शेते श्वाशुरे दक्षिणाशिराः । पथि प्रत्यक्छिराः शेते न कदाचिदुदक्शिराः ॥ आर्द्रपादस्तु भुञ्जानो दीर्घमायुरवाप्नुयात् । नार्द्रपादः शयानश्च दीर्घमायुरवाप्नुयात् ॥ द्विराचम्य शुचिर्विप्रः पादौ प्रक्षाल्य वाग्यतः । नमस्कृत्य यथान्यायं भगवन्तं सनातनम् ॥ **पराशरः**-पादौ प्रक्षाल्य सम्मृज्य द्विराचम्य शुचिस्ततः । शुष्यत्पादास्यपाणिस्तु संविशेन्माधवं स्मरन् ॥ **मार्कण्डेयः**-शून्यालये श्मशाने च ह्येकवृक्षे तथा पथि । महादेवगृहे चापि मातृवेश्मनि न स्वपेत् ॥ धान्यगोदेवविप्राणां गुरूणां च तथोपरि । न चैव भिन्नशयने नाशुचौ नाशुचिः स्वपेत् ॥ मातृवेश्मनि आहयादिससमात्गृहे । **नारदः**-नार्द्रवासाश्च नग्नश्च नोत्तरापरमस्तकः । नाकाशे सर्वशून्ये च न च चैत्यद्रुमे स्वपेत् ॥ न यक्षनागायतने स्कन्दस्यायतने तथा ।

कूलच्छायासु च तथा शर्करालोष्टपांसुषु ॥ न स्वपेच्च तथा दर्भे विना दीक्षां कथंचन । **रत्नावल्याम्**-मङ्गल्यं पूर्णकुम्भंतु शिरःस्थाने निवेशितम् । वैदिकैर्गारुडैर्मन्त्रै रक्षां कृत्वा स्वपेन्निशि ॥ **यमः**-रात्रिसूक्तं जपेत्स्मृत्वा सर्वांश्च सुखशायिनः । नमस्कृत्वाव्ययं विष्णुं समाधिस्थः स्वपेन्निशि ॥ **शाण्डिल्यः**-सुवस्त्रवेषधरया स्नातया शुद्धचित्तया । अरोगया दयितया स्वयमेवंविधः स्वपेत् ॥ धातुक्षयो रोगवृद्धिरश्रीः सत्कर्मविप्लवः । सौभाग्यायुर्यशोहानिः पुंसां स्त्रीष्वतिसंगिनाम् ॥ **याज्ञवल्क्यः**-षोडशर्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् । ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् ॥ **मनुः**-ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा । पर्ववर्ज व्रजेच्चैनां तद्व्रतो रतिकाम्यया ॥ **बृहस्पतिः**-ऋतुकालाभिगमनं पुंसां कार्यं प्रयत्नतः । सदैव या पर्ववर्ज स्त्रीणामभिमतं हि तत् ॥ यथाकामी भवेद्विद्वान् स्त्रीणां वरमनुस्मरन् । **मनुः**-मन्वादिषु युगादौ च मातापित्रोर्मृतेहनि । अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् ॥ ब्रह्मचारी भवेन्नित्यमनृतौ स्नातको द्विजः । **पराशरः**-पञ्चमापूर्णिमाद्यासु चतुर्दश्यष्टमीषु च । आसु संनिहितं पापं तैलाभ्यंगे क्षुरे भगे ॥ **व्यासः**-परदारान्न गच्छेत मनसापि कथंचन । परदाररतिः पुंसामुभयत्रापि भीतिदा ॥ इति मत्वा स्वदारेषु ऋतुमत्सु बुधो व्रजेत् । **देवलः**-यः स्वदारानृतुस्नातां स्वस्थः सन्नोपगच्छति । भ्रूणहत्यामवाप्नोति गर्भप्राप्तिर्विनश्यति ॥ त्रीणि वर्षाण्यृतुमतीं यो भार्यां नोपगच्छति । स तुल्यं भ्रूणहत्याया दोषमृच्छत्यसंशयः ॥ ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति । तुल्यमाहुस्तयोः पापमयोनौ यश्च सिंचति ॥ अनृतौ स्त्रीगमननिषेधे क्वचिदपवादमाह **कात्यायनः**-अनृतावृतुकाले तु दिवा रात्रौ तथापि वा । प्रोषितस्तु स्त्रियं गच्छेत्प्रायश्चित्तीयते न च ॥ **दक्षः**-वृद्धां वन्ध्यामवृत्तां च मृतापत्यामपुष्पिणीम् । कन्यां च बहुपुत्रां च वर्जयन्मुच्यते भयात् ॥ **पैठीनसिः**-न प्रथमे न द्वितीये न तृतीये न चतुर्थे स्त्रियमाह्वयेत । इति । **व्यासः**-रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः । चतस्रो रात्रयस्तस्माद्व्यपाये वर्जयेत्सुधीः ॥ **मनुः**-ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः । चतुर्भिरितरैः सार्धमहोभिः सद्भिर्गर्हितैः ॥ तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या । त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः॥ एवं चतुर्थदिनवर्ज्यत्वस्मरणमल्पायुर्धनवर्जितपुत्रोद्भवाभिप्रायम्। **आपस्तम्बः**-चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मां प्रजानिःश्रेयसमृतुगमन इत्युपदिशन्ति । इति चतुर्थदिनगमनस्मरणं गन्तुर्दोषाभावाभिप्रायम् । अत्र **मनुः**-युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु । तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम् ॥ इति स्मरणं प्रायिकाभिप्रायम् । **व्यासः**-चतुर्थे सा न गम्याह्नि गन्ताल्पायुः प्रसूयते । विद्याहीनं व्रतभ्रष्टं पतितं पारदारिकम् ॥ दारिद्र्यार्णवमग्नं च तनयं वा प्रसूयते । कन्यार्थिनैव गन्तव्या पञ्चम्यां विधिवत्पुनः ॥ षष्ठ्यां गम्या यदा नारी सत्पुत्रजननी भवेत् । सप्तम्यां चैव कन्यार्थी गच्छेच्चैव प्रसूयते ॥ नवम्यां दारिकार्थः स्याद्दशम्यां पण्डितं तथा । एकादश्यां तथा नारीं जनयेद्धर्मदूषिणीम् ॥ द्वादश्यां धर्मतत्त्वज्ञं श्रौतस्मार्तप्रवर्तकम् । त्रयोदश्यां तथा नारीं वर्णसंकरकारिणीम् ॥

जनयत्यङ्गना यस्मान्न गच्छेत्सर्वयत्नतः । दाराप्रियैरलंकारैरलंकृत्य प्रसन्नधीः ॥ प्रियासमीपे शयने संविशेत्प्रहरद्वयम् ॥ **मनुः**–नोपगच्छेत्प्रमत्तोपि स्त्रियमार्त्तवदर्शने । समानशयने चैव न शयीत तया सह ॥ रजसाभिप्लुतां नारीं द्विजस्याभ्युपगच्छतः । प्रजा तेजो यशश्चैव आयुश्चैव प्रहीयते ॥ **व्यासः**–नास्नातां तु स्त्रियं गच्छेन्नातुरां न रजस्वलाम् । नोपेयाद्गर्भिणीं नारीं दीर्घमायुर्जिजीविषुः ॥ नानिष्टां न प्रकुपितां नाप्रशस्तां न रोगिणीम् । नादक्षिणां नान्यकामां नाकामां नान्ययोषितम् ॥ क्षुत्क्षामां नातिभुक्तां च स्वयं चैतैर्गुणैर्युतः । स्नातः स्रग्गन्धधृक् प्रीतो व्यवायं पुरुषो व्रजेत् ॥ **मनुः**–पुमान् पुंसोधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः । समे पुमान् पुंस्त्रियौ वा क्षीणेल्पे च विपर्ययः ॥ अत्र **बृहस्पतिः**–स्त्रियाः शुक्रेधिके स्त्री स्यात्पुमान्पुंसोधिके भवेत् । तस्माच्छुक्रविवृद्ध्यर्थं स्निग्धमुष्णं च भोजयेत् ॥ लघ्वाहारां स्त्रियं कुर्यादेवं सञ्जनयेत्सुतम् । **भरद्वाजः**–भार्यासंभोगसमये पुष्पकाले विनान्यदा । उपवीतं द्विजः कुर्यान्निवीतं पृष्ठभागतः ॥ **हारीतः**–मानुषेष्वंसयोः सक्तं मैथुने पृष्ठभागिकम् । तर्पणेष्वुरसोः सक्तं निवीतं त्रिविधं स्मृतम् ॥ **पराशरः**–ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥ सन्निधिग्रहणादसन्निधाने न दोषः । तथा । यः स्वदारानृतुस्नातां स्वस्थः सन्नोपगच्छति । भ्रूणहत्यामवाप्नोति प्रजाप्राप्तिर्विनश्यति ॥ इति **यमस्मरणाद**स्वस्थस्य न दोषः । तथा च । ऋतुकालाभिगामी स्याद्यावत्पुत्रोभिजायते । इति कौर्मवचनाज्जातपुत्रस्य न दोषः । **मनुयमौ**–यदि संयोगकाले तु पुरुषो रागमोहितः । द्विधा समुत्सृजेच्छुक्रं यमकं तत्र जायते ॥ **मनुः**–न मातृतो ज्येष्ठ्यमस्ति जन्मतो ज्येष्ठ्यमुच्यते । यमयोश्चैव गर्भे च जन्मतो ज्येष्ठता स्मृता ॥ अतः प्रथमज एव ज्येष्ठः । **आपस्तम्बः**–स्त्रीवाससैव सन्निपातः स्याद्यावत्सन्निपातं चैव सहशय्या ततो नानोदकस्पर्शनम् । इति । व्यवायावधि स्त्रिया सह शयनम्, व्यवायोत्तरकालं तु, नाना पृथक् पृथक् शयनमित्यर्थः । उदकोपस्पर्शनं ऋतुगमनविषयम् । तथा । **मनुः**–ऋतौ तु गर्भशंकित्वात्स्नानं मैथुनिनः स्मृतम् । अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत् ॥ **शाण्डिल्यः**–यावन्निद्रां समभ्येति तावच्च मनसा जपेत् । निद्रान्तरे प्रबुद्धः सन् कीर्तयेद्भगवद्गुणान् ॥ **यमः**–यस्मात्त्रयोप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् । गृहमेवावधार्यन्ते तस्माच्छ्रेष्ठो गृहाश्रमी ॥ **याज्ञवल्क्यः**–विहितस्याननुष्ठानान्निन्दितस्य निषेवणात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ **पराशरः**–अकुर्वन्विहितं कर्म शक्तः पतति तद्दिने । प्रायश्चित्तेन महता शुद्धिमाप्नोत्यनापदि ॥ **संवर्तः**–सदाचारेण देवत्वमृषित्वं च तथैव च । प्राप्नुवन्ति कुयोनित्वं मनुष्यास्तद्विपर्यये ॥ **यमः**–वर्णधर्मपरिभ्रष्टा आश्रमेभ्यः परिच्युताः । भिन्नदेशान् प्रपद्यन्ते प्रेतीभूता यमक्षये ॥ भिन्नदेशान् नरकान् । **श्रीवाराहे भूमिंप्रति भगवान्**–श्रुतिः स्मृतिर्ममैवाज्ञा यस्तामुल्लंघयेच्छुभे । सर्वस्वेनापि मां देवि नामोत्याज्ञाविघातकृत् ॥ **वसिष्ठः**–नित्यानि ह्यवर्यतजस्री भवतीति विज्ञायते तथा अश्रोत्रिया अन-

नूचाना अननुवाक्या अनग्नयः शूद्रकर्माणो भवन्ति । इति । **पराशरः**-दुराचारो हि पुरुषो लोके भवति निन्दितः । दुःखभागी च सततं व्याधितोल्पायुरेव च ॥ **समुच्चये**-वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च । अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः"॥ तस्माद्विद्धि महाराज वृत्तं ब्राह्मणलक्षणम् । **व्यासः**-नास्तिक्यादथ वालस्याच्छास्त्रोक्तं न करोति यः । स याति नरकान् घोरांस्तिर्यग्योनिषु जायते ॥ यो यस्य विहितो धर्मः स जातिरिति कीर्त्यते । निजधर्मपरिभ्रष्टः सद्यः पतति जातितः ॥ **श्रीगीतायाम्**-यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः। न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ इति । **मनुः**-आचाराल्लभते चायुराचारादीप्सिताः प्रजाः । आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥ **श्रीभीष्मः**-आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः । **समुच्चये**-आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः । छन्दांस्येनं मृत्युकाले त्यजंति नीडं शकुन्ता इव जातपक्षाः ॥ **और्वः**-समुल्लंघ्य सदाचारं कश्चिन्नाप्नोति शोभनम् । **मनुः**-वेदाध्ययनहीनोपि श्रद्धधानो जितेन्द्रियः । आचारयुक्तो विप्रस्तु पुण्यां गतिमवाप्नुयात् ॥ **व्यासः**-नान्यो विमुक्तये पन्था मुक्त्वाश्रमविधिं सुखम् । तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ॥ श्रौतं कर्म न चेच्छक्तः कर्तुं स्मार्तं समाचरेत् । तत्राप्यशक्तः करणे सदाचारं लभेद्बुधः ॥ एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम् । सर्वस्य जगतो मूलमाचारं जगृहुः परम् ॥ **आपस्तम्बः**-सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखम् । इति । **योगयाज्ञवल्क्यः**-वर्णाश्रमोक्तं कर्मैव विध्युक्तं कामपूर्वकम् । येन यत्क्रियते गार्गि बन्धस्तस्य करे स्थितः ॥ वर्णाश्रमोक्तं यः कुर्याद्विध्युक्तं कामवर्जितम् । विधिवत्कुर्वतस्तस्य मुक्तिर्गार्गि करे स्थिता ॥ चतुर्णामाश्रमस्थानामहन्यहनि नित्यशः । विध्युक्तं कर्म कर्तव्यं कामसंकल्पवर्जितम् ॥ **विष्णुपुराणे**-*न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे । न हरति* न च हन्ति किंचिदुच्चैः सितमनसं तमवेहि विष्णुभक्तम् ॥ **मनुः**-वर्णाश्रमपरिभ्रष्टः पतितः परिकीर्तितः । तस्मात्सर्वप्रयत्नेन वर्णधर्मं समाचरेत् ॥ **पराशरः**-वर्णाश्रमोक्तं कर्मैव यो न कुर्याद्द्विजाधमः । स याति नरकान् घोरान् सागोलीं योनिमाप्नुयात् ॥ **वसिष्ठः**-वर्णाश्रमाचारयुतो वेदहीनोपि वै द्विजः । स याति ब्रह्मणः स्थानं न चेहाजायते पुनः ॥ ब्रह्मेति भगवान् देवो हरिर्नारायणः स्मृतः । **हारीतः**-वर्णानामाश्रमाणां च यत्कर्तव्यं पुरातनम् । कर्म यः कुरुते नित्यं स याति परमां गतिम् ॥ **दक्षः**-न कर्तव्यो न कर्तव्यः कर्मलोपो द्विजन्मना । लुप्यते येन विप्रेण स याति नरकायुतम् ॥ **शातातपः**-नैमित्तिकानि नित्यानि यो न कुर्याद्द्विजाधमः । स याति नरकं घोरं कालसूत्रमवाक्छिराः ॥ **कात्यायनः**-नित्यं नैमित्तिकं कर्म यो दूषयति मूढधीः । अहं तु न विजानामि कां कां योनिं स गच्छति ॥ **यमः**-वेदोदितानि नित्यानि कर्माणि न करोति यः । स श्वत्वं सूकरत्वं च गर्दभत्वं च गच्छ-

ने ॥ शक्त्यभावाच्च यो विप्रः कर्मैतच्छ्रावयेद्यदि । कर्तुमिति शेषः । बृहस्पतिः–दोदितानि कर्माणि न करोति दिने दिने । चाण्डालीं योनिमाप्नोति श्वयोनिषु च ायते ॥ इति । मनुः–वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः । तद्धि कुर्वन् थाशक्ति प्राप्नोति परमां गतिम् ॥




कृत्याकृत्यविवेकदं श्रुतिशतज्ञेयार्थगर्भं सता-
माचारक्रमबोधकं भ्रमतमोविध्वंसचन्द्रोदयम् ॥
त्रैवर्गार्थहितप्रकाशकमिमं युष्मन्मुदे मत्कृतं ।
सन्तो निर्मदमत्सराः कलयत स्मृत्यादिरत्नाकरम् ॥ १ ॥

इति श्रीहारीतकुलतिलकस्य सरस्वतीवल्लभपौत्रस्य श्रीरङ्गनाथार्यपुत्रस्य वैदिकसार्वभौमापरनामधेयस्य श्रीवेंकटनाथस्य कृतिषु स्मृतिरत्नाकरो नाम स्मृतिसंग्रहः समाप्तः ।

---





इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मजेन गंगाविष्णुना स्वकीये " लक्ष्मीवेंकटेश्वर " मुद्रणालये मुद्रयित्वा प्रकाशितम् । संवत् १९५५, शके १८२०.